# श्रीचारुदेवशास्त्र्यभिनन्दनग्रन्थः

सोऽयं

हायनपञ्चसप्ततिपूर्तौ पण्डितप्रवेकाय श्रीचारुदेवशास्त्रिणे सुहृद्भिः
प्रणयेन प्रश्रयेण चोपायनीकृतः ।

श्रीचारुदेवशास्त्र्यभिनन्दनग्रन्थसमितिः
दिल्ली

# निवेदना

इन्दुमुनिनिधीन्दुवत्सरे ख्रिस्तीयेऽप्रेलमासि धीरियमुदपादि सुहृदां केषाञ्चिच्चेतसि पण्डिततल्लजाः श्रीचारुदेवशास्त्रिणोऽभिनन्दनग्रन्थेन सत्क्रियन्तामिति । पण्डितप्रवेका इमेऽस्मिन्त्संवत्सरे पञ्चसप्ततिमब्दान् वयसः पूरयन्तीत्यवसरो ऽयमुत्सवेनाभिनन्दनग्रन्थार्पणलक्षणेनाभिनन्दनीय इति । तदुद्दिश्य सम्पादकसमितिरेकाऽक्लृपि । एवमध्यवसिताऽपीयं समितिर्येन केनाऽप्यपदेशेनापेक्षितं कार्यजातं साग्रायामतीतायां समायामपि नाशकत्प्रक्रमितुम् । ततोऽग्रिमे वत्सरे मईमासोपक्रमे स्वदेशजा विदेशजाश्च संस्कृतं विद्वांसः सम्प्रार्थ्यन्त यथास्वमभिरुचीरनुरुध्य संस्कृतानुबन्धिनं विषयमधिकृत्य गवेषणागर्भान् विवेचनाञ्चितान्निबन्धान्निबध्य समितिम्प्रति प्रेरयेयुरिति । जूनमासेऽनतिक्रान्त एवेतस्ततो वेगेनाभ्यागन्तुमारभन्त निबन्धाः । आ सिताम्बरमासान्ताद् विंशं शतं निबन्धाः १६२५ मितानि हस्तलिखितपत्रपार्श्वानि व्याप्नुवन्तो हस्तगता अभूवन् । सैषा महीयसी निबन्धसंख्या सुदूरमुत्सर्पिणीरप्यत्यगात्सम्भावनाः समित्याः । इदानीं चिन्ताचमीत्समितिं महता कालेन महता च द्रव्यविनियोगेन साध्यप्रकाशनोऽयं विपुलः संग्रहः कथं नु निखिलेन प्राकाश्यं यास्यतीति । कथं कथमपि दुष्करस्यास्य कर्मणः क्षमाऽभूत्समितिरिति हर्षस्यानल्पस्य विषयः ।

प्रक्रान्ते मुद्रण एतदन्वभावि समित्याऽनितरसाधारणतया बृंहीयानयं ग्रन्थः स्यादिति द्वेधाऽयं विभज्यतामिति च निरचायि । तेन भाषाभेदमाधृत्याभिनन्दनग्रन्थो विभक्तः । प्रथमो भाग आङ्ग्लीनिबद्धोऽभूत्, द्वितीयश्च संस्कृत-हिन्दीनिबद्धः । नेत्रमुनिनिधीन्दुसंवत्सरे सिताम्बरे मासे मुद्रणं प्रारभ्यत, परं सस्वराणि सीसकाक्षराणि मुद्रणमभ्युपगतवति मुद्रणालये (अन्यत्रापि देहल्यां) नासन्निति तदुपलम्भस्य कृते व्याक्षिप्यत मुद्रणं कञ्चिदनेहसम् । कारणान्तराण्यपि कार्यप्रसरेऽन्तरायन्निति नवाम्बरे मास्येवानायितेषु सस्वरमुद्राक्षरेषु विहतेषु च विघ्नेषु पुनः प्रावृतन्मुद्रणम् ।

अद्य वर्षमुपक्रान्तमुद्रणस्य ग्रन्थस्य । नैतावतः कालादर्वागक्षरयोजककृतिसंशोधनं प्रचिकाशयिषितनिबन्धपरिष्करणं चेति द्वयं शक्यमुपपादयितुम् । यत्सत्यमेतावता कालेन चित्रीयाकरो महतोस्य समारम्भस्यापवर्गः । संशोध्यानि मुद्रणपत्राणि विश्वेभ्यो निबन्धृभ्यो नाशक्यन्त प्रहेतुम् । प्राहेष्यन्त चेत्प्रकाशनमस्य ग्रन्थस्य भूयसाऽचिरायिष्यत । मुद्रणाशुद्धिशोधनमिहैव महताभियोगेन समपादीति परं परितु-

ष्यामः । क्वचिदेव किञ्चित्स्खलनम्मुद्रणविषयमुपलप्स्यत इति परितोक्ष्यन्ति निबन्द्धारः । यैरत्र संशोधनकर्मणि साचिव्यमाचरितं तान्सर्वान्धन्यान्वदामः । यैश्च सुकृतिभिः कृतिभिः स्वाभिः कृतिभिर्ग्रन्थोऽयं मण्डितस्तेषां समेषां सुतरामधमर्णा वयं समितिसदस्याः । इयं हि तेषां कृत्युपहृतिरधिकपञ्चाशान्हायनाद् ज्ञानप्रदीपार्चिषा विद्वल्लोकं समुद्भासयत्सु सत्सु श्रीचारुदेवशास्त्रिषु स्नेहसमादरयोरभिव्यञ्जिकेति मन्महे इति नम्रं निवेदयति

सम्पादकसमित्यायोजकः
सत्यव्रतशास्त्री ।

# विषयानुक्रमणिका

## वेदे

## व्याकरणभाषाविज्ञानयोः

दर्शने

## साहित्ये

# आचार्य-श्रीमच्-चारुदेव-शास्त्रि-प्रशस्तिः

**सुनीतिकुमार चाटुर्ज्या**

या वाग् देवमता ऋतं च भरति प्रज्ञोज्ज्वला मञ्जुला
आर्याणामभवत् स्वजाति-निहितं रिक्थं च पैतामहम् ।
यस्या नीडमभूच्च पञ्चनदभूः सा प्रागुदीच्यां दिशि
कालात् शक्तिमती स्व एव निलये हा विस्मृताभूज्जनैः ॥१॥

आर्या वाग् नवजीवनं पुनरपि प्राप्नोद्धि देवेच्छया—
मूलं कारणमत्र वेदविषये देशे नवीनाग्रहः ।
वेदाद्यध्ययने ह्यभूदिह दयानन्दो नवो वै गुरुः—
औदीच्ये जनजीवनेऽलभत च स्थानं स्वकं संस्कृतम् ॥२॥

म्लेच्छ-प्रभाव-जनितं ननु पारसीक्या:
स्थाम प्रधानमभवद्—विवशार्यभाषा ।
नो दृश्यते रुचिरथेह तु देववाचि,
जातस्ततोऽभिनव-पाणिनि-चारुदेवः ॥३॥

भाषाद्वयेऽर्जुनवदास स सव्यसाची—
पारस्य-वाक् प्रथममेव सुखं गृहीता ।
पारस्य-वाचि रुचिरास—न संस्कृते प्राक्;
तस्मै ददौ निजकृपां वरदा तु वाणी ॥४॥

देशः पञ्चनदो नाम दिश्युदीच्यां सुविश्रुतः ।
तस्मिन् देशे प्रकाशोऽभूद् वेदशास्त्रस्य भारते ॥५॥

देवभाषाश्रिता विद्या दिशि तस्यां पुरातनी ।
प्रचचार, बभूवायं येन देशः स्तुतो भुवि ॥६॥

उदीच्य-देश-जातास्ते ऋषयो मन्त्रदर्शिनः ।
प्रातिशाख्यकराश्चान्ये तथा यास्कश्च पाणिनिः ॥७॥

देवगीर्यैर्महाप्राज्ञैर्व्याख्या-सूत्रैः प्रकाशिता ।
आर्षेयो मन्त्रसंघातः संहितासु निवेशितः ॥८॥

अष्टादश-पुराणानि संगृहीतानि येन च ।
महाभारतकृद् व्यासो नैमिषस्थो महाकविः ॥९॥

तक्षशिला-पुरे काव्यमितिहासमयं जगौ ।
महर्षिर्वै मध्यदेश्यो गङ्गा-द्वीप-समुद्भवः ।।१०।।

उदीच्य-भूमिरासीद् वै संस्कृतस्य निकेतनम् ।
तथाहि मध्यदेशश्च आर्य-संस्कृति-धारकः ।।११।।

दुर्भाग्यादथ देशौ द्वौ म्लेच्छाधीनौ बभूवतुः ।
आर्य-धर्म-विलोपोऽभूत् तस्येदं विषमं फलम् ।।१२।।

संस्कृतं लोपमायासीच् चरणे मनने समम् ।
प्रजासु ह्येव घोरेऽस्मिन्नापत्काले समागते ।।१३।।

अवतीर्णा हि शैक्षाणां गुरवो नानकादयः ।
अन्यत्र भारते वर्षे चैतन्यः शंकरस्तथा ।।१४।।

बहवो धर्मनेतारो देशिकाः पालकाश्च ह ।
तुलसिश्चैकनाथश्च आर्यधर्मस्य रक्षकाः ।।१५।।

उदीच्येषु तदा छात्राः कुमारा युवकास्तथा ।
गतानुगत-भावेन न पठन्ति स्म संस्कृतम् ।।१६।।

सद्भावेन जनाः सर्वे ये चासन्नार्यधर्मिणः ।
आकृष्य पारसीकात्ते नीता वै संस्कृतं प्रति ।।१७।।

म्लेच्छभाषां विहायातश् चारुदेवो युवा सुधीः ।
संस्कृते स्थिर-निष्ठोऽभूत् स्वगुरोराग्रहात् शुभात् ।।१८।।

आर्षशास्त्रेषु सश्रद्धः श्रमेण परिषेवया ।
संजातश्चारुदेवोऽयं बहुशास्त्रेषु पण्डितः ।।१९।।

अलङ्कारे तथा काव्ये वेद-वेदान्त-दर्शने ।
प्राज्ञश्चाभूदनूचानो वाक्शास्त्रे पाणिनिर्यथा ।।२०।।

काव्ये व्याकरणे तेन पुस्तकं मौलिकं बहु ।
कृतं बाल-प्रबोधाय मोदाय च विपश्चिताम् ।।२१।।

बाल्यादासीत् पटुत्वं वै पारस्याः पठने भृशम् ।
आंग्ल-शार्मण्य-भाषे च हेलयाऽधिकृते द्विके ।।२२।।

वाराणस्यामधीयान आचार्यपदमाप्तवान् ।
आंध्रे कर्णाटके चैव द्रमिडे केरलेऽकरोत् ।।२३।।

परिभ्रम्यार्षविद्यायाः प्रचारं संस्कृतेन सः ।
बहुषु ज्ञानपीठेष्वाचार्य आसीत् सुपूजितः ।।२४।।

अतन्द्र-मनसैवं वै संस्कृतस्य प्रसारणे ।
यत् कृतं चारुदेवेन गुरुश्रेष्ठेन शास्त्रिणा ॥२५॥

तत्कृते प्रोच्चसम्मानं तस्मै राष्ट्रपतिर्ददौ ।
विद्वत्तायाः परा काष्ठा चारुदेवे हि दृश्यते ॥२६॥

पुण्यात्मत्वं तथा ह्यस्य पुत्रेणैव प्रमाणितम् ।
सत्यव्रतेन वै तस्य पुत्ररत्नेन धीमता ॥२७॥

विद्यया विनयेनापि काव्यशक्त्या तथा धिया ।
प्रतिष्ठा येन संप्राप्ता बहुविज्ञेषु सर्वदा ॥२८॥

आचार्यश्चारुदेवो नो वरेण्यश्च सुपुत्रवान् ।
ससुखं च ससम्मानं जीवत्वसौ शतं समाः ॥२९॥

सुनीतिशर्मणा नित्यं प्रार्थनेयं निवेद्यते ।
काश्यपान्वयजातेन हरिदासात्मजेन च ।
श्रद्धाविनीत-चित्तेन कालीक्षेत्र-निवासिना ॥३०॥

॥ इति शुभम् ॥

# अभिनन्दन-सप्तपर्णी

खिस्ते बटुकनाथशास्त्री

१

वागीश्वरीपदसरोजपरागपूर-
सम्मार्जनादिव विनिर्मलतामुपेते ।
यस्यान्तरङ्गमुकुरे प्रतिबिम्बितश्रीः
शब्दार्णवः शितधियां प्रमदं तनोति ॥

२

यः पाणिनीयनलिनीमकरन्दविन्दु-
सन्धारणाय भुवि नूतनगन्धवाहः ।
दिक्सुन्दरीरविरलैरुदितैः समन्ताद्
व्याख्यापरीमलभरैः सुरभी करोति ॥

३

यस्यानिशं विविधसूत्रविचारवीचि-
व्यावल्गितो लसति मानसराजहंसः ।
वैपश्चितीवसुमतीपतिरेक एव
संराजते निजगुणैरिह चारुदेवः ॥

४

शब्दोपपादनविधौ प्रविधौतबुद्धेः
श्रद्धासमिद्धविमलाध्ययनक्रमस्य ।
श्रीचारुदेवविदुषस्तुलनापदव्यां
धत्ते पदं न धिषणो धिषणोन्नतोऽपि ॥

५

शैलूषपङ्क्तिरिव पाणिनिसूत्रमाला
यत्प्रेरिताऽभिनवरूपवती पुरस्तात् ।
विद्वत्कुलस्य नटतीव मनोरमार्था
तस्याऽभिनन्दनमुदेतु मुदे जनानाम् ॥

६

आबाल्यतोऽनुदिवसं गुरुसन्निधानाद्  
अन्तःसमुन्मिषितमञ्जुलबुद्धिदीपः ।  
मार्गान् प्रकाशयति यो विषमान् प्रकामं  
सोऽयं विभातु मतिमानतिमानकीर्तिः ।।

७

सत्यव्रताहितमतेः शरदिन्दुकीर्तेः  
सारस्वते पथि कृताऽखिलभद्रपूर्तेः ।  
वीणावती भगवती विदुषोऽस्य भूया-  
न्निर्विघ्न-जीवन-पुमर्थविधिप्रवीणा ।।

# पद्यप्रसूनोपहारः

**जगन्नारायणपाण्डेयः**

आबाल्याद् गुरुसन्निधानवशतः प्रोन्मीलितप्रातिभा-
ऽऽलोका लोकसमादृताः सदसतोर्भेदावगाहक्षमाः ।
मान्या मान्यतमा बुधा अपि मुदा गायन्ति नित्यं यशो
यस्यासौ नवपाणिनिर्विजयते श्रीचारुदेवः सुधीः ॥१॥

धन्या धन्यतमा वदान्यचरिताः सन्मार्गबद्धादराः
शब्दब्रह्मकलाविलासलतिकासञ्जीवनाम्भोधराः ।
नित्यं संस्कृतदिव्यभालतिलकोल्लासैकसत्यव्रताः
श्रीमन्तः ! भवतां मुदाऽत्रभवतां सुस्वागतं ब्रूमहे ॥२॥

प्रज्ञा प्राज्ञ ! विलक्षणा च हृदयं हैयङ्गवीनोपमं
कल्याणी वदनाम्बुजे लसति ते वाणी सुधास्यन्दिनी ।
दिव्यं धाम धृतेर्विलासभवनं वाण्या गुणानां निधिः
किं ब्रूमस्तव कीर्तिभिः कुमुदिनीनाथोऽप्यनाथीकृतः ॥३॥

पाण्डित्यमद्भुततरं किल देववाण्यां
सौजन्यमार्यबुधवर्य ! च यद् विभाति ।
नाम्नैव तन्न परमर्थविशेषतोऽपि
प्रायो भवान् सुविदितो भुवि चारुदेवः ॥४॥

वहन् मूर्ध्ना गङ्गामिव शततरङ्गां सुरगवीं
तृतीयां बोधाख्यां दधदिह दृशं चापि समदृक् ।
अहो दिल्ल्यामस्यां विबुधवरिवस्यामुपगतो
गुणैः साक्षाल्लोके शिव इव भवान् राजतितराम् ॥५॥

वाणीं सुधासारमयीं त्वदीयामलङ्कृतां विज्ञ ! मनोज्ञभावैः ।
निशम्य मन्ये त्वयि भागधेयाज्जातः सुवर्णेन सुगन्धयोगः ॥६॥

शुक्लोष्णीषच्छलान्मूर्ध्नि श्वेतपङ्केरुहं वरम् ।
आसनं किं सरस्वत्या धारयन् राजते भवान् ॥७॥

भागधेयेन दिल्ल्यां बुधानां वरो विश्वविद्यालये संस्कृतेऽध्यक्षभाक् ।
प्राच्यपाश्चात्यविद्याब्धिपारङ्गमो मान्यसत्यव्रतस्ते सुतो राजते ॥८॥

ज्ञानेन कान्त्या यशसा श्रिया च श्रीमान् अभिन्नो भवतः किलायम् ।
विभाति लोके महितप्रकाशः प्रवर्तितो दीप इव प्रदीपात् ॥९॥

भूरिश्रमेण भवता रचितं प्रशस्तं यद्ग्रन्थजातमतुलं विदुषां हिताय ।
तेनैव विस्मितधियः सुधियः सहर्षं शंसन्ति कीर्तिमनिशं भवतः सभासु ॥१०॥

हस्तारविन्दयुगले विनिवेदितोऽयं
पुष्पाञ्जलिर्ललितपद्यमयश्चिराय ।
शास्त्राब्धिगाहनविलक्षणमन्दराद्रि-
श्रीचारुदेवबुधवर्यसुखाय भूयात् ॥

## श्रीचारुदेवप्रशस्तिः

**बहादुरचन्द्रश्चापोत्कटः**

शब्दब्रह्मसमुद्रमन्थनचितै रत्नैरिवात्युज्ज्वलैः
सारासारविचारचारुवचनैरावर्जयन् सज्जनान् ।
अद्यानन्दमयीं समाप्य शरदां पञ्चोत्तरां सप्ततिं
श्रीमन् पण्डित चारुदेव सुमते दिष्ट्या भवान् वर्धते ॥१॥

भर्तृहरेर्विख्यातो वाक्यपदीयाभिधोऽस्ति यो ग्रन्थः ।
चारुः सुचारु कृतवांस्तस्यैवोन्मोचयन् ग्रन्थीन् ॥२॥

साक्षाद्भर्तृहरिं तं मन्ये श्रीचारुदेवमहम् ।
तस्यैव यस्य बुद्धिः शास्त्रेष्वव्याहतं क्रमते ॥३॥

सन्नपि वैयाकरणो भर्तृहरिरिवैष कविरस्ति ।
श्रीगान्धिचरितनाम प्रणीतमेनेन यत् काव्यम् ॥४॥

श्रीमतां चारुदेवानां देवानामिव जीवताम् ।
संस्कृता देववाणीयं जीवत्येव समञ्जसम् ॥५॥

धन्या संस्कृतवाणी धन्यास्तस्यामधीतिनः सुतराम् ।
तेषामेष यशस्वान् एकतमश्चारुदेवोऽस्ति ॥६॥

# जयताच्चारुदेवोऽयम्

भवानीशङ्करत्रिवेदः

चैतन्यं चिन्वतो मेऽद्य चिन्मरिन्द चिचीषतः ।
चञ्चरीकायते चेतो यच्चारुचरणाब्जयोः ॥१॥

चतुर्विद्याचणाचार्यचातुरीचन्द्रिकाचितः ।
चारुवाक् चारुविद्यश्च चारुदेवश्चकास्त्ययम् ॥२॥

शास्त्राणां पारःश्वाप्तकामः सर्वत्र वन्दितः ।
जयताच्चारुदेवोऽयं गुरूणामग्रणीर्गुरुः ॥३॥

व्याकरणं विधायाप्तं चन्द्रोदयमिवाब्धिजम् ।
अतिशेते द्युतिं चान्द्रीं प्रज्ञासूर्य इवापरः ॥४॥

वेदभूस्सप्तसिन्धूनां पञ्चापः प्रथिताधुना ।
शुतुद्र्याश्च विपाशाया अन्तर्वेदोऽत्र राजते ॥५॥

तत्रत्ये मण्डले रम्ये होशियारपुराभिधे ।
पुत्रः श्रीरामकृष्णस्य जातोऽह्नियापुरे शुभे ॥६॥

छात्रश्चरणदासोऽयं चारुदेवाभिधो बुधः ।
अनेकग्रन्थनिर्माता नानाभाषाविचक्षणः ॥७॥

सामान्येऽपि गृहे जातो दीप्तोऽसामान्यमेधया ।
त्रिवर्गं स्वश्रमेणाप्य चतुर्थाय प्रयत्नवान् ॥८॥

विज्ञो वदान्यो वाग्मी च वेदवेदाङ्गवित्तमः ।
व्याप्त्यर्थं वेदविद्याया विश्वविद्यालयेषु वै ॥९॥

द्व्ययुतं चैव मुद्राणां स्थापयित्वा महानिधिम् ।
विद्यार्थदानशौण्डोऽयं छात्रोत्साहमवर्धयत् ॥१०॥

उषसा भ्राजमानो हि ज्ञानभानुरिवोदितः ।
सत्यव्रतोऽनुरूपाख्यो विधेयोऽस्य सुतस्सुधीः ॥११॥

विभाविभवसम्पन्नस्सौम्यस्सर्वप्रियोऽनघः ।
विद्याविज्ञानवृद्धोऽपि वयसा वर्चसा युवा ॥१२॥

विश्वविद्यालये दिल्ल्यां राजधान्यामुदारधीः ।
अध्यक्षपदमध्यास्ते विभागे संस्कृतस्य यः ।।१३।।

रामं सत्यव्रतं चारुदेवो दशरथस्सुतम् ।
प्रज्ञाप्रभाप्रदीप्ताशं प्राप्य प्रीतिं परामगात् ।।१४।।

प्रोद्यत्पुण्यप्रभोपेतस्नुषोषो-भासिताजिरः ।
सकलेन नवेनापि शरच्चन्द्रेण भासुरः ।।१५।।

बालेन्दुशुभ्रसौधोऽस्ति सुरभिर्यशसाऽस्य यः ।
तत्रस्थोऽयं महाभागः क्षेत्रसंन्यासमास्थितः ।।१६।।

स्वाध्यायाचरणज्ञान-प्रचारणपरायणः ।
दानेज्याप्रणिधानादिब्रह्मकर्मण्यतन्द्रितः ।।१७।।

विद्वांसं श्रीयुतं चारुदेवं दृष्ट्वा मतिर्मम ।
सरस्वतीश्रियौ वैरं त्यक्त्वाऽस्मिन्वसतो ध्रुवम् ।।१८।।

वर्षीयसोऽपि यूनोऽस्य वयं कुर्मोऽभिनन्दनम् ।
आरोग्यौजोयशश्चारुदेवो जीव्याच्छतं समाः ।।१९।।

प्रशस्तिर्विंशतिः श्रीमच्चारुदेवस्य शास्त्रिणः ।
भवानीशङ्करेणोक्ता त्रिवेदेनातिश्रद्धया ।।२०।।

## "सदाचारदेवः सदा चारुदेवः"

राजमणिपाण्डेयः

श्रुतिः सा स्मृतिः सा कृतिः पाणिनीया
वरेण्याथ वाणी हि रामायणी सा ।
महाभारतीया महाभारती या
शुभा भाति धीरे शिवे चारुदेवे ॥१॥

कवित्वं विचित्रं चमत्कारि नित्यं
गुणैस्तै रसैस्तैरुदारैर्विशिष्टम् ।
नवैर्वस्तुजातैर्नवं मञ्जुलं वै
शुभं भाति धीरे शिवे चारुदेवे ॥२॥

स धर्मो धृतो येन सर्वो हि लोकः
मितैस्तैः स्मितैस्तैः कृतैराहतैस्तैः ।
सुपुण्यैरगण्यैरशेषैर्विशेषैः
शुभो भाति धीरे शिवे चारुदेवे ॥३॥

स्मरो भस्मतां याति बोधेन येन
त्रिनेत्रस्तृतीयेन नेत्रेण तेन ।
विधाता स वाण्या स विष्णुश्च लक्ष्म्या
सदाचारदेवः सदा चारुदेवः ॥४॥

ओम्

# ॥ श्री चारुदेव-प्रशस्तिः ॥

**यज्ञेश्वरशर्मा**

(१)

यः सारस्वत-वैभवेन, धनवान् शब्दौघसिन्धुर्महान्
स्तुत्यो बुद्धिमतामशेषसुधियां यः सम्मतः सर्वदा।
यस्य स्वागत-कामना हृदि शुभे, जागर्ति विद्यावताम्,
सोऽयं प्राज्ञवरो विभाति सततं श्रीचारुदेवः सुधीः ॥

(२)

वृद्धत्वात्किल तान्ततान्तमपि यो गात्रं नियुङ्क्ते श्रमे
अस्वस्थोऽपि कृशोऽपि तत्त्वविचयान्नैवोपयाति क्लमम्।
हस्तेन स्वयमेव चारु लिखति स्वीयान् विचारान् मुदा
स्तौमि प्राज्ञवरं गुणाढ्यमनिशं तं चारुदेवाभिधम् ॥

(३)

दैवीं वाचमुपासते हि बहवः, सारं तु सारस्वतं,
एको वेत्ति परन्तु सूक्ष्ममतिमान् श्री चारुदेवो गुणी।
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥

(४)

गुणप्रियं यं स्वयमेव सर्वा उपस्थिताः प्राक्तनजन्मविद्याः।
यो व्याकृतौ पाणिनिरेव साक्षाद् धन्यः स वन्द्यः खलु चारुदेवः ॥

(५)

यद्दर्शनेन मुदिता अखिला गुणज्ञा, यत् पाठनेन मुदिता बहवो विनेयाः।
वाणी च नन्दति भृशं यमवाप्य विज्ञं, जीव्याच्चिरं स भुवने बुधचारुदेवः ॥

(६)

शास्त्रौघगूढार्थविकाशनाय वैदुष्यसंमानविवर्धनाय ।
विपर्ययज्ञानविनोदनाय यदीयसाहित्यकृतेः प्रवृत्तिः ॥

(७)

यः सत्प्रबन्धैरभिभाषणैश्च, सुभव्यभावैकक्रृतप्रचारः ।
पदे पदे लोकमलौकिकीभिः स्ववाग्भिरुद्वोधयति प्रबुद्धः ॥

(८)

चारुता वदने वाण्यां, नहि नाम्न्येव केवलम् ।
आचारे व्यवहारे च, सर्वत्रैवास्य चारुता ॥

(९)

पद्यपुष्पाञ्जलिः श्रीमन् भवतां पाणि-पद्मयोः ।
मया यज्ञेश्वरेणैष प्राभृतीक्रियतेऽधुना ॥



श्रीचारुदेवशास्त्री समं कुटुम्बेन संराजमानः ।

# कश्चारुदेवादपरो मनस्वी

सुरेन्द्रनारायणत्रिपाठी

वाणी पीयूषकल्पा श्रुतिविषयगुणा, शब्दशास्त्रानुशिष्टा,
वेषः शिष्टानुजुष्टो धवलपटयुतः सौम्यशान्तः स्वभावः ।
मार्गो देवानुगीतो मुनिजनसुमतः सर्वशास्त्रानुकूलः,
विद्यन्ते कस्य लोके वदत बुधवराश्चारुदेवात्परस्य ? ।।१।।

शब्दाशब्दविवेकसम्मतपथे वाक्यप्रदीपे कृती,
प्रस्तावाब्धिविवृद्धभाष्यगगने पूर्णो हि चन्द्रोदयः ।
नित्यं लेखपरायणः सुकृतिनां मध्ये च भास्वानिव,
ग्रन्थग्रन्थिविभेदनैककुशलः कश्चारुदेवात्परः ? ।।२।।

विद्वांसः सन्त्यनेके प्रवचनपटवः सर्वशास्त्रे नदीष्णाः,
वेदे वादे विवादे स्वमतसुकथने गर्वमाख्यापयन्तः ।
स्वार्थैकान्तप्रवीणाः परहितविमुखाश्छिद्रदर्शा नितान्तम्
भावे वै मानवीये सुजनजनपरश्चारुदेवात्परः कः ? ।।३।।

काणादे गौतमीये बुधवरवशगे शब्दशास्त्रे च जिष्णुः
साहित्ये जैमिनीये प्रवचननिपुणो ब्रह्मवादे भविष्णुः ।
नानाग्रन्थेऽनिवार्यो निखिलबुधवरः सर्वशिष्योपकर्ता,
देवैर्वेद्ये सुवेदे मृदुलकृतिपरः चारुदेवात्परः कः ? ।।४।।

यद् ध्वान्तं बहुभिर्न चण्डकिरणैः सूर्यो विहन्तुं क्षमो,
नैवान्ये प्रभवन्ति धीरधिषणा ब्रह्मादिदेवा वराः ।
यद्यज्ञैर्विहितैरथाङ्गसहितैर्योगैश्च नो बाध्यते,
तन्निर्णुद्य विराजते हि नितरां चारुः सुदेवोऽपरः ।।५।।

सुमेधसो नाम विनेयवर्गान् वाण्या च लेखैः सततं प्रचिन्वन् ।
ग्रन्थेषु संशीतिनिवारको वै कश्चारुदेवादपरो मनस्वी ।।६।।

वाचः प्रचाराय स संस्कृतस्य द्रव्यं नियुङ्क्ते प्रविमुक्तहस्तः ।
क्षीणः शरीरेण तथापि नूनं पीनः परं संस्कृतमातुरङ्के ।।७।।

न केवलं यः स्वयमेव विज्ञः पुत्रश्च पौत्रावपि यस्य विज्ञौ ।
आसक्तिहीनोऽपि कलासु सक्तः कश्चारुदेवादपरो मनस्वी ॥८॥

निसर्गभिन्ने जगतीप्रतीते विसंयुते श्रीश्च सरस्वती च ।
अन्योऽन्यसंरोधिगुणान्विहायाऽविरुद्धभावेन जनेऽत्र सक्ते ॥९॥

वार्धक्यभावेऽपि युवेव शश्वत् क्रियाकलापं विहितं तनोति ।
सांसारिके कार्यविधौ प्रवीणः कश्चारुदेवादपरो मनस्वी ॥१०॥

न केवलं भारतभूमिभागो जातो गरीयान्विदुषा ह्यनेन ।
समस्तलोकोऽपि वरेण्यभावम्, आप्तो हि नून सुदृढा मतिर्मे ॥११॥

शार्दूलविक्रीडितं नाम

# श्रीचारुदेवशास्त्रिचरितामृतम्

(खण्डकाव्यम्)

अमीरचन्द्रशास्त्री

अवतरणिका—

जाने ज्ञाननिधेरगण्यगुणतामाप्तस्य विद्यावतो
गाथां गातुमियं व्यवस्यति मुधा मुग्धाद्य मे भारती ।
किन्त्वेषा चपला स्वजन्म सफलीकर्तुं समर्था भवे-
दित्यस्मादपरं न मेऽभिलषितं किञ्चित्क्वचित्कर्हिचित् ॥१॥

स्तोतव्यास्तु पदे पदेऽत्र निहिता दैवेन देवोपमा
धर्मेऽर्थे परमां धियं निदधते कामेऽथ मोक्षेऽपि ये ।
किन्त्वेषां श्रुतिगेयविक्रमभृतां स्वार्थोद्यतानां स्तवै-
र्नन्तिस्तुष्यति नस्तथा स्तवकृतां विश्वोपकर्तुर्यथा ॥२॥

आस्ते कश्चन मण्डनः स विदुषो यन्मण्डयत्यञ्जसा
तत्सख्यादभिनन्दयामि सततं तानेष गुम्फैर्गिराम् ।
एतेनाखिलसद्गुणस्तुतिजुषा खिन्नैः स्वभावेन मे
सन्मित्रैरभिनन्दनोऽयमिति मे संज्ञा रहो भाष्यते ॥३॥

किन्त्वस्मिन् स्तुतिबन्धने न सखिता श्रीमण्डनस्यैव मां
प्रायुङ्क्तापि न सा स्वभावपरता वाचं ममानूनुदत् ।
अस्मिन्नस्मि निभालयामि मनसः सन्तर्पणं वस्तुतो
दृष्ट्वा दृप्यति सर्व एव सुभगम्मन्यो जनो दर्पणम् ॥४॥

शान्तः क्रान्तिकरः कविः सहृदयो विद्वान् स्वतन्त्रः सदा
शास्त्रालोकनतत्परो विरचयंस्तन्नूतनं नूतनम् ।
आचारे परमोऽपरिग्रहरुचिर्दानी च मानी भृशं
किन्नादर्शतया स्थितोऽस्ति विदुषां श्रीचारुदेवः स्वयम् ॥५॥

नूनं संस्कृतपण्डिताः प्रतिदिनं संवर्धमाना अपि
द्रव्यैश्चापि पदैः समादरभरं चावाप्यमाना अपि ।
त्यक्ताध्यापनलेखनाः किल मिथो रागादिना दूषिता
अत्रादर्शतले भवन्ति विमला इत्येष यत्नः श्रितः ॥६॥

पित्रोरस्तु न वैदुषी न च यशो नाप्यस्तु तद्वैभवं,
पुत्रस्तत्सकलं समर्जयति चेत्तेनैव तौ पुत्रिणौ ।
सोऽयं चेन्निजपुत्रपौत्रविषयान् कुर्यादिहोक्तान् गुणान्,
पुत्रस्तेन भवत्यहो स पितृमान् पौत्रः पितामह्यसौ ॥७॥

एतत्सर्वमिहावलोक्य विदुषाङ्गर्वेऽतिविज्ञे स्थितं
चेतश्चञ्चलतामवाप्य चपलां वाचं ममाचूचुदत् ।
सा चैतच्चरितामृतेन जडतां दूरीकरोत्वञ्जसे-
त्यालम्बि प्रबलः समस्तजनताक्षेमाय यत्नो मया ॥८॥

अथारम्भः—

अस्ति स्वस्तिमयें मयेन रचिते पञ्चाम्बुदेशस्फुर-
त्कौशल्ये त्रिदमर्थके जनपदे होश्यारसंज्ञे पुरे ।
तत्रैवास्त्यहियापुरं निजरुचाहीनां भुवो जित्वरं
त्रेताद्वापरयोः प्रभुः कलियुगे यत्राभवद् भावुकः ॥९॥

सोऽयं गोद्विजदेवसाधुसुखदः श्रीरामकृष्णाख्यया
विख्यातः स्वगुणैः क्रियाभिरपि तं लोकेऽनुगच्छन्नभूत् ।
सद्बन्धुत्रितये स चाद्भुततमोऽभून्मध्यमोऽप्युत्तमः
सद्बुद्धया यशसा श्रियानुगतया श्रीरामकृष्णोपमः ॥१०॥

पाठं पाठमिदं जगद् दृषदिवागाज्जाड्यमेवेत्ययं
शीलेत्यक्षरयुग्मपाठमपठद्यत् सर्वविद्याफलम् ।
तस्यानन्ततपःपवित्रमनसः पुण्योच्चयानामयं
कल्याणः परिणाम एव मतिमान् श्रीचारुदेवोऽभवत् ॥११॥

संस्कारैः स पुरातनैः प्रतिफलद्विज्ञानकान्त्या मुखे
स्वान्तस्थापितवस्तुबोधममलं प्राकाशयज्जन्मतः ।
मात्रा शिक्षितशिष्टपद्धतिरथो पित्रोपदिष्टोचिता-
चारः कस्य चमत्कृतिं न कृतवान् बालोऽपि वृद्धो यथा ॥१२॥

प्रारब्धां स्वपुरेऽभ्यवीवृधदयं शिक्षां तु जालन्धरे
प्राप्तुं स्नातकतामगाल्लवपुरं यन्नैकशालामयम् ।
तत्राचार्यपदेन हेमपदकैः सम्भावितेनोल्लसन्
शास्त्री सोऽयमभूदशेषविदुषामानन्दकन्दाङ्कुरः ॥१३॥

विंशत्या प्रमिता निषेव्य शरदः श्रीशारदां शिक्षणैः
सत्कीर्तिः प्रथितात्र तत्र परितः सर्वत्र काप्युज्ज्वला ॥
दैवाद्देशविभाजनेन विधुते तस्मिन्पुरेऽम्बालिका-
ऽऽवासे वासमरोचयन्मतिमतामग्र्यः कृतज्ञाग्रणीः ॥१४॥

यस्याः सम्पदि जीवितं, जितमहो, विक्रीडितं, नन्दितं,
तस्या आपदि वैमुखी ध्रुवमियं स्यादेव घोरांहसे ।
इत्यन्तर्विमृशन् विवेककुशलः संस्थां पुराणीं श्रयेत्,
स्वार्थान्धस्तु विमूढधीः परिहरेदम्बामुदारामपि ।।१५।।

तस्मात्तां कतिचित्समाः पुनरयं डी० ए० वि० कालेजकां
संसेव्याशु यशांस्यनीनयदविम्लानाब्जसौरभ्यवत् ।
गान्धीस्मारकराष्ट्रियेतिविदिते चात्रैव विद्यालये
ऽधादध्यापकतामथाब्दयुगल गान्धीकथालेखकः ।।१६।।

पुत्रे श्रीमति हंसराजकलितं कालेजमध्यापय-
त्यम्बालानगरादुपेत्य सुधिया दिल्ली समध्यासिता ।
अत्र स्नातकतोत्तरासु विदुषा सद्विश्वविद्यालया-
धीनेऽध्यापितमप्यभूदभिनवे कैम्पाख्यकालेजके ।।१७।।

मध्ये वैदिकशोधकार्यविधये वैश्वेश्वरानन्दके,
संस्थाने विगतं, यथेच्छमुषितं, प्रत्यागतं चादरात् ।
अध्येतुञ्च गतामुना प्रवयसा वाराणसी नैकशो,
विद्योपार्जनमीक्षते नहि वयो नाप्यर्जितां वैदुषीम् ।।१८।।

अस्मादध्ययनात्मकव्यसनतो भाषास्तु वैदेशिकी-
रध्येषोऽध्यगमत्तरां बहुविधास्ता भारतीया अपि ।
हिन्द्यां पञ्चनदीयवाचि निपुणो जानन् महाराष्ट्रियां
ताञ्चेमां मलयालमेति विदितामप्येष वेद स्वयम् ।।१९।।

आङ्ग्लीं पारमरूसजर्मनगिरश्चायं विजानाति यद्,
यच्च स्नातकतां स जर्मनगिरि प्राप्तो, निवृत्तिं गतः ।
नैतच्चित्रमनेकजर्मनकथाः संस्कृत्रिमायां गिरि
स्वेनैवान्ववदत्तु हासविमुखीभूपालकन्यादिकाः ।।२०।।

एतद्वै निपुणं विचित्रमिह वो भायाद्यदेष क्वचित्
कस्माच्चिच्च गुरोर्न संस्कृतगिरं किञ्चित्किलाशिक्षत ।
नासीच्छिक्षितकोऽस्य शीलगुणवान् श्रीरामकृष्णः पिता
तद्वन्नात्र पपाठ साहिबदयालुस्तस्य सोऽप्यग्रजः ।।२१।।

बन्धुर्मेहरचन्द्रजौलिरपि न प्राप्तोऽस्य शिक्षां परां
नैवाप्ता भगिनी मनागपि च तामित्याकुलेऽस्मिन्कुले ।
एकोऽयं समभूत्सुशिक्षिततमश्चाप्यद्वितीयो बुधो,
विद्या पैतृकसम्पदा सह कदा केनात्र लब्धा क्वचित् ।।२२।।

पूर्वंस्मिन्खलु जन्मनीयमधिकं संसेविता सादरं
प्राप्नोत्यत्र पुमांसमित्यवितथं गीतासु कृष्णोदितम् ।
संयोगं किल पौर्वदेहिकमयं तं बौद्धिकं त्वीयिवान्
सिद्धिं कामपि विन्दतीह पुरुषः सच्चेष्टमानोऽञ्जसा ॥२३॥

विद्यानां मुखतां भजत्यविरतं या शब्दविद्या श्रुतौ
तां प्राप्तस्त्वनधीतसंस्कृतकुले जातोऽपि विद्वत्तमः ।
नैतद्विस्मयकारणं मतिमतां त्वेतत्किलाश्चर्यकृद्
यत्तस्यां निपुणो जगत्स्वभिनवः ख्यातोऽभवत्पाणिनिः ॥२४॥

विद्यादानरतोऽपि 'यन्न तृषितैः पेपीयते तद्रसो
यच्चापि क्षुधितैर्न भुज्यत इयं विद्येति' विद्वानयम् ।
सर्वार्थप्रतिपादकं धनमपि प्रादात्सुपात्रेऽधिकं
तच्चैतद् व्यसनं कथाभिरुचितामाभिर्गतं ख्याततताम् ॥२५॥

एम. ए. प्राथमिकत्वहेमपदकं विक्रीतवान्निर्ममः,
कस्मैचित्सुहृदे रुजार्तवपुषे वैरुज्यसंसिद्धये ।
स्वग्रामे समतिष्ठिपत्कमपि यं विद्यालयं स्वव्ययैः
सोऽयं साम्प्रतमुच्चमाध्यमिकतां धत्ते प्रतिष्ठान्विताम् ॥२६॥

एतद्यत्नकृताभ्युपक्रमतया छात्रीजनश्रेयसे
शिक्षाकेन्द्रतया स्थिताः कतिपये विद्यालया जाग्रति ।
येष्वेकस्य निरन्तरं त्रिचतुरानब्दान् ददद् वेतनं
वित्तस्य क्षतिपूर्तिमेष कृतवान् दानप्रवीरः सुधीः ॥२७॥

धीमानेषम एव पञ्चनदगेऽयं विश्वविद्यालये
मुद्राणां दश दत्तवान् दशशतान्यग्र्यार्थिवृत्तिप्रदः ।
श्रीमांस्तत्रभवानथायमियतीर्मुद्रा अदात् पण्डितो
दिल्लीस्थेऽपि नवीनशोधविषये वृत्त्यै प्रिये संस्कृते ॥२८॥

अन्यान् संस्कृतपाठकान् बहुविधास्तत्पाठशाला अपि
द्रव्यं भूरि वितीर्य सोऽयमपुषत्सद्दानशीलः सदा ।
नूनं वाङ्मनसाङ्गकैरुपकृतं येनाभवत्संस्कृतं
हृष्टं पुष्टमथापि जुष्टमभितः स्त्रीभिर्नरैश्चादरात् ॥२९॥

पूर्वे दानमिहावदन् कलियुगे धर्मं सतामुत्तमं
विद्यादानमथावदंश्च मुनयो दानेषु सर्वोत्तमम् ।
विद्याया यदि दानमस्ति महितं, तस्मादपि प्रस्तुतं
विद्यायै ननु दानमित्ययमदाद्विद्वांस्तदर्थं धनम् ॥३०॥

पुण्यैरेभिरमुष्य शिष्टतिलकः सत्यव्रतः पुत्रतां
प्राप्नोतीयमुषाः स्नुषापदमहो वैदुष्यपुष्यन्मनाः ।
ताभ्यां लब्धजनिश्च सम्प्रति शरच्चन्द्रोऽयमुद्द्योतते
विद्वद्भिः सुपरीक्षितोऽतिचकितैर्यो बालशास्त्री स्मृतः ॥३१॥

श्रीसत्यव्रतमस्य सूनुमखिलैर्विद्वद्गुणैः पूरितं
भूयोऽभिष्टुतमप्यमुं मुहुरपि स्तोतुं मनो जृम्भते ।
पुत्रस्तोत्रमहो पितुः प्रियकरं, चित्तद्रुतत्वार्पकं,
सद्यःकीर्तिकरं भवत्यतिशयेनेत्यत्र जाता रुचिः ॥३२॥

भास्वान् वासरमेव तञ्जनयतीमाञ्चापि चन्द्रो निशां,
तत्सिद्धं पितुरेति सन्ततिमियं काचिद् गुणानान्ततिः ।
श्रीसत्यव्रतमेकमेव तनुजं सर्वात्मना पैतृकी
साद्गुण्योच्चयसम्पदेत्य समभूद् दायाधिकारानुगा ॥३३॥

नायं जन्मपितैव तावदभवद् विद्यापिताप्यस्य य-
त्तेनाभूदयमप्यनन्यसदृशो विद्वांस्तथा शीलवान् ।
पृष्टो बालक एव केनचिदसौ यत् 'कुत्र चङ्क्रम्यते ?
प्रत्याह प्रणतः क्षणादु'पवने बम्भ्रम्यतेऽस्मि'न्निति ॥३४॥

प्रष्टा तस्य यङन्तबोधचकितो 'भूयो वदे'त्यैरयत्
तस्याश्चर्यमवर्धयत्प्रतिवदन् 'दन्द्रम्यतेऽत्रे'त्यसौ ।
नैतच्चित्रमिहास्य पाणिनितया ख्यातस्य विद्यावतो-
ऽपत्ये, प्रत्यययोगतः प्रकृतिवत्सार्थक्यसारं श्रिते ॥३५॥

प्राधीते स्म च शब्दशास्त्रमिव यः साहित्यमप्यञ्जसा
पद्यञ्चाप्यनवद्यमेव कुरुते गद्यञ्च यो बालकः ।
आनेतुं जलमेकदा स कथितः पित्रा, व्यलम्बिष्ट य-
द्धेतुं तस्य निरुक्तवान् सपदि तं पद्यैः स आशुः कविः ॥३६॥

तस्मिन्नेव वयस्यसौ षडृतुगं काव्यं नवं सृष्टवान्
नानावृत्तविराजियुग्मकमदोऽखण्डञ्च खण्डं स्थितम् ।
माद्यन्मत्तमयूरतोटकमिदं सत्पुष्पिताग्रान्वितं
सन्नृत्यत्प्रमिताक्षरं प्रविलसच्छार्दूलविक्रीडितम् ॥३७॥

"गुल्मिन्यो विगतप्रभा विटपिनो विष्वग्विलुप्तच्छदा
हिम्येनापि नभस्वता वनभुवां शादाः समुज्जासिताः ।
पद्मिन्यो विरसास्तुषारमथिताः खेदाय नः साम्प्रतं
विश्वस्तेव न भाति हन्त वसुधा शोकेन शीर्णाम्बरा ॥"

इत्याद्यैः सरसैर्नवापि स रसान् षण्णामृतूनां छला-
दास्वाद्यातनुताखिलस्य विदुषां वृन्दस्य यं विस्मयम् ।
सोऽप्यस्यैव विवर्धितो रसमयैः पत्रैस्तु पद्यात्मकैः,
सर्वत्राप्यगमत्प्रवृद्धनदवच्चाप्लावनः पावनः ॥३८॥

लिङ्गस्याथ नपुंसकस्य लिखितं यन्मोक्षदं नाटकं
क्लृप्तञ्चापि बृहत्तरेऽत्र शतकं यद् भारते मञ्जुलम् ।
सृष्टं यत्किल बोधिसत्त्वचरितं साहस्रपद्यं शुभं
नानालङ्कृतिशोभितं तदनलङ्कारं रसास्वादिनाम् ॥३९॥

काव्यं नूत्नमथ प्रणीतममलं गोविन्दसिंहाश्रयं
यन्मानं प्रकटीकरोत्युपनयैः 'साहित्य एकादमी' ।
एतत्सर्वमिहास्य बालकवितामारभ्य रूढं क्रमात्
सूते किञ्चन सन्महाकवितया नव्यञ्च भव्यं यशः ॥४०॥

अन्तः शोधपरः कविर्भवति यद् विद्वान् बहिः शोधकृत्
तेनैतौ पृथगाश्रयाविव गुणौ लोकेषु लोक्यौ जनैः ।
श्रीसत्यव्रतशास्त्रिणं कविवरं विद्वद्वरं ताविमा-
वन्योन्यप्रतियोगिनौ तु भजतो, धत्तो न चित्तेऽन्तरम् ॥४१।

येनाकारि तु बोधिसत्त्वचरितं कारुण्यशीलात्मना,
सोत्साहेन च सन्ततं विरचितो गोविन्दसिंहस्तवः ।
भाषायाश्च विवेचनं प्रविहितं वाल्मीकिरामायणे,
हिन्द्यामप्यनुवाद एष कलितोऽभूद् वैदिकव्याकृतेः ॥४२॥

अन्या अप्यतिधन्यतामुपगता ग्रन्थात्मिका यद्गिर-
स्तं सत्यव्रतमेव वच्मि कृतितो नाम्नश्च हेतोरहम् ।
सत्यं केवलमस्ति शास्त्रमखिलं तस्याश्रयेणोदितं
स्यात्सत्यव्रतपालनव्यतिकरेणात्यन्तमेवोत्तमम् ॥४३॥

उच्छास्त्रं वदतां हि वाचि निहिताऽलक्ष्मीर्दरिद्रा परं
तान् सर्वत्र विमाननां नयति सा संसत्सु लोकेषु च ।
शास्त्राधारितमेव चात्र गदतां लक्ष्मीर्मुखे तिष्ठति
प्राप्तास्ते च समादरं परिषदां किं वा जनानामपि ॥४४॥

पाषाणः प्रसुवीत कोऽपि कनकं, कश्चित्परीक्षेत त-
न्नह्येकत्र गुणा वसन्ति विविधा उद्रिक्तशोभाश्रयाः ।
श्रीसत्यव्रतशास्त्रिणि द्वयमिदं सिद्धेश्वराद्यैः स्तुतं
दृष्ट्वा राघवनोऽवदत्कृतिबुधेऽस्मिन्नसत्यं यत्नः कविः ॥४५॥

एषोऽस्मि स्फुटमत्र वच्मि कविता प्राप्ता जगत्ताततो
विद्वत्ता किल ताततोऽत्रभवता सत्यव्रतेनार्जिता ।
तावेतौ मम वन्द्यतामुपगतौ, यातौ च संसेव्यतां
चित्ते वाचि च लेखकर्मणि समं श्रीचारुदेवौ स्थितौ ॥४६॥

किञ्चायं स्नुषया यया गुरुपदं सम्प्रापितोऽनूषया
सापि प्राप्तवती प्रकर्षमतुलं शिक्षापरीक्षादिषु ।
बी. ए. इत्यखिलोत्तरे जनपदे हिन्द्यां समेभ्योऽधिका-
नङ्कान् प्राप्य समुत्तरन्त्यलभतच्छात्रीयवृत्तित्रयम् ॥४७॥

एम्. ए. इत्यपि लक्ष्मणाख्यनगरेऽग्र्यां श्रेणिमासाद्य सा,
द्वैतीयीकतयाऽतरत् सुरगिरा, रूस्यां प्रवीणाऽभवत् ।
गैर्वाण्यामथ वाचि यानि रचितान्यस्यां शताब्द्यां बुधै-
र्नाटचान्येकसमीक्षया कृतवती तेषां समालोचनम् ॥४८॥

श्रीरामादिकृतेषु कालिजपदेष्वाचार्यताम् चर-
न्त्येषा संस्कृतभाषणादिषु निजाः शिष्या अकार्षीत् क्षमाः ।
विद्वन्मौलिकुलं किलालमकरोदेषा सुशीला समा,
सौभाग्यैकसमाश्रया गुरुजने पत्यौ च बद्धादरा ॥४९॥

अस्या इन्दुकलेव कापि नयनानन्दप्रदा पुत्रिका
शिक्षायामनुरूपतामुपगता श्लाघ्यास्ति सौशील्यतः ।
पुत्रश्चोपनयन् पितामहगतां प्रज्ञां, शरच्चन्द्रतां
धत्ते काञ्चन नामरूपकलितां विद्वज्जनाश्चर्यकृत् ॥५०॥

सोऽयं व्याकरणे प्रवेशमयितोऽभ्यस्यन् लघुं कौमुदीं,
सव्याख्यञ्च हितोपदेशमधियन् नीतौ निवेशं गतः ।
तत्राधीतवताऽथ नीतिशतकं तत्पञ्चतन्त्रं क्रमा-
त्काव्यानां रघुवंशमत्रभवता प्राप्तं परं पाटवम् ॥५१॥

अस्याऽऽसीदुपनीतिरीतिरधिकं रम्या परीक्षाविधे-
श्छज्जूराममुखैश्चतुर्भिरमरब्राह्मीविशिष्टैः कृतात् ।
सन्तुष्टैरथ तैर्मयाप्यनुगतैरस्योपहारीकृता
काचित्तथ्यनिवेदिकैव पदवीयं बालशास्त्रीति सा ॥५२॥

काण्डात्काण्डत एवमेव सततं दूर्वेव वंशावली
सेयं दर्शनमङ्गलानि तनुते विश्वस्य रोहन्त्यहो ।
विद्वत्तल्लज, तत्र संस्कृतगिरः सेवा तथा संस्कृतेः
सर्वा वाङ्मनसाङ्गवित्तकलिता हेतुस्तवैवोच्यते ॥५३॥

प्रायस्तत्तदभीष्टदानकुशलाः स्वस्वार्चनाकाम्यया
देवाः सन्ति मनोहरा रुचिभिदा भक्तोत्तमानां भुवि ।
तेषु द्वित्रिचतुर्मुखेषु कतमः षट्पञ्चवक्त्रेषु वा,
संज्ञामर्हति चारुदेव ! भवतो भव्यामिमां विश्रुताम् ॥५४॥

श्रौतस्मार्तपुराणसम्भवतया ख्यातेषु तेष्वञ्जसा
सर्वाङ्गीणमवेक्ष्य हन्त सहजं सौभाग्यमेवंविधम् ।
तद्वैदुष्यविवेकलेखनकलावक्तृत्वसच्छिक्षक-
त्वाचारातिरुचित्वसद्रसिकताढ्यां चारुतां भावये ॥५५॥

सन्तः सन्ति कियन्त एव कविभिर्नीताः पुरा स्तुत्यतां,
ये शैलीकृतसाधुसद्गुणलवा गायन्ति नन्दन्ति च ।
किन्त्वेषोऽस्मि लवीकृताचलगुणः कश्चित्खलत्वं श्रितो,
मन्दं मन्दमुदीरयामि भवतोऽमन्दान् गुणौघानपि ॥५६॥

द्राक्षाणां परिपाककालकलया पाको मुखे जायते,
काकानामिति सूक्तिरद्य मयकाऽसत्येन सत्याप्यते ।
यद्विद्वद्गणगण्यतामपि न ये याता गुणास्तानहं,
मात्सर्यादिव कैश्चनैव कलये शब्दैरकल्पैर्भृशम् ॥५७॥

ये याताः श्रुतिगोचरं सुकृतिनामुल्लासमातन्वते,
गीता नेतृजनैश्च राष्ट्रपतिना सम्मानिता ये पुनः ।
तानेतान् सकलानखण्डरसदान् यः खण्डकाव्येऽर्पये-
न्नूनं तस्य विचारणाविकलतां सन्तो हसिष्यन्ति मे ॥५८॥

किन्त्वेतेन मिषेण वाचमसुकां कालेऽप्यकालेऽप्यहं,
विद्वद्वन्दनया पुनामि तदयं जातः स्वभावो मम ।
विद्यापीठनिकेतने कृतवतां पादार्पणं धीमतां,
बद्धाभिः स्तुतिभिः किलाभवदियं पद्यद्विसाहस्त्रिका ॥५९॥

श्रीमद्भिः कृपया कदापि विहितं भट्टौ शुभं भाषणं,
तस्मिन्युग्मकमेकमर्पितवता सम्पादिताऽभ्यर्चना ।
सम्माने पुनरत्र राष्ट्रपतिना वैदुष्यवैशिष्ट्यतः
क्लृप्ते प्रीतमना व्यरीरचमहं चार्वीं चतुर्धा स्तुतिम् ॥६०॥

एका 'मार्यसमाजमन्दिर' सभासद्यन्यहं निर्गुणो-
पास्तौ चारुगुणाकृतेः किल निराकारार्चनेऽपीपठम् ।
दिल्लीस्थे त्वपरामपाठिषमहं सद्विश्वविद्यालये
स्तुन्वंस्तत्रभवन्तमादरपदं सद्विश्वविद्योदयम् ॥६१॥

ग्रन्ये द्वे युगपन्मया विरचिते हिन्द्यां तथा संस्कृते
पठ्येतां वदनद्वयेन किल ये साहित्यसम्मेलने ।
तासामत्र तु षट्कमेव मयका सङ्गृह्यते स्नेहतो
नूनं दुर्ललितं भवेत्तनयवत्काव्यं कवेरन्तिमम् ॥६२॥

"यस्मिन्यो भुवि वर्तते किल यथा तस्मिंस्तथा वर्ततां
सोऽपीति स्फुटनीतिरीतिरभितो धर्मात्मनां सम्मता ।
श्रीमन्, संस्कृतभारतीं प्रति भवान् वाचा, हृदा, कर्मणा,
नम्रोऽभूदिति सापि सम्प्रति समारम्भं त्रिधाऽऽलम्बते ॥६३॥

नूनं शाब्दिकमौलिशेखर, सदा संस्कुर्वता भारतीं
प्राप्ता पाणिनितेति वेत्ति जगती वैदुष्यपुष्यन्मनाः ।
किन्त्वेतां त्वदगस्त्यतामपि विदामग्रेऽद्य गास्याम्यहं
यत्र व्यासमहार्णवोऽपि चुलुके नीतः परिच्छेद्यताम् ॥६४॥

देवे वैदिकविद्वदालितिलके, वेदाङ्गविज्ञालिके,
शब्दब्रह्मसमर्चके, स्वकृतिभिर्ब्राह्मीतनोश्चर्चके ।
सच्चन्द्रोदयकारके, क्वचिदहो भास्वत्कलाधारके,
प्रीतिः कापि तरङ्गिणीप्रणयिनि स्याच्चन्द्रिकाचारके ॥६५॥

नूत्नः पाणिनिरेव नैष जनितोऽष्टाध्यायमर्मावनो
यावद् भर्तृहरिः पतञ्जलिरपि स्वेनैव जातोऽस्त्ययम् ।
तस्मादद्य विपद्यमानविबुधेऽनुत्पद्यमानापरे,
खेदं वाक्यपदीय मा वह, महाभाष्य स्थिरत्वं व्रज ॥६६॥

शरच्चन्द्रे पौत्रे, तनुजनुषि सत्यव्रतबुधे
व्यलीका सङ्क्रान्तिस्तव परिचिता संस्कृतविदाम् ।
उषा निष्णातेयं सुरसरिदभिख्यामरगिरि
स्नुषाप्यस्यौचित्यं प्रकटयति विद्वत्कुलगुरोः ॥६७॥

विद्वत्तल्लज, राष्ट्रमेतदखिलं यस्यावदानैस्ततं
तं त्वां राष्ट्रपतिः समर्चयति चेन्नैतद्विचित्रं मतम् ।
भाषा राष्ट्रियगौरवं श्रितवती चेत्तत्र मौनं श्रये-
न्नूनं विस्मयहेतुकं भवति तत्तेनायमद्योद्यमः ॥६८॥"

रूपं त्वत्र निरूपितं मतिमयं वा वाङ्मयं धीमतः,
किञ्चिद् वर्णयितुं यते पुनरिदं सामाजिकं, भौतिकम् ।
सत्यामार्यसमाजसम्मतपदे भक्तावपि श्रीमतः
किञ्चिन्मौलिकमस्ति चिन्तनमिति प्राकाशि गोष्ठीष्वलम् ॥६९॥

ऐतिह्यं श्रुतिषु स्फुटीभवदिदं केनापलाप्यं भवेद्
गेयं चापि भवेन्न केन सरसं यद्गीतगोविन्दवत् ।
यद्यत्संस्कृतमाश्रितं तदखिलं पाठ्यं विवेच्यं भवे-
दित्याद्या बहवो भवन्ति भवतो वाचोऽत्युदारा भुवि ॥७०॥

ऋौचित्यं वचने तथा प्रवचने शास्त्रानुगं वाञ्छता,
श्रीमद्भागवतादिकं च सरसव्याख्यानमालोच्यते ।
तद्व्युक्तं रसजीवितं सहृदयैर्विज्ञैश्च वाग्जीवनं,
तेनैकेन विना भवन्ति कवयोऽभिज्ञाश्च निन्दास्पदम् ॥७१॥

अस्मिन् राजनयेन सम्परिगते काले न कश्चिज्जनः,
सर्वं पक्षमुदस्य जीवितुमलं दोषैर्गुणैश्चान्वितम् ।
तस्माद् राष्ट्रहितैकतत्परतया काङ्ग्रेसमेव श्रयन्,
ताटस्थ्येन तदीयकार्यसरणेः किञ्चित्करोत्यर्चनम् ॥७२॥

खादीं सम्परिधाय, धौतवसनं, चौलञ्च सोष्णीषकं
बिभ्रच्चात्र विभाव्यतेऽग्रसरणः श्रीगान्धिवादिष्वयम् ।
श्रीमद्गान्धिचरित्रबन्धनमिमामेतस्य सोद्रेकतां
यद् व्यक्तीकुरुते, न तेन सुधियां संशीतिलेशोऽप्यभूत् ॥७३॥

राष्ट्रस्यास्य विदेशिशिष्टिनिगडान्मुक्तस्य पञ्चाधिका
याता विंशतिरस्ति हन्त शरदामित्यद्य मोदामहे ।
काञ्चित्तत्र जयन्तिकामपि समायोक्तुं पुरा राजतीं
विद्यापीठनिकेतने सुकवितासम्मेलनं कुर्महे ॥७४॥

तस्मिंस्तं सदसः पतिं स्तुतिमयैरेभिर्वचोभिः स्तुवन्
तत्साचिव्यमहं वहन्मुहुरपि प्रोद्भिन्नरोमाभवम् ।
नूनं शाब्दिकमौलिमण्डनमिमं संस्तूयमानं मया,
श्रद्धाप्रीतिभरेण काव्यपरिषत् सा वन्दमानाभवत् ॥७५॥

'श्रीमन् राष्ट्रमिदं स्वतन्त्रमभवद्येषां तपोभिर्व्रतै-
स्तेषु क्रीडति संस्कृतज्ञविदुषामंशस्तपस्त्यागयोः ।
एषां वास्तविको भवान् प्रतिनिधिः सम्मेलनेऽस्मिन्वृतो-
ऽध्यक्षत्वेन तनोतु नोऽतुलबलं स्वाशीर्वचोभिस्त्वलम् ॥७६॥

स्वातन्त्र्यप्रतिरक्षणाय कवयः कुर्वन्तु काव्यं नवं,
येनास्मत्पृतनासु भक्तिसुभगा जागर्तु शक्तिः परा ।
विश्वस्मिन्नपि भूतले विलसताद् देशस्य कीर्तिः शुभा,
पूर्वं गौरवमर्जयत्वभिनवं राष्ट्रं विशालं पुनः ॥७७॥

राजत्या यज्जयन्त्या मिलति मतिमतो हीरकाख्या जयन्ती,
तेनालङ्कारसृष्टिर्भवति जनिभुवोऽप्येकतास्रग्धरायाः ।
अस्यामस्याः समन्ताद् व्यपनयतुतरां दीनतां दीनबन्धुः,
सर्वे भूयासुरस्या विभवपरिगताः पुत्रकाः सच्चरित्राः ॥७८॥'

इत्यस्मिन् हरिशङ्करेण मम गीर्या गीयमानाऽभवत्
प्रश्नस्तत्र तदा कृतो मतिमतामग्र्येण विस्मापनः ।
रागः कोऽत्र समाश्रितोऽस्ति भवतेत्यस्योत्तरं चादरा-
दङ्गीकुर्वति कापि सा कुशलता ख्यातापि साङ्गीतिकी ॥७९॥

इत्थं सर्वविधं विधेरपि न यत्सन्दृश्यते कौशलं
तच्छ्रीमत्यवलोक्य सा कविसभा प्रोत्फुल्लनेत्राऽभवत् ।
विद्वांसश्च मिथः श्रवस्सु बुधतां तां श्रीमतोऽचर्चयन्,
छात्राश्चेदृशमद्भुतं मतिमतो वैदुष्यमत्रार्चयन् ॥८०॥

ग्रन्थान् कान् कति चामलानरचयच्छ्रीमानितीहाधुना,
सङ्ख्यातुं सुशकं न नाम, कथमन्वालोचये तान् पृथक् ।
तेषामध्ययनेन शास्त्रनिचयाम्भोधौ स्वतन्त्रश्चरन्,
तत्पोतानपि चालयन्मम मतौ भात्येष मीनो महान् ॥८१॥

वेदे वेदान्तसारे त्रिमुनिविरचिते शब्दशास्त्रे निरुक्ते,
काणादे चाक्षपादे वहति निपुणतां जैमिनीयेऽपि सोऽयम् ।
इत्येतद् भासतेऽद्धा कृतिषु मतिमतां, ते च साहित्यशास्त्रे
सौहित्य वीक्ष्य कांश्चिद्विदधति विशदान् हार्दिकोद्गारसारान् ॥८२॥

**उपसर्गार्थगीता—**

विद्यापीठेऽत्र कश्चिद् भवति सुविदुषां शोधपूर्णान् विचारान्
व्याख्यानैः ख्यापयन्नः शरदि शरदि यः शारदो ज्ञानयज्ञः ।
तस्मिन्नस्मिन् किलाब्दे विशदमकथयद्यत्त्रयं भाषणानां
तत्राविर्भूतमासीदखिलमपि विशिष्योपसर्गेषु तत्त्वम् ॥८३॥

तेषां काचिदुपक्रिया गमकता चाद्ये दिने भाषिता,
वेदे धातुभिरन्वयो निगदितस्तेषां द्वितीये दिने ।
तार्तीयीकदिने तदीयबलतः कश्चिद् भवेत्कर्मणा,
योगः कश्चिदकर्मणेति स परो वाचस्पतिः प्राब्रवीत् ॥८४॥

अस्मिन् व्याकरणोदितं मतयुगं तद्वाचकद्योतक-
त्वाभ्यां भिन्नमनेन भाषितमभूच्छ्रीभर्तृहर्यादिजम् ।
नामाख्यातनिपातवद्धि न पृथक्तेषां प्रयोगः श्रुत-
स्तेन ज्ञायत एव वाचकतया नैषां स्थितिर्वाक्यगा ॥८५॥

धातोरर्थविशेषमेव शकटापत्यस्य तेऽद्योतयन्,
धातूनामुचिता ततो बहुमतानेकार्थता निश्चिता ।
एकैकार्थनिरूपणं तु सुतरां तेषां क्रियार्थत्ववाक्,
नानार्थास्तु भवन्ति तेऽत्र विदुषां तैस्तैः प्रयोगैः स्फुटम् ॥८६॥

विख्यातौ हि कलिर्वलिश्च परितस्तौ कामधेनू इति
कुर्दाद्या इह खेलने विनियतास्तत्रैवकारोक्तिभिः ।
राधोऽकर्मकतश्च वृद्धिविषये यच्छ्रयन् कृतः पाणिनौ
यच्चैते वपिकृञ्मुखाः सुविदिता नैकार्थका धातवः ॥८७॥

नानार्थेषु च तेष्वमी विनिहितं तन्तं प्रकाश्यार्थकं
याताः सार्थकतां भवन्ति तदिमे सन्त्येव तद्द्योतकाः ।
एते धातुषु लीनमर्थमिव ते मद्यादयो विभ्रमं
वामाङ्गीहृदये स्थितं विवृणतेऽत्रेत्याह माघः स्फुटम् ॥८८॥

एतैर्यह्य्ुपसृज्यते स हि तदैवानेकमर्थं वदे-
त्तर्हि स्यादुपसर्गवाचकमतं स्वीकार्यमार्यैरिदम् ।
यत्त्वेषोऽनुपसृष्ट एव विविधानर्थान् स्वतो भाषते,
तत्तद्द्योतकतामतं मतिमतामत्यन्तमारोचते ॥८९॥

तस्माद् धातुषु नैकमर्थमुदितं संयन्त्र्य यः केवलं
कञ्चिद् द्योतयतीह स स्वयमिह व्यानक् स्वविद्योतनम् ।
किन्त्वत्रैव विलोक्यते विनियतैकार्थत्वकं धातुषु
ब्रूञ्वाचीव च मृङ् मृताविव ततस्तद्वाचकत्वं स्थितम् ॥९०॥

यच्चानेकमिमे वदन्ति सहसैवार्थं क्वचिद्धातव-
स्तत्रापि प्रविचारिते वितथता काचित्प्रतीतिं गता ।
पत्लृ प्रागगमने श्रुतः क्वचिदयं चेदुड्डयत्सु स्थित-
स्तेनानेकपदार्थतां न भजते तद्धयस्ति गत्यन्तरम् ॥९१॥

एवं हृञ् हरणे स्थितोऽप्युपयुतस्तेनायुतोऽपि क्वचिद्
ब्रूते चेदुपहारमत्र विदिता तत्प्रापणैकार्थता ।
यच्च प्रोक्तमिहास्ति 'वेर्विहरणे' सूत्रं ततोऽपि ध्रुवं,
धातूनां बहुवाच्यता न विदिता किन्तूपसर्गस्य सा ॥९२॥

इत्थं धातुषु कश्चिदस्ति नियतोऽर्थश्चोपसर्गेष्वपि
प्राञ्चोऽपीदमुदैरयन्नधिरुपर्यर्थे हि भाष्ये स्थितः ।
गार्ग्यः प्राह पदार्थमात्रनिहितामुच्चावचार्थस्थितिं
वैशिष्ट्यं ह्युपसर्गगं पुनरिदम् 'ऋक्प्रातिशाख्ये' स्थितम् ॥९३॥

सम्वन्धो वहुधानयोश्च विदितः कश्चिद्विशेषात्मकः
कश्चिच्चापि विरोधभागथ पृथङ् नैषोपसर्गः स्थितः ।
यद्वत्कारककालवाचकतया सिद्धोऽप्यसौ प्रत्यय-
स्तद्वत्क्वापि न केवलः स पठितो युक्तश्च बोधावहः ॥९४॥

दृष्टः कीदृशनिश्चयादिकपदे निः कीदृगित्यादि नो,
भूयान् प्रः किल न क्वचिद् व्यवहृतो भूयः प्रकर्षार्थकः ।
भूवाद्या इह धातवो निगदिताः सन्तः क्रियावाचकाः,
भावेऽकर्मकतोऽथ कर्मणि च लः प्रोक्ताः सकर्मात्मनः ॥९५॥

भूधातोरनुपूर्वकस्य विषये भूः केवलो धातुतां
नो धत्ते न च कर्मणीह भविता कश्चिल्लकारस्ततः ।
इत्येवं न वितर्क्यमत्र विवुधैः प्राद्याः क्रियावाचिनः
प्रोच्यन्ते, ध्रुवमत्र धातुकथितामेतां विशिंषन्ति ते ॥९६॥

तेनैवार्थविशेषणेन सुतरां भूवादयोऽकर्मका
अप्यायान्ति सकर्मकत्वमिति लः कर्मण्यपि स्यादितः ।
सत्तार्थाद्धि भुवः प्रयुक्त इह नोऽनुर्व्याप्तिवाची स्वतो
ब्रूते 'व्याप्य हृषीकवर्गभवनं स्वस्वानिहार्था'निति ॥९७॥

सत्तार्थे पठितश्च भूरिह बुधैर्नार्थान्तरे दृश्यते
सोऽयं लक्षणयानुभूतिमिह चेद् ब्रूतेऽनुपूर्वः सदा ।
तत्रैते विदधाम किं यदनुना नानार्थतायां भुव-
स्तात्पर्यग्रहणोपपत्तिरिह तत्तद्द्योतकत्वं हि तत् ॥९८॥

धात्वर्थं किल बाधते क्वचिदसौ नामोपसर्गः स्वयं
योऽयं पक्ष उदीरितः स न वदेद् बाधस्य बोधार्थताम् ।
नो चेदस्ति तदर्थ एव नियतस्तर्ह्यस्य बाधेऽस्ति का
शक्तिर्या प्रथितस्य तस्य विषये जायेत विघ्नावहा ॥९९॥

खेदे वा तपसि श्रुनः श्रमुरय ब्रूते विपूर्वः स्फुटं
खेदाभावमथ क्लमापनयनं चेत्यस्ति बाधो न किम् ।
ष्ठाधातुर्गतिरोधनेऽपि पठितो वक्ति प्रपूर्वो गतिं
सम्पूर्वश्च मृतिं समाप्तिमथवेत्यस्त्येत्र बाधः पुनः ॥१००॥

ईक्षिर्दर्शनवाचकोऽप्युपयुतस्तत्त्यागमाह स्वयं
क्रीडार्थश्च रमिर्विना समुदितः कर्मावसानार्थकः ।
विश्लेषे भिदिरादयश्च पठिताः सम्पूर्वकास्तेऽखिलाः
संश्लेषं ब्रुवते ततोऽयमुदितो धात्वर्थबाधः स्फुटः ॥१०१॥

धात्वर्थस्य विपर्यये प्रविनयोऽपावौ च दृष्टौ मुहु-
स्तस्माद्भिन्नतयोदितावपि मतौ तौ धातुरेवैकक: ।
तेनाड्द्विर्वचनादिकं क्वचिदिदं स्यात्सोपसर्गादपि,
सोऽसङ्ग्रामयतेति सिद्ध्यति तयोर्धातुत्व एवोभयो: ॥१०२॥

सम्पर्योश्च करोतिनानुगतयो: सुट् शिष्यते शाब्दिकै:
कर्मण्येष च लोऽनुभूयत इति प्राप्नोत्यकर्मा हि भू: ।
उक्तं कार्यमिहान्तरङ्गमथ यद् धातूपसर्गाश्रितं
यद्वा षत्वतुकोरसिद्ध इति चाप्यारम्भणीयं मतम् ॥१०३॥

बुद्धिस्थादभिबन्धत: पदविधौ धातूपसर्गाश्रय:
कार्यो यावकवत्फलस्य वपने भेद: किलाभ्यन्तर: ।
इत्थं वाचकता स्थिता समुदिते धातूपसर्गद्वये,
धात्वंशे कृतिवाचिताऽपरगता चेयं विशिष्टार्थता ॥१०४॥

इङ् चैष श्रयते प्रयोगपदवीं यत्सोपसर्गोऽधिना
शासुश्चाङ्सहित: समाप्यनुगतो ग्रामि: सदा पठ्यते ।
तेनाल्पार्थतया पृथक् प्रकथिता हन्तोपसर्गा अमी,
एते चापि च धातव:, समुदितास्त्वर्हन्ति ते धातुताम् ॥१०५॥

नानार्था उपसर्गसङ्गतिमृते वल्गन्ति नार्थान्तरं,
चाये पूजनकर्णनार्थयुगलं यत्सोपसर्गे स्थितम् ।
तस्माद्द्योतकवाचकत्वनियमो द्वेधोपसर्गे स्थितो
लक्ष्याण्येव च तत्र वस्तुविषयां व्यावृण्वते तत्स्थितिम् ॥१०६॥

धात्वर्थाननुवर्तते स इति यत्केनाप्यवादि क्वचित्
सोऽयं नूनमनर्थकत्वमवदत्तस्योपसर्गस्य न: ।
ब्रूते कण्ठरवेण कोऽप्यधिपरी एतावनर्थाविति,
प्रादीनामनुवृत्तिरर्थयतिना च द्वेष्टिना दृश्यते ॥१०७॥

आह्वाने बत रोदने क्रदिरयं, शौचे च पोषे णिजिर्,
षद्लृर्गत्यवसादनाविशरणेष्वास्ते प्रयुक्तो द्विधा ।
सम्पर्के च पृची: किलैष कथित: श्लाघासु कत्थिर्बुधै-
र्दृष्ट: सोऽपि विनोपसर्गमपि तद्युक्तोऽपि तुल्यार्थक: ॥१०८॥

मेरुर्यत्र सुमेरुरित्यभिहितो दीप: प्रदीपस्तथा,
तेनानर्थकता मता मतिमतामत्रास्ति निष्कर्षवाक् ।
एते द्योतकवाचकार्थरहितास्त्रेधा भवन्तीरिता
लक्ष्याण्येव च तन्नियामकतया लक्ष्याण्यहो लक्षण: ॥१०९॥

द्वैतीयीकदिने तु वेदविषयं धातूपसर्गान्वयं
प्रस्तुत्यैष पुरातनर्षिवचनैस्तच्छीलमासूत्रयत् ।
तत्तद्वाच्यविवक्षयापि मुनयस्तद्वाच्यशक्तानमून्,
धातून्न व्यवजह्रुराहुरपरांस्तान् सोपसर्गानिति ॥११०॥

छन्दःशास्त्रकृता कृतिः प्रकृतिरित्याद्यैर्यथा नामभि-
श्छन्दोजातिविधानमत्र विहितं तैः सोपसर्गैः पदैः ।
तद्वद्वेदवदावदैरपि महानेष प्रयोगः कृतो
यो विस्मापयतेऽस्मदन्तरमिति प्राप्तं परीक्षामहे ॥१११॥

अञ्जिव्यञ्जिसमञ्जयः समुदिता अभ्यञ्जिनाऽऽथर्वणे,
प्राप्तिव्याप्तिसमाप्तयः पुनरिहात्याप्त्या समं कीर्तिताः ।
अत्रैवाङ्नियुतो दधातिरपि किं सूते न कौतूहलं,
मन्त्रिः प्रत्युपपर्युपासनमितो नस्तन्न किं वर्धयेत् ॥११२॥

विप्राभ्यां जनिरन्वितश्चकितयत्येवं पराभ्यां स इण्-
णाश्चर्यं वितनोति, विप्रसहितौ पत्स्थौ च तद् यच्छतः ।
प्रावाभ्यामथ तारिराह जगतामुत्तारणं नाशनं,
स्वायत्तीकरणे रुधिः स सदवः सापो निरासे श्रुतौ ॥११३॥

विश्लेषे हरतिर्विना विभजने स्वैरक्रमे न श्रुतौ,
स्थाधातुस्तदवस्थितौ नहि पुनः स्थानाच्च्युतौ दृश्यते ।
तद्युक्तः श्रयतिर्विवारमवदन्न त्वाश्रयं विश्रुतं
पर्यायस्थितिमाह तेन च वृतिर्नैवं विवर्तार्थकम् ॥११४॥

वेत्रस्तस्य विविक्तिरेव कथिता, वाने विशेषस्तु नो
वक्तेरस्य च भाषणं न तु विरुद्धोक्तिः प्रतीपोक्तिवत् ।
विज्धातोश्च पृथक्कृतिर्न सदसच्चिन्ता तिङन्ते श्रुता,
सा चैकान्तकरीति वेदवदियं लोके कृदन्तोक्तिषु ॥११५॥

ऊर्णोतेर्विवृतिर्न संवृतिरतिक्रान्ता, निरासो विना
वातेर्नातिगतिश्च धा विभजनेऽनुष्ठानवाची न सः ।
धाञोऽधिन्युपसृष्टिरप्यधिकृतिं ब्रूतेऽथ षिञ् बन्धने,
तस्मान्मोचनमर्थमाह, स विना नो बन्धवैशिष्ट्यवाक् ॥११६॥

भूयः पानविधौ भवेद् विपिबतिर्नानाविधे वा क्वचिद्,
विश्लेषे च विपृच् भवेन्नतु घनाश्लेषे श्रुतावेव सः ।
धात्रश्चाप्यवपूर्वकस्य तदधोधानाश्रयापातना-
न्येवार्था न किलावधानमवपद् भ्रंशार्थकः सर्वदा ॥११७॥

षोधातुस्त्ववभृद् विमोचनपरो नैवावसानार्थको
निष्पूर्वो नयतिस्तथापनयने रूढो न वै निर्णये ।
एवञ्चेणवभागयोगतिपरो, नैवास्ति बोधार्थकः
पर्याङ्भ्यां भवतिश्च वेष्टनपरो वेदे न नाशार्थकः ॥११८॥

नीधातुस्त्वभिना पुरोनयनवाङ् नैवानुकारार्थको,
ब्रूते चाप्यभिना वदोऽभिमुखतामम्पत्तिपूर्वां गिरम् ।
उत्पत्तेरधिकत्ववागुपजनिर्द्रुश्चान्तिकप्राप्तिवाक्
वेदेष्वस्त्यपवादवागुपवदिर्यद्वा परीवादवाक् ॥११६॥

किन्तूपेन वचिः स नोदनपरो, ब्रूते प्रतीक्षां वसि-
र्युक्त्या साधनमाह वै पदिरयं, ह्वश्चोपसम्पूर्वकः ।
सङ्कोचं त्वपिपद् किलाप्ययमथो लीनत्वमाहापिया,
नाशे चावयजिः श्रुतः किल पराशृर्हिंसने विश्रुतः ॥१२०॥

आच्छादेऽपिवृतिः परापतपदं दूरात्सुदूरं गता-
वास्कन्देऽपनयेऽथ चैतिरभिनाऽपेन प्रतीपं मिथः ।
छेदे चास्ति परावृजिर्निरसने सन्नीः समन्वीतिवाक्,
आवृत्य स्वपनेऽभिशीङ् विकिरणे ख्यातः परावप्श्रुतौ ॥१२१॥

आशासिर्विनये प्रशासिरुदितः शास्त्रोपदेशे पुन-
र्व्याख्याने च विशासिरस्त्यविदितः संशासिरार्यैरपि ।
तस्मात्सायणमुख्यभाष्यरचनाचार्या अपीहागिर-
स्तद्वत्प्रायुजिरप्ययं मुहुरुदा धोत्खातकर्मा स्मृतः ॥१२२॥

संवेशे च निपद् निबन्धनविधौ चैवालभिश्चोपधा-
ऽऽधाने तावदुपर्युपर्यथ चरोऽप्याङ्गटने विद्यते ।
दाने चायजिराश्रितस्थितिमथाङ्शीर्भाषते छन्दसि,
त्वास्थाताऽऽश्रयितारमावपिरथ ब्रूते श्रुतावाहुतिम् ॥१२३॥

आङ्पूर्वो वपिरानिधानवचनश्चार्वाजिराप्रापणे,
पर्यावृज् प्रतिषेधने प्ररुहिरारुट् क्रान्तिगत्योः क्रमात् ।
आङ्पूर्वो वृहिरस्ति पाणिनिमुनौ वेदे यथोन्मूलने,
आङ्पूर्वश्च विदिः समावगमने जानातिरप्यत्र सः ॥१२४॥

माधातुः प्रतिनान्वितः प्रतिफलत्यर्थे प्रवृत्तौ पुनः
प्रैतिश्चक्षिङुपाहितश्च परिणा त्यक्त्वैकमन्येक्षणे ।
प्रत्येकं प्रतिना विना च विविधं द्रष्टुं प्रयुक्तः श्रुतौ
प्रेणेङ् दूरगतौ च सविशिरयं ख्यातः पुनः सङ्गमे ॥१२५॥

प्रत्युत्थानमथाह रुट् प्रतियुतेनावेन, चैतद्वतो-
ऽपेनान्वीतिमितो वदिस्त्ववमतौ तेनैव नानार्थकः ।
आस्ते चार्पणके निरावपिरयं, वादिः समुच्चारणे,
ऽर्तिर्नीचैर्गमने, निना सह कृञो न्यक्कार एव श्रुतिः ॥१२६॥

एवं हन् नियुतो वदेन्निखननं किञ्चापपूर्वः सिधिः
प्रत्याख्यानमथापभूरपहृतीभावं विरागं क्वचित् ।
निर्ब्रूः ख्यापनवाङ् निरा विदिरथाशेषार्थविज्ञानवाक्
निर्वेदार्थपरश्च लीरथ निना ख्यातस्तिरोधानवाक् ॥१२७॥

संशोध्याखिलवस्त्वभाववचनः स्याद्वै निना लिम्पति-
र्योगे चापरयोश्चरिर्गतिपरः पार्श्वे च दूरे क्रमात् ।
आसिः स्यात्परिपूर्वकः पुनरिहान्वासार्थको लोकवत्,
इण् चैवाप्रतिपूर्वकोऽविमुखतां ब्रूतेऽपराग्भावनाम् ॥१२८॥

शास्तिः सूतिरथ प्रपूर्वकतयाऽऽज्ञाप्रेरणाबोधकौ
स्थाऽभिप्रान्वयतो वदेद्विचरणं प्रक्षेपणं च प्रवृज् ।
आस्कन्दे प्रपदिः श्रुतौ न शरणे धावुर्व्रजिः प्रान्वितौ,
शीघ्रप्लायनमाहतुर्व्यसनतो यानञ्च गेहात्क्रमात् ॥१२९॥

प्रादिर्वै भरतिस्तिङापि निगमे प्राहोपहारं पुनः
स्तुः स्वार्थातिशयं वदत्यथ न स प्रस्तावमत्र श्रुतौ ।
वातिश्चानुयुतोऽनुकूलगमनं साकल्यबोधं विदि-
र्ब्रूते हृञ्च विनान्वितेन परिणा वेदे विपर्यासनम् ॥१३०॥

पर्याभ्यां वृतुराह चासनपदे पश्चात्समासीनतां
वृद्धिञ्च क्रमशोऽनुना पुषिरुदर्पिर्वक्ति चोत्थापनम् ।
जानातेरुपपूर्वकस्य च धिया बोधाप्तिरर्थः श्रुतौ
युक्तस्यास्य विना वृहेः समुदितोऽर्थो निर्गतिप्रेरणम् ॥१३१॥

बन्धञ्चाभिदधाति धाञिरभिना, चोपेन संयोजनं,
ब्रूते चावचरिः किलावतरणं, ध्यानं मुहुश्चावनीः ।
उन्नीर्निष्क्रमणेरणं, परियतिर्ब्रूते पुना रोधनं,
नीचैर्यानमवेन गच्छतिरभेः शंसुः किलाक्षारणम् ॥१३२॥

चारित्र्यस्य च दूषणं परमवादीत्सायणो हिंसनं,
रोधं ष्ठा परिणा गतेः परिचरिश्चाहाटनं सर्वतः ।
धाञिर्वक्त्यभिसंयुतोऽभिमुखतः कार्येषु संस्थापनं
भाष्ये सायणकेऽभिसन्धिरिह मेऽभिप्रायमापोषति ॥१३३॥

नौभिः सञ्चरणं वदत्यधिचरिः, प्राप्तिं त्वभिप्रेणयं,
संवर्तिश्च निवृत्तिमेवमवसो ब्रूते सदा मोचनम् ।
वक्तिश्चापयुतो निराकृतिमधिश्लिष्टश्च पक्षाश्रयम्
आङ्पूर्वश्च गुरी उदीरणपरो लोके तु दण्डोद्यमे ।।१३४।।

आदातिस्त्ववखण्डने, प्रतिशुषिः शोषे स्थितः सायणे
सद्यः शोषणवागयं मम मते सहाङ् तथोत्थानवाक् ।
त्यागार्थे परिसञ्जिहातिरथ निस्नातिश्च दाक्ष्ये श्रुतः
प्रस्नातिर्विदितो मनाक्च विदितोऽस्त्युत्स्नातिरौत्तीर्ण्यवाक् ।।१३५।।

षिच्धातुश्च पराकृतौ किल परायुक्तः श्रुतौ दृश्यते,
सम्पूर्वो ग्रहिरत्र सङ्ग्रहपरः सन्धारणार्थः श्रुतौ ।
श्रीगीतास्वपि लोकसङ्ग्रहपदे सन्धारणार्थे स्मृतो
यल्लोकस्थितिकल्पनं तदुदितं लोकस्य सन्धारणम् ।।१३६।।

तार्तीयीकदिने कृते प्रवचने चाहोपसर्गान्वियाद्
धातूनां स सकर्मकत्वमुदितं चाकर्मकत्वं क्वचित् ।
शीङ्स्थासश्लिषजॄजनीवसरुहो येऽकर्मकाः केवला-
स्ते वेदेऽपि सकर्मकाः समुदिता अत्रोपसर्गान्विताः ।।१३७।।

शीङोपोपहितेन पार्श्वशयनं यस्येप्सितं कर्म तत्,
तेनैव प्रतिपूर्वकेण यमभिप्रैत्येति तत्कर्मताम् ।
तस्यास्यातिपुरस्कृतस्य यदतिक्रान्तिस्ततः कर्मता-
ऽऽङ्पूर्वस्यास्थितिपूर्वकेण शयनेनास्थानगा कर्मता ।।१३८।।

शीङोऽन्वन्विततानुतापवचना, तत्पाश्रकर्मत्वकृत्,
स्था चोपेन समागमार्चनपरः सोऽर्च्यस्य कर्मत्वकृत् ।
आस्तिश्चापि तदर्थकः प्रतियुधेश्चाहार्थमेवं समा,
तञ्चैवाह पुनः स सम्प्रतियुतश्चोपश्लिषिः सन्निधिम् ।।१३९।।

सानुजॄरथ यत्कृतेऽर्जति जरां कर्मत्वमस्यावहेत्,
पश्चाज्जन्म जनिर्यतो दिशति तत्कर्मीभवत्यञ्जसा ।
वासं च व्रतमप्यसावुपवसिर्ब्रूते प्रतीक्षां क्वचित्
आङ्पूर्वो रुहिराह चोपरिगतिं यस्यास्य कर्मत्वकृत् ।।१४०।।

अन्ये ज्ञावृतुमाङ्प्लुवसूलवियुधस्कन्दाश्च भाजीवती,
गैरू च क्रमुनन्दितिष्ठतिभुवः क्षौतिश्च वावाश्यती ।
लीविश्पत्सदिपूकृवोऽप्यसुदिहौ, षोसृजनहाः सन्त्यमी,
कर्माकर्मविपर्ययं विदधते येषूपसर्गाः स्थिताः ।।१४१।।

नीवेष्टी, वृषिचौ, वदिर्मृषहनौ, लीधृष्श्रिविश्पत्वहा,
अन्ये वा रमिकम्पतिप्रभृतयस्तैर्लम्भितास्तं पुनः ।
सञ्जानातिरकर्मकः किल मिथः साम्मत्यमर्थं वदन्,
दृष्टश्चैष सकर्मकः स्मृतिमुखानर्थान्मुहुर्निर्दिशन् ।।१४२।।

इत्थं वर्तिरकर्मकः प्रसहितो दृष्टः सकर्माऽभिना,
मातिर्वै परिणा युतः कलयते कर्मान्वयं सर्वथा ।
अभ्याङ्भ्यां प्लवर्तिनिमज्जनमुखेष्वर्थेषु कर्मान्वितः,
स्नानादौ यदकर्मको णिचि पुनस्तत्रापि कर्माश्रितः ।।१४३।।

आनूपैर्वसतिः सकर्मकतया युक्तो निरा चान्वितो,
लम्बिश्चाप्यवपूर्वकः श्रयणवाग्दृष्टः सकर्मा पुनः ।
युक्तश्च प्रतिना निना युधिरयं दृष्टः सकर्मा मुहुः
स्कन्दिश्चावसमन्वितो नियमतः कर्मान्वितत्वं श्रितः ।।१४४।।

संविभ्यामथ भातिरेति नियमात्कर्मान्वयं वा विना,
जीवश्चाङ्सहितः सकर्मकतया योगं श्रितो दृश्यते ।
उद्गातिश्च सकर्मकोऽभिरुरपि स्यात्तादृशोऽनेकश
आनिभ्यां क्रमिरेष नन्दिरभिना स्था चाङ्श्रितस्तादृशः ।।१४५।।

भूर्वास् वापि विना सकर्मकपदं यातः क्षुतिश्चावतो
वातिश्चाभिसमन्वितो व्रजति तद् वाशिश्च शब्दार्थकः ।
लीङ् दृष्टः क्वचन प्रयोगवशतः कर्मान्वितोऽकर्मको
विश्चाप्यर्थविशेषवेदनमृते कर्मान्वयं संश्रितः ।।१४६।।

पत्तिश्चापि निपूर्वकोऽर्थवशतो दृष्टः सकर्मा क्वचित्
निष्पूर्वोऽयमकर्मकोऽभिसहितः स स्यात्सकर्मा पुनः ।
आङा पूङ् श्रयते सकर्मकपदं सत्तिस्तथोपान्वित
इत्येते प्रथिता अकर्मकतया गच्छन्ति कर्मान्वयम् ।।१४७।।

अन्ये ये च सकर्मकाः सुविदितास्तेऽत्रोपसर्गान्वयात्
सम्प्राप्ता यदकर्मकत्वमिति तत्तत्रान्वशाच्छाब्दिकः ।
कृञ् कर्माश्रयणोऽपि विश्रयणतोऽकर्माश्रयो जायते,
क्षेपार्थोऽसुरकर्मकत्वमयते नूनं विपर्याश्रितः ।।१४८।।

देग्घिश्चोपचयार्थकोऽपि स समाश्लिष्टेरकर्मा भवेत्,
षोधातुः परिपूर्वकावसहितस्तेनाऽथवाऽकर्मकः ।
सृष्ट्यर्थः सृजिरप्युपाश्रयणतो दृष्टोऽस्त्यकर्मा ध्रुवं
बन्धार्थश्च णहिः समा समुदितोऽकर्मास्ति सज्जत्ववाक् ।।१४९।।

नीञश्चापयुत्तस्य सिध्यति किलाकर्मत्वमाभ्रंशतो
वेष्टेश्च प्रतिसंयुतस्य विदिता सङ्कोचतोऽकर्मता ।
निर्पूर्वो वृति, रुद्युतः षिचि, रनूपेतो वदिः, संयुतो
मृष् चायं परिपूर्वको हृनियमौ चाङा युजाऽकर्मकौ ॥१५०॥

लीङ् ण्यन्तः पुनराङ्युतो घृषिपदी सम्पूर्वकोपान्वितौ
सम्पूर्वः श्रिरकर्मकोऽभिनियुतो विश्च क्वचित्तादृशः ।
आङ्पूर्वः पतिरेत्यकर्मकपदं निर्पूर्वको वा वहिः
सम्पूर्वश्च रभिस्तथानुसहितोऽकर्मा कपिर्जायते ॥१५१॥

नानोदाहरणैर्निदर्शितमिदं सर्वं बुधाग्र्येण न-
स्तन्मे विस्तरभीतितो न समगादत्रानुवादे पदम् ।
ऋग्वेदादधिकैरथर्वसहिताद्वा तैत्तिरीयश्रुतेः
कैश्चिद् वाजसनेयवेदविषयाद्वा ब्राह्मणेभ्यः पृथक् ॥१५२॥

ताभ्यश्चोपनिषद्भ्य एष मतिमान् श्रौतात्तथा सूत्रतो
भाष्याद्वा महतोऽपि कानिचिददात्तस्मान्निरुक्तादपि ।
नैवं वैदिकवाङ्मयादुदितवांस्तान्येष काव्यादहो
वाल्मीकेरथ भारताच्च रघुतो माघात्किरातादपि ॥१५३॥

सेयं वैदिकलौकिकोभयविधे साहित्यवारान्निधौ
मग्नोन्मग्नधियो विलक्षणतरा काचित्स्फुटा विज्ञता ।
व्याख्यानत्रितयाद् गवाक्षसदृशाद्याता प्रकाशं मनाग्
अन्तः प्रज्वलतो विवेकमहतोऽखण्डस्य दीपस्य भाः ॥१५४॥

**उपसंहारः—**

वन्देऽहं तममन्दबोधसुधया पूर्णाननेन्दुं बुधं,
नानाविज्ञगुरुं, कविं, सुरगिरो माङ्गल्यदं मङ्गलम् ।
भास्वन्तं भुवि शास्त्रषट्कविभया श्रीमन्तमन्तःस्फुटं
श्रीसत्यव्रततातमार्यमहितं श्रीचारुदेवं मुदा ॥१५५॥

एषोऽहं खलु शिक्षितोऽस्म्यृषिकुले वेदेषु शास्त्रेष्वपि
प्राचीनैर्विविधैर्बुधैः सहृदयैर्वात्सल्यमालम्बितः ।
तान् प्रत्युत्थितया सदाभिनवया भक्त्या विदां वन्दना-
मातन्वेऽसकृदेव कामपि मुदं चामीरचन्द्रः श्रये ॥१५६॥

# श्रीचारुदेवशास्त्रिशतकम्

महादेव उपाध्यायः

या सत्वरं वितनुते त्रिदशेशभावं, साधारणेष्वपि जनेषु निजाङ्घ्रिपद्मे ।
निर्व्याजसक्तहृदयेषु शिवाय भूयात् सा शारदा विकचशारदपङ्कजास्या ॥१॥

पारम्पर्यपरागतार्यचरितत्राणोपदेशोद्धुराः
सङ्ख्यावत्समुदायसत्कृतिसमाचारेषु बद्धादराः ।
विद्यावारिधिपारवर्त्तिमतयः प्रोद्यत्तमोध्वंसकाः,
लोके केऽपि जयन्ति विश्वविदितप्रज्ञानवन्तो बुधाः ॥२॥

दीव्यत्स्वदेशनिधिवेदतदङ्गजातसंरक्षणानवरतोत्सुकतां दधानः ।
कश्चित्कदाचिदुपवर्तनभागधेयाद् देवोपमो नरवरो भुवमभ्युपैति ॥३॥

पीयूषाशनशर्मदायिवसतौ वर्षोत्तमे भारते
प्रान्तः शूरसमृद्धसूरिजननः पञ्चाम्बुसार्थाभिधः ।
तस्यान्तःस्थितमण्डले गुणिनिकेते होशियारे पुरे,
ग्रामो भात्यहियापुरं बहुकलावित्सन्निवासस्थली ॥४॥

वंशक्रमागतशुभाचरणप्रवीणः, सामाजिकोन्नतिविधाननिधानभूतः ।
तत्रापदुद्भवमनल्पकलैकभूमिः श्रीरामकृष्ण इति विश्रुतनामधेयः ॥५॥

धर्मार्थकामसदृशं सदसद्विवेकात्, तुष्ट्या हृदः सह ततो मतिमत्पुरोगात् ।
पुत्रास्त्रयः प्रचुरकान्तियुना सुतैका, जाताः क्रमेण जनतामुदमादधानाः ॥६॥

पूर्वास्ति सा सुमतिबुद्धिमतीत्यभिख्या कन्या च साहिबदयालसुतस्ततोऽनु ।
तस्मात्परश्चरणदास इति तृतीयः, तुर्यात्मजोऽप्यजनि मेहरचन्द्रजौली ॥७॥

लोकप्रसिद्धसुमनस्त्वमुखैर्गुणौघैर्देवत्वमापदिह तेषु सुतस्तृतीयः ।
ईर्ष्याप्रभृत्यवरदुर्गुणजातरिक्तः ख्यातो जनेष्वजनि यः किल चारुदेवः ॥८॥

ग्रामे निजे शिशुजनोचितपूर्वशिक्षां क्रीडापरः समधिगम्य कुशाग्रबुद्धिः ।
प्रापत्क्रमेण समनन्तरभाविशिक्षाकक्षासमुन्नतपदं गुरुतुष्टिपुष्ट्या ॥९॥

पञ्चाम्बुसंस्थितयशश्चयशोभिविश्वविद्यालये लवपुरेऽध्ययनं वितन्वन् ।
'एम् ए' उपाधिमुपलब्धवतां समेषां प्राथम्यमापदमितैर्जयजीववादैः ॥१०॥

तद्धेतुहेमपदकत्रयभाङ् मनीषी एम्, श्रो. एलग्रचपदवीवरभूषितः सन् ।
मोमुद्यमानविबुधोदितचारुदेवशास्त्रीतिनामविदितोऽजनि सूरिवर्यः ॥११॥

जालन्धराख्यनगरे महिते डि. ए. वी. विद्यालयेऽल्पदिवसान् तनुते स्म शिक्षाम् ।
चन्द्रेक्षणाङ्कहिमरश्मिमितेशवीयवर्षे ततो लवपुरे विनियोजितोऽभूत् ॥१२॥

तत्रापि कीर्तितयशोविमले डि. ए. वी. विद्यालये महति मानितधीविभूतिः ।
शान्त्या यथाविधि बुधैर्विहितप्रतिष्ठः शिक्षाविधिं निरवहत् विपुलश्रमेण ॥१३॥

अश्वाब्धिनिध्यमृतरश्मिमितेशवीये वर्षे विभाजनमभूदुपवर्तनस्य ।
तावत्सुशिक्षणमलंप्रथयन्नजस्रं रम्यां प्रशस्तिमभजज्जनमानसोत्थाम् ॥१४॥

तत्रावसाय्य शुभशिक्षणपद्धतिः साऽम्बालापुरे विरचिताल्पदिनैः पुरेव ।
संस्थाऽऽकृतिः पुनरनेकविधैरुपायैः पूर्वां दशामधिगता विगताधिकाधिः ॥१५॥

सम्मानितार्यचरितः कुशलानुवर्त्तिस्वान्तप्रवृत्तिरचलत्समुदारभावः ।
आचार्यतामुदवहत् प्रचुरं प्रसन्नस्तत्रापि शास्त्रिचरणोऽखिलगीतकीर्तिः ॥१६॥

अध्यापनं विदधतो दधतोऽतिवेलं सम्माननां निखिलविज्ञगणैः प्रणीताम् ।
त्रिंशद्व्यतीयुरतिशर्मदहायनानि स्वल्पक्षणा इव वितीर्णमहोत्सवाढ्याः ॥१७॥

गान्धीमिमोरियलनैशनलनामविद्यासन्मन्दिरे विदितबोधनरम्यरीतिः ।
लब्ध्वावकाशमथ तत्र समाद्वयं स प्राध्यापयत्समधिकारजनानुरोधात् ॥१८॥

दिल्लीमहानगरसंस्थितकैम्पवर्तिविद्यानिकेतसमितेर्विधृतानुरोधः ।
वर्षद्वयं निजविबोधसमुद्रपूरं प्रावाहयद्विविदिषुप्रकरेषु तत्र ॥१९॥

कार्येषु कारणगुणा नियतं प्रयान्तीत्युक्तेर्निदर्शनमतिस्फुटमाविरस्ति ।
यच्छास्त्रिवर्यतनुजे सकला गुणास्ते संवासमापुरचलस्थितिलाभलोभात् ॥२०॥

पञ्चाम्बुदेशवसतिः स हि शास्त्रिवर्यः आसीद्यदोदभवदात्मजरत्नमेकम् ।
यस्याद्भुतच्छविमवेक्ष्य वदन्ति विज्ञाः स्मायं शिशुर्गुणिगणेऽधिकरिष्यतीति ॥२१॥

कालक्रमेण लिपिषु प्रचुरासु बालः प्रावीण्यमेत्य जनकानधिकप्रयत्नैः ।
आसीद्विविक्षुरधिवाङ्मयमत्र हेतुर्यत्नः पितुश्च जननान्तरसंस्कृतिश्च ॥२२॥

आजन्मनो जनकयोः सुरवाक्प्रयुक्त्या बालस्य संस्कृतमजायत मातृभाषा ।
कस्माद्भवेद्विविदिषा न निसर्गरम्या लोकाभिनन्दितसुपर्ववचोमहत्त्वे ॥२३॥

अल्पे वयस्यपि दृढं व्रतमस्य सत्यं मन्ये पिता समभिवीक्ष्य शुभप्रवृत्तौ ।
सत्यव्रताभिधममुं व्यदधान्मनीषी सार्थक्यमत्र लसति क्वचिदेव नाम्नः ॥२४॥

शास्त्रातिदुर्गवननिर्भयसञ्चरिष्णुं पञ्चाननं यमनुभूय बुधैः स पश्चात् ।
शास्त्रीत्युपाधिसुममालिकयार्चितोऽभूत् स्थाने विधिर्विनिहितो द्युतिमेत्यपूर्वाम् ॥२५॥

कैशोररम्यवयसि प्रविशन् स बालः साधुः किमस्ति किमसाधुरयं प्रयोगः ।
इत्थं विवेचनविधौ कुशलां मनीषां शब्दस्य विस्मयकरीं विदुषामधत्त ॥२६॥

संगाहते तटयुगं दिविषत्तटिन्या मत्स्यो यथा विपुलसंहननः सुखेन ।
पाश्चात्यपूर्वभवबोधसमृद्धबुद्धिश्चित्रैकहेतुरजनिष्ट तथा स बालः ॥२७॥

आवाल्यतो गुरुजनप्रबलानुरागसाहाय्यमेत्य सुमतिः सहपाठिवर्गे ।
प्रापत्पदं प्रतिसमं प्रथमं प्रसीदत्संस्थाधिपार्पितसमक्षनिबन्धनेन ॥२८॥

श्रद्धातिरेकपरितुन्दिलबुद्धिरेष तत्तत्प्रतिष्ठितगुरुप्रवरानुपेत्य ।
शब्दागमं दुरवगाह्यनिगूढतत्त्वं संवत्सरैः कतिपयैरकृतात्मनीनम् ॥२९॥

तच्छेषतामुपगतान्यपि तानि तानि शास्त्राणि विश्रुतसुतीर्थकुलप्रसादात् ।
अध्यैष्ट सावहितमानसवृत्तिरेष पुण्यं पुरार्जितमलं फलतीह नूनम् ॥३०॥

आस्ते यथा सुरगिरां सकलेऽपि भागे प्रायोऽनुसंहितवती प्रतिभा प्रगल्भा ।
वैदेशिकीष्वपि तथा बहुविश्रुतासु भाषास्वबाधगतिरस्य जनानुभूता ॥३१॥

अभ्यागतान् प्रतिभया बहुशो विराजद्विद्वज्जनान् समतिलङ्घ्य परीक्षणार्थम् ।
संयोजिते सदसि यः प्रथमामलब्ध सार्धं पुरस्कृतिमरं करतालिकाभिः ॥३२॥

योग्यं सुशिक्षितमवेक्ष्य पितात्मजातं विद्वत्समाजबहुमानितपण्डितत्वम् ।
सद्वंशजां गुणगणैर्विदुषीं परीतां शान्ताकृतिं तदनुरूपवधूमियेष ॥३३॥

नैकेषु सत्स्वपि दृढाग्रहसम्भृतेषु प्रार्थिष्वमेयधनराशिसमर्पकेषु ।
पुत्रीं कुशाग्रधिषणां कुशवत्पवित्रां नाम्नोषसं निरचिनोदुचितां चिरण्टीम् ॥३४॥

वेदोदितेन विधिना परिणीतिमाप्ता साध्वी च सा श्वसुरसद्मनि राजते स्म ।
लक्ष्मीर्यथा सकलभूतिसुसज्जिताङ्गी नाङ्गीकृताणुमितकुत्सितदीनभावा ॥३५॥

सम्यग्विधाय सदनोचितकृत्यजातं शिक्षाविधेरुपरता न हृदाऽपि जातु ।
तेनेयमद्य विदुषामपि लोभकर्त्र्या कीर्त्योज्ज्वलीकृततनुस्तनुतेऽत्र चित्रम् ॥३६॥

दीव्यत्त्रिवर्गसरिदीश्वरपारलब्ध्यै नव्यां तरीं समनुभूय सतीपुरोगाम् ।
चिन्ताविमुक्तहृदयो गृहकार्यतोऽभूत् सत्यव्रतादिपदभूषितशास्त्रिवर्यः ॥३७॥

शास्त्रे यथाऽप्रतिहतप्रसरा मनीषा दृष्टाऽस्य काव्यरचनास्वपि सा तथैव ।
भूयांसि तत्र रुचिराणि बृहत्तराणि काव्यान्युदाहरणतामिह धारयन्ति ॥३८॥

दुर्ज्ञेयशास्त्रगतवस्तुयथार्थरूपस्यान्वेषणेऽस्य मतिराविशति प्रकाशम् ।
अत्रानुसंहितमितेतरसन्निबन्धाः सम्मानिता भुवि भजन्ति निदर्शनत्वम् ॥३९॥

किं वाऽधिकेन कथनेन परं न देश्या वैदेशिका अपि गृणन्ति यदीयबोधम्
किं मालतीसुमसुगन्धिभरः प्रसर्पन् नो तर्पयत्यखिलजन्मिहृषीकसङ्घम् ?॥४०॥

काले गते कतिपये सुमतिः स्नुषा सा, श्रद्धानुरक्तिमिव रत्नमसूत कन्याम् ।
यल्लक्षणानि गणकाः शुभसूचकानि चित्राणि वीक्ष्य चकिता अभवंश्चिराय ॥४१॥

पैतामही शुभमतिः प्रतिभा च पित्र्याः बुद्धिः कुशाग्रसदृशी विमला च मातुः ।
गर्भाकृतिं पुनरधुः सकलस्वरूपैः काले शिशुः समभवच्च विचित्रगर्भः ॥४२॥

उत्पत्त्यनेहसि शरच्छशितुल्यतोकं संलक्ष्य सद्गुणमनेकशुभग्रहैश्च ।
एकादशेऽहनि पिताऽनुगतार्थनामयुक्तं व्यधत्त तनयं शरदादिचन्द्रम् ॥४३॥

विद्याविभूतिविनिवेदकसद्ग्रहाणामुच्चाश्रयस्थितिमवेक्ष्य यथाऽभ्यधायि ।
विज्ञैर्विधिज्ञनिवहैः फलितं तथैव बालेऽपि तत्र धिषणा स्फुटतामयासीत् ॥४४॥

यस्य स्फुटामरवचोविशदप्रयोगैराकृष्टहृष्टहृदया विदुषां पुरोगाः ।
आशीर्वचोभिरविलम्बितमुच्चरद्भिः कीर्तिप्रदैश्च सदकार्षुरुपाधिदानैः ॥४५॥

इत्थं सुतेन मतिमत्स्नुषया च पौत्र्या पौत्रेण सादरसमर्चितपादयुग्मः ।
कालं सुखेन नयति स्म विभिन्नशास्त्रराद्धान्तलेखकुशलः कृतिचारुदेवः ॥४६॥

वर्षाणामार्यधुर्या गुणगणमहितं सन्ततं यं स्तुवन्ति,
यत्र स्थानं द्युलोकस्थितिमिव मनुजाः कामयन्ते चिराय ।
तस्मिन्नानाकनानामनुपमनिलये भारते भाचिताऽऽस्ते,
दिल्लीत्याख्या प्रतीता बहुतिथसमयाद्वासभूर्भूपतीनाम् ॥४७॥

तत्रत्यशिक्षणसमुन्नतराजहंसविद्यालयेऽजनि यदात्मजनेर्नियुक्तिः ।
अध्यापने, शरयुगाङ्करसामितेऽब्दे दिल्ल्यां गुरोस्तदवधि स्थितिरास्त नित्या ॥४८॥

जन्मान्तरीणशुभकर्मविपाकजातं प्राप्नोति वस्तु मनुजो हि न संशयोऽत्र ।
नैसर्गिकी यदमराहृतवाङ्मयेऽस्य निःसाधनस्य सफला रुचिराविरासीत् ॥४९॥

यत्नोऽस्तु पूर्वजनिसञ्चितकर्मजातसंस्काररमूर्तिरथवाऽस्तु न मेऽत्र चिन्ता ।
ह्रासं प्रयन्निगमशास्त्रसमुद्दिधीर्षासत्कामनो ध्रुवमयात् भुवि कोऽपि देवः ॥५०॥

अभ्यस्तवस्तुनिचयप्रतिपादनेऽपि मोहं प्रयाति सकलोऽपि जनो जगत्याम् ।
सर्वत्र धीः प्रसरति प्रतिरोधशून्या यस्यास्तु तस्य गणना किमु लौकिकेषु ॥५१॥

धन्याऽस्ति भारतमही निजशेवधिं तं स्वाध्यायशास्त्रकविताद्यवितुं चिराय ।
कञ्चिद्विलक्षणविचक्षणरूपमाप्तं देवं यथासमयमत्र मुदा प्रसूते ॥५२॥

स्वाध्यायतद्गतविनेयविधानदीव्यच्छास्त्रानुशीलनसमिद्धमतिप्रकाशः ।
शास्त्रीतिसार्थसदुपाधिविभूषितोऽसौ विभ्राजते भुवि बुधेश्वरचारुदेवः ॥५३॥

किं भूयंभव्यजनकं परितः प्रसृप्तं वाग्दोषमुन्मथितुमत्र कृतावतारः ?
शाब्दागमाम्बुनिधिमन्थनमन्दराद्रिः सर्वज्ञपाणिनिमुनिः सहशिष्यवर्गः ॥५४॥

किंवा प्रमाणमुखतत्त्वविबोधजन्यनिःश्रेयसाधिगतिमापयितुं मनुष्यान् ।
नैकोद्धृतौ प्रथितसद्वचनोपदेशो भूयोऽपि गोतममहर्षिरुपागमत्क्ष्माम् ॥५५॥

अव्यक्तपूरुषविवेकशुभोपदेशैरात्मानमीक्षयितुमन्त्यमुपाधिशून्यम् ।
अज्ञानमूढमनसो जनताः समीक्ष्य किं वागतोऽत्र दयया कपिलो महर्षिः ॥५६॥

पुण्योपवर्तनतया जगति प्रतीतात् तद्भारतात् निगमबोधितकर्मजातम् ।
दूरेऽपयाति परितः किमितीव खिन्नः धर्मात्मजैमिनिमहर्षिरिहैद् दयार्द्रः ॥५७॥

आस्तिक्यमेति विलयं भविकानुबन्धि नास्तिक्यमत्र वितनोति पदप्रसारम् ।
इत्थं विचिन्त्य परिखिन्नमनाः स कृष्णद्वैपायनो भुवमभूषयदात्मवित् किम् ॥५८॥

षड्दर्शनीविषमतत्त्वसमन्वयेन याथात्म्यमर्थनिवहस्य विकासयन्तम् ।
संप्रेक्ष्य विस्मयवशंवदचेतसो यं संशेरते विविधभावनयोपपन्नाः ॥५९॥

दुःसाध्यशब्दनिकरस्फुटसिद्धयगम्यशास्त्रान्तरालगतपङ्क्तिविभेददक्षाम् ।
प्रज्ञां कठोरतमतां दधतीं यदीयां प्रज्ञा वदन्ति कुसुमादपि कोमलाङ्गीम् ॥६०॥

शान्तिर्दमोऽद्भुततपश्चरणं विवोधवोधक्षमा सरलताऽऽस्तिकभावमुख्याः ।
दिव्या गुणा मुनिगणैर्महनीयसारा यस्यानिशं प्रकटयन्ति महर्षिभावम् ॥६१॥

सङ्ख्यावदन्वयजनिः स्वयमग्रगण्यः प्रज्ञाविशेषविलसद्विदुषां समाजे ।
सङ्क्रान्तनिर्मलनिजाखिलसद्गुणौघपुत्रार्चिताङ्घ्रिरयतां न कथं महत्त्वम् ॥६२॥

यस्योदयत्तमदयाभरभानुभिन्नदैन्यान्धकारवहुकोविदमानसानि ।
आजीवनं परिवहन्ति तथा प्रसादं नो कल्मषं पुनरुपैति यथावकाशम् ॥६३॥

शान्ताऽपि यस्य सुभगाकृतिरप्रमेयतेजोविशेषविसरैः परितः परीता ।
श्वःश्रेयसप्रजनने प्रथिताऽतिमात्रमातङ्कमारचयति प्रथमागतस्य ॥६४॥

अन्यान्यशास्त्रपरिनिष्ठविचक्षणानां गोष्ठीसुखानुभवनाय कदापि काशीम् ।
गत्वाधुनाऽपि विविधागमरम्यचर्चां तन्वन्नयं मुदमुपैति परां मनीषी ॥६५॥

प्राप्यान्तरा विदितवैदिकशोधसंस्थां तां होशियारपुरवर्तितया प्रसिद्धाम् ।
विद्याविनोदरसिको बुधमान्यशास्त्री निर्वेतनं सृजति तत्र समस्तकृत्यम् ॥६६॥

हिन्दीं परं न नहि पञ्चनदप्रसिद्धां भाषां शुभामधिकरोति विवोधसिन्धुः ।
अन्यप्रदेशचलितास्वपि तासु सम्यक् दृष्टः क्षमो व्यवहृतावतुलप्रबोधः ॥६७॥

वैदेशिकीषु विविधास्वपि सम्प्रतीतभाषासु दृष्टचरमस्य तथातिदाक्ष्यम् ।
हिन्द्यां यथाऽस्त्यमरसत्कृतवाचि मातृभाषासु संशयलवानवलोकितासु ॥६८॥

शर्मण्यभूलसितवाक्स्थितजातकेषु नीत्वा द्वयं सुरगिरां विभवेऽन्ववादीत् ।
अध्यापनात् विवरणात् सदसि प्रभूतभाषाविदग्रसरतामयमापदेवम् ॥६९॥

तत्रास्ति हासविमुखी मुखराजकन्यानामप्रसिद्धमतिरोचकजातकन्तु ।
यद्विश्वसंस्कृतमितीरितपत्रिकायामासीत्प्रकाशितममूलनिरन्वयञ्च ॥७०॥

पाण्डित्यधर्मविषयेऽस्य यथा प्रसिद्धिरासीत् तथैव दययाऽपि विपूतचेताः ।
यस्माद्दयाप्रसरधर्मविशेषरिक्तं पाण्डित्यमृच्छति कलाविकलस्वरूपम् ॥७१॥

सब्रह्मचारिणमवेक्ष्य रुजाभिभूतमस्वापतेयमवमृग्यशरण्यमेकम् ।
विक्रीय हेमपदकं प्रबबन्ध तस्य सम्यक् चिकित्सितुममानदयानिधानम् ॥७२॥

शिक्षाविकासरहिताभिजनप्रदेशे कृत्वा निजव्ययमशक्यपरिश्रमञ्च ।
अस्थापयच्छुभविचारयुतो डि. ए. वी. विद्यालयं सुदृढमाध्यमिकोपपन्नम् ॥७३॥

इत्थं शिशून् प्रगतिभव्यपथेन नेतुं प्रारम्भशिक्षणगृहं निरमात्तदानीम् ।
यच्चोच्चमाध्यमिकशिक्षणसद्मरूपं कालान्तरे गतमलोकि मुदा जनौघैः ॥७४॥

कन्यासु शिक्षणविधिं सुकरं विधित्सुर्विद्यालयं व्यतनुतैकममोघदृष्टिः ।
येनास्य लोकनिवहाः प्रविमुक्तकण्ठं गायन्ति कीर्तिमचलाममृतांशुकल्पाम् ॥७५॥

आदर्शभूतमखिलार्यजनाभिनन्द्यं शिक्षाप्रचारभरमारचयत् सयत्नम् ।
धर्मप्रथाचरणवर्धितभव्यभावं संस्थात्रयं विजयतेऽद्भुतकृत्यमद्य ॥७६॥

सञ्चालिते धनचयै रहिते डि. ए. वी. विद्यालयेऽर्थकृशतामपनेतुकामः ।
दत्त्वाऽधिकन्तु निजवेतनभागमस्मै पूर्तिं व्यधाद् व्ययगतां बहुकालमेव ॥७७॥

कालेऽशनस्य यदि कोऽप्युपयाति भिक्षुर्गेहं निवेदयति चेदशितुं क्षुधार्तः ।
सत्कृत्य तं प्रथममाशयति प्रमोदात् भुङ्क्ते ततोऽनु परिवारजनैः समेतः ॥७८॥

नैकानि संस्कृतगिरां भवनानि गत्वा द्रव्यव्ययैः सदुपदेशपरैर्वचोभिः ।
यां यां समुन्नतिमतर्कपथप्रवृत्तिं तेषां व्यधत्त भुवि न किं विदिताऽस्ति सा सा ॥७९॥

आवेदनात्सहृदयः सकलः परस्य कर्तुं सदा प्रयततेऽर्थिषु संविभागम् ।
याच्ञां विनैव परिपृच्छ्य निबर्हणोत्कः दुःखस्य कोऽस्ति पृथगत्र मनीषिवर्यात् ॥८०॥

नक्तंदिवं परहिताचरणेऽनुरक्तः शश्वद् गिरां दिविषदां प्रसरे प्रसक्तः ।
विद्वद्व्रजोडुसमुदायकलानिधानं भाग्यादयं विजयते विषये बुधेशः ॥८१॥

चण्डीगढाख्यनगराञ्चितरम्यविश्वविद्यालये प्रमदभारविभूषितान्तः ।
दत्त्वा धनं दशसहस्रमितं विदित्वा न्यूनं प्रमोदमभजन्न तथा महात्मा ॥८२॥

लब्धैस्तु कोषसदनादथ राजकीयात्पुण्यैः कुसीदवसुभिः परिकल्पिताऽभूत् ।
बी-ए-परीक्षणविधौ पदमग्र्यमाप्त्यै वृत्तिर्विदे सुरगिरां वरबुद्धिमत्त्यै ॥८३॥

यद्रक्षकस्य न शतद्वयतोऽधिकः स्यादायः समृच्छतु महाबुधवृत्तिपोषम् ।
सैवेत्थमस्ति नियमो लिखितोऽनिवार्यो निश्चीयते तदनुरोधवशेन वृत्तिः ॥८४॥

अन्येषु शिक्षणनिबन्धनिकेतनेषूत्साहं समेधयितुमध्ययनस्पृहाणाम् ।
स्वामार्थिकीमविगणय्य दशां गुणज्ञो वृत्तेर्विधानमकरोत् सुरवाग्रतेभ्यः ॥८५॥

नश्यन्तु नाम विभवाश्चिरसंचिता नो हास्यामि काणमपि नैव वराटकं वै ।
प्रायः प्रवृत्तिरिह सम्पदधीश्वराणां संदृश्यते कृपणताधिकतावृतानाम् ॥८६॥

अध्यापनाध्ययनपद्धतिरेव नित्यं यस्योचिता विभवलाभपराङ्मुखो यः ।
दत्ते सहस्रबहुलानि स चेद्धनानि जागर्ति कोटिंरपरा किमुदारतायाः ॥८७॥

ग्रन्थस्य शोधजनितस्य च मुद्रणाय दत्तं सहस्रदशकं सुरवाक्प्रियेण ।
दिल्लीस्थिते निखिलविष्टपवन्द्यविश्वविद्यालयेऽग्रगणितेन विदद्वरेषु ॥८८॥

यादृग् भवेज्जगति मानवचित्तवृत्तिर्लेखेन सा विशदतामयतेऽथ वाचा ।
यच्छीलगान्विचरितं बुधत्रोव्यवाक्यमुक्तावलीं विवृणुतोऽस्य मनोगतार्थम् ॥८९॥

विद्याब्धिपारगतभर्तृहरिप्रणीते दुर्गेयतानिलयवाक्यपदीयबन्धे ।
यद्ब्रह्मकाण्डमतुलां विरचय्य तस्य व्याख्यामुपाकुरुत संस्कृतवाङ्मयस्य ॥९०॥

शब्दापशब्दमुखशब्दविवेकमेव प्रस्तावपूर्वपदशोभितरङ्गिणीं च ।
स्वोपज्ञतावदनुवादकलां मनोज्ञां निर्माय पण्डितमनःप्रमदं व्यतानीत् ॥६१॥

उपसर्गार्थचन्द्रिका व्याकरणद्वादशाध्यायी ।
व्याकरणचन्द्रोदयो भागेषु पञ्चसु संग्रथितः ॥६२॥

शास्त्रार्थसंग्रहनदीष्णविपश्चिदग्र्यैरेते समादरदृशा कलिता निबन्धाः ।
अन्ये पदार्थविशदीकरणे समर्था लेखादृते वचसि वा लिखिता निबन्धाः ॥६३॥

विद्यालयेषु गणनासृतिनिःसृतेषु नैकेषु दृश्यतमपुस्तकमन्दिरेषु ।
संयोजितास्तदधिकारिजनैर्गुणज्ञैर्विद्योतयन्ति विदुषोऽस्य मतेर्महत्त्वम् ॥६४॥

निःसीमगौरवविलासितपोविभूत्या शब्दागमे नवनवाध्वनिदेशवृत्त्या ।
विभ्राजतेऽभिनवपाणिनिरित्युपाध्या कल्पेन कल्पतरुरर्थिषु चारुदेवः ॥६५॥

आसीद्यथा कृतिकुलार्चितपादमाधः जीवः सुधीष्वमरभूमिरुहोऽर्थिवर्गे ।
एतर्हि तद्वदभिभाति बुधाग्रगामी प्रष्ठश्च दातृषु शुभाभयचारुदेवः ॥६६॥

एवंविधेन विलसन्मनुजापदेशदेवोद्भवेन वसुधा सफलाभिधाना ।
संजायते यदिह नास्ति वसु क्षमायां ज्ञानातिरिक्तमपरं चिरकालतोऽपि ॥६७॥

कारुण्यनीरनिधिरद्भुतवोधभूतेः कोषो विशालगरिमाश्रितचित्तवृत्तिः ।
नैरुज्यभाक्तनुरगाधगुणाश्रयोऽयं भूयात् श्रिये जनपदस्य शताधिकायुः ॥६८॥

विज्ञानैकनिकेतनेन सुधियां सम्माननाविर्भव-
ज्ज्योत्स्नास्वच्छसमज्ञया सुरभितेनाप्तेन देहोद्भुवा ।
गुर्वाचार्यसुरार्चनप्रवणया गेहाधिवासिश्रिया
वध्वा शिक्षितया सतीप्रमुखया वा मूर्तया श्रद्धया ॥६९॥

आकृत्यानुमितामितप्रतिभया भातेन पौत्रेण वा
पौत्र्यातीव विनीतया जनयितुः सङ्क्रान्तसद्भावया ।
इत्थं संस्कृतिभूमभूषितपरीवारेण नित्यावृतः
जीयाच्छास्त्रविदामलौकिकनिधिः श्रीचारुदेवः कृती ॥१००॥

पूतं महापुरुषजीवनवृत्तमेतद् ध्यातं तथा पठितमाचरितं सयत्नम् ।
भूयाद्भवाय भविनामुदयत्समज्ञासम्मण्डिताय जनताजनितस्पृहाय ॥१०१॥

अन्यदुर्लभविज्ञानप्रथारक्षणहेतवे ।
धन्यापत्यजनित्रेऽस्मै भारताय नमोऽस्तु नः ॥१०२॥

राष्ट्रपतिसम्मानावसरे श्रीचारुदेवशास्त्रिभ्यो दिल्लीप्रदेश-
हिन्दीसाहित्यसम्मेलनार्पितम्

# अभिनन्दनपत्रम्

अमीरचन्द्रशास्त्री

संस्कृतभाषया—

१

रामायणे व्याकरणं प्रकल्प्य प्रकल्प्य वा तत्र तदेव भक्तिः ।
श्रमं कमप्यद्भुतमाश्रयद्यं नूनं भवद्भिः सफलीकृतः सः ॥

२

धारा गिरां काप्यभवत्प्रतीपा, राधामिमां तावदमन्महीह ।
तया भवन्तं भुवि शोभमानं, वन्दारुदेवं किल चारुदेवम् ॥

३

घनेन तन्वा मनसा च वाचा संसेविता संस्कृतगीरनेन ।
काले करालेऽपि जिजीविषन्ती सुखं विशत्यस्य मुखे च लेखे ॥

४

मुखे दधानः स गिरं विरञ्चिर्विख्यायतेऽसौ सुमुखश्च लेखे ।
ताभ्यामुभाभ्यामपि रूपवत्तातिरेकतोऽयं किल चारुदेवः ॥

५

ब्रह्माणमेनं प्रथमं विधाय वेदान् किलास्मै प्रजिधाय देवः ।
व्यासस्तु तेषां सुमुखेन दिव्यमलेखयज्ज्ञानमयं प्रदीपम् ॥

हिन्दीभाषया—

आज लिखूं मैं बरसाने की,
रस बरसाती ललित अटा पर ।
या लिख लूं कुछ नित्य चमकती,
चपला पर, नवजलद घटा पर ।

या शिव की सुरसरिता, वासुकि,
चन्द्रकला से कलित जटा पर ।
या लिख दूं साहित्य मिलन में
चारुदेव की चारु छटा पर ॥

चारुदेव की चारु छटा पर
लिखने को मन करता है।
एक मान्य सहृदय पण्डित को
सहज नमन यह करता है।

उसके विना अटा पर लिखना,
घटा, जटा पर लिखना भी।
वृथा रहा करता है कवि का
प्रकृति छटा पर लिखना भी॥

मिला जगत् को पाणिनि होगा,
कभी भर्तृहरि और पतञ्जलि।
पर मुझको तो मिले रसिकवर,
जिनके प्रति है यह श्रद्धाञ्जलि।

जिनकी रसना के प्राङ्गण में,
मदमाते हों नवल नटन में।
गीत गीतगोविन्द काव्य के,
प्राभातिक औ' सान्ध्य अटन में।

जिनकी तर्कवितर्क कुशल भी,
दृढ़मति कवितामृत सागर में।
मज्जन करती नहीं अघाती,
भर लेती उसको गागर में।

ऐसे रसिक मिले हैं हमको,
जिनके सम्मुख चपल चपल-सी।
कविता चलती हुई न थकती,
पद पद पर रुकती निर्बल-सी॥

हों अभिनन्दन रसिक शिरोमणि,
भावुक कुलशेखर, हों वन्दन।
करते रहें शास्त्र में खण्डन,
पर कविता के हो वर मण्डन॥

नगर नगर में, प्रान्त प्रान्त में,
और राष्ट्र में गौरव पाकर।
हो अभिनन्दित अन्तरराष्ट्रिय,
विपुल दृष्टि से नव रचना कर।

विश्ववन्द्य होकर कवितार्किक-
जनक, जनक की-सी चर्या से।
शतशत वर्षावधि जीवन में,
पुत्रपौत्रकृत परिचर्या से।

सदा सुखित हो, सतत मुदित हो,
इसी भाँति करते आनन्दित।
कोविद कलाधरों के द्वारा,
होते रहें सदा अभिनन्दित।



श्रीचारुदेवशास्त्री पौत्रं शरच्चन्द्रं संस्कृतेऽभिविनयन् ।

# पितामहाष्टकम्

**शरच्चन्द्रः***

यस्य श्रमेण बुद्धिर्मे
संस्कृतेभिप्रवर्तिता ।
तं नमस्याम्यहम्भक्त्या
चारुदेवं पितामहम् ॥१॥

यस्य जीवनमार्गो
यस्य कार्यं महत्तमम् ।
नमाम्यहं शिरसा तं
चारुदेवं पितामहम् ॥२॥

तेनाहं पाठितः शब्द-
शास्त्रं नीतिञ्च बोधितः ।
रघुवंशं महाकाव्यं
कलया परिचायितः ॥३॥

सुपस्तिङः कृतस्सन्धे-
विभक्त्यर्थसमासयोः ।
ज्ञानं यस्याद्वितीयं हि
स आस्ते मे पितामहः ॥४॥

क्लिष्टप्रयोगरुचिमान् रुचिराकृतिर्यो
नित्यं मदीयकुशलं भगवन्तमीशम् ।
सम्प्रार्थ्य, यच्छति मुदा पदशास्त्रशिष्टिम्
मह्यं, गुरुर्मम पितामह एष नम्यः ॥५॥

स्नेहपूर्णान्तरङ्गो यो
मयि श्राम्यत्यनारतम् ।
वैदुष्यञ्च निजं यो हि
मयि संक्रान्तमिच्छति ॥६॥

* श्रीचारुदेवशास्त्रिणां पौत्रश्चतुर्दशवर्षो बालः ।

बालोऽहं सुकुमारश्च
सुकुमारमतिस्तथा ।
वैदुष्यं कथमेतत्स्थं
ग्रहीष्यामीति चिन्तितः ॥७॥

तथापि प्रयतिष्येहं
सर्वभावेन भावितः ।
कर्मण्येवाधिकारो मे
न फलेषु कदाचन ॥८॥

# तपस्वी

कृष्णदेव अग्रवाल

हे न्यायशील हे तपधारी
हे त्यागज्योति महान् ।
हे चारुकाय हे देवतुल्य
हे तेज-पुञ्ज महान् ।।

हे सत्यव्रती हे वीरहठी,
हे कर्मशील हे बलशाली ।
भारती के पावनमठ में,
नई ज्योति है दे डाली ।।

इसी ज्योति से ज्योतित तप
और योग-भोग का बन्धन ।
इसी ज्योति से ज्योतित है,
ज्ञान-काण्ड का मंथन ।।

इसी ज्योति से ज्योतित है,
संस्कृत का यह अनुसंधान । हे न्यायशील० ।।

जीवन की तव हरित वनी में,
उषा रहती मतवाली ।
कविता के सप्त स्वरों में,
गुञ्जित कोकिल मतवाली ।।

मकरंदित हृदय-सुमन का,
उषा करती नव श्रृंगार ।
साधना के शान्त वन में,
होता रहे मन्त्रोच्चार ।।

गुञ्जित तन हो, गुञ्जित मन हो,
अमर गूंज हे गूंज महान् । हे न्यायशील० ।।

जीवन-सर में सरसिज सुख के,
विकसित रहें सतत अनेक ।
उषा के मृदुल करों से,
होता रहे सदा अभिषेक ॥

अमर पीयूष शरच्चन्द्र का,
वर्षण करो धरा पर ।
इन्दु-कुन्द कल-कीर्ति-सत्य से,
भर दो सबके शुभ्र मना कर ॥

हे व्यथित मनों के रंजक पावन !
हे नव विधा के नव विधान । हे न्यायशील० ॥

# वाक्यपदीय के उद्धारक श्री चारुदेवशास्त्री

गौरीनाथ शास्त्री

वर्त्तमान समय में भगवान् भर्त्तृहरि के वाक्यपदीय ग्रन्थ तथा उनके व्याकरण दर्शन के ऊपर विशेष चर्चा हो रही है यह बड़े आनन्द का विषय है। भगवान् भर्त्तृहरि द्वारा प्रतिपादित शब्द ब्रह्मवाद सिद्धान्त अनुपम है। परन्तु दुर्भाग्यवश उनके सिद्धान्तों को पुष्ट करने का प्रयास किसी भी उद्भट विद्वान् ने उस रूप में नहीं किया जिस रूप में अद्वैतवाद के सिद्धान्तों का शङ्कर भगवत्पाद ने किया अथवा मीमांसा सिद्धान्तों का कुमारिल भट्ट ने या बौद्ध दार्शनिक सम्प्रदाय का धर्मकीर्त्ति ने। यद्यपि पुण्यराज, हेलाराज, वाक्यपदीय के व्याख्याकार के रूप में माने जाते हैं तथापि भर्त्तृहरि के दर्शन को सुप्रतिष्ठित करने में उनका योगदान उस स्तर का नहीं कहा जा सकता जितना कि होना चाहिए। अद्वैत वेदान्त के अद्वितीय व्याख्याता शङ्कराचार्य के समकालिक मण्डन मिश्र तथा प्रसिद्ध दार्शनिक वाचस्पति मिश्र के अतिरिक्त अन्य किसी भी दार्शनिक की सहानुभूति भर्त्तृहरि को प्राप्त नहीं हुई। प्रायः अन्य सभी दार्शनिकों ने शब्दब्रह्मवाद का खण्डन किया है। इस खण्डनात्मक प्रवृत्ति में एकमात्र हेतु है—आचार्य भर्त्तृहरि के दार्शनिक मतवाद के सम्यक् व्याख्यान का अभाव। वस्तुतः वाक्यपदीय ग्रन्थ के आधार पर यह निर्णय करना कठिन है कि उन्होंने परिणामवाद या विवर्तवाद के आधार पर अपना सिद्धान्त स्थापित किया या आगम सम्प्रदायानुसार आभासवाद को स्वीकार किया। यही कठिनाई सम्भवतः उन लोगों के सामने भी थी जिन्होंने भर्त्तृहरि दर्शन की आलोचना की है।

भर्त्तृहरि तथा उनके व्याख्याकार पुण्यराज के समय में एक लम्बा व्यवधान है। इसी प्रकार यद्यपि मण्डन मिश्र ने स्फोटसिद्धि में तथा वाचस्पति मिश्र ने तत्त्वबिन्दु में भर्तृहरि के दार्शनिक सिद्धान्तों का अनुमोदन स्तुत्य ढंग से किया तथापि मूलचिन्तक तथा इन विद्वानों के बीच क्रमशः दो तीन शताब्दियों का अन्तर रहा। ग्यारहवीं शताब्दी तथा उसके बाद तो भर्त्तृहरि की कृति लुप्तप्राय रही।

उपरिलिखित विवेचन से एक बात स्पष्ट हो जाती है कि वाक्यपदीय ग्रन्थ की चर्चा वर्तमान समय में जिस प्रकार विद्वानों के आकर्षण का केन्द्रबिन्दु है उसकी पृष्ठभूमि में विद्वान् साधक पं० चारुदेव शास्त्री जी की तपस्या है। आज से लगभग चालीस वर्षों पूर्व पण्डित जी ने वाक्यपदीय का स्वोपज्ञ वृत्ति सहित सम्पादन किया था। उस समय आज की तरह सुविधाएँ नहीं थीं। लुप्तग्रन्थों का अन्वेषण नितान्त

दुरूह कार्य था। अनेकानेक विषम परिस्थितियों का सामना करके पण्डित जी ने इस ग्रन्थ का उद्धार किया। मेरा विश्वास है यह उनके ही सत्प्रयासों का फल है कि आज भर्तृहरि के दार्शनिक चिन्तन के अवदान को गवेषक समझने लगे हैं तथा विद्यार्थी एवं विद्वान् वाक्यपदीय के अध्ययन अध्यापन के लिए प्रोत्साहित हुए हैं। वर्त्तमान युग में जब भी भर्तृहरि के लुप्तग्रन्थ के उद्धारकों की बात चर्चित होगी शास्त्री जी का नाम आदर एवं श्रद्धा के साथ लिया जायेगा।

मैं वयोवृद्ध एवं ज्ञानवृद्ध पं० चारुदेव जी का अभिनन्दन करता हूँ एवं भगवान् भूतभावन विश्वनाथ जी के चरणों में उनके दीर्घायुष्य के लिए प्रार्थना करता हूँ।

## संस्मरण

### विश्वबन्धु

पं० चारुदेव जी और मैंने अपना विश्वविद्यालयीय शिक्षण दयानन्द महाविद्यालय, लाहौर में प्राप्त किया, इस नाते पं० चारुदेव जी मेरे सतीर्थ्य होते हैं। १९१५ में, जब मैंने तृतीय वर्ष में प्रवेश किया था, तब यह प्रथम वर्ष में प्रविष्ट हुए थे। इनके वारे में कुछ ही दिनों में यह चर्चा होने लग गयी थी कि 'चरणदास' नाम वाले एक नये छात्र आए हैं, जिनकी संस्कृत के अध्ययन में विशेष रुचि है। इन्होंने अपनी इस रुचि के फलस्वरूप ही उन्हीं दिनों संस्कृत की 'प्राज्ञ' परीक्षा उत्तीर्ण की और संस्कृत में अनुवाद करने की एक 'अभ्यास-पुस्तिका' भी प्रकाशित की। उन दिनों ये अपने नाम के आगे 'पाणिनीय', इस शब्द को लगाया करते थे। चार वर्ष पीछे, १९१९ में, जब मैं एम. ए. की और ये बी. ए. (आनर्ज़) की परीक्षाओं की तैयारी में सलग्न थे, तो मुझे इन्हें 'वैदिक स्वर' के विषय में थोड़ा-बहुत परिचय कराने का भी अवसर मिला। ये योग्य अध्ययन-निरत छात्र तो थे ही, आर्य समाज के सत्संगों में भी नियमपूर्वक सम्मिलित होते थे और आर्ययुवकसमाज, जिसका मैं मन्त्री था, के सभी कार्यक्रमों में भी बड़े उत्साहपूर्वक भाग लिया करते थे।

मैंने १९२१ में, दयानन्द महाविद्यालय प्रबन्ध कर्त्री सभा के अधीन, "दयानन्द ब्राह्म महाविद्यालय' के नाम से राष्ट्रीय (अ-विश्वविद्यालयीय) संस्कृत-संस्थान की लाहौर में स्थापना की। उसी के अन्तर्गत, १९२४ में, मेरे स्वतन्त्र संचालकत्व में 'विश्वेश्वरानन्द वैदिक शोध संस्थान' के कार्य का भी नव-व्यवस्थित रूप में प्रारम्भ हुआ। पं० चारुदेव जी, तब तक बड़ी योग्यतापूर्वक एम. ए. एवं शास्त्री की परीक्षाएँ उत्तीर्ण कर कुछ समय पर्यन्त डी. ए. वी. कालेज जालन्धर में प्राध्यापक रहने के उपरान्त, स्थिर रूप से, डी. ए. वी. कालेज लाहौर में प्राध्यापक नियुक्त हो गए थे। उन्हीं दिनों, ये उक्त "विश्वेश्वरानन्द वैदिक शोध संस्थान" में भी, कुछ समय पर्यन्त मेरे साथ कार्य करते रहे थे।

स्व० पं० भगवद्दत्त जी व उनके कुछ साथियों ने १९३० में मेरे विरुद्ध एक संकीर्ण साम्प्रदायिक आन्दोलन का प्रारम्भ किया। वे लोग आर्य-सामाजिक जनता को यह कह कर मेरे विरुद्ध उकसाने में लग रहे थे कि मैं स्वामी दयानन्द सरस्वती के मत के विरुद्ध होकर वेद में अनित्य इतिहास अर्थात् जड़ एवं चेतन

पदार्थों के वैयक्तिक नामों की विद्यमानता को स्वीकार करता हूँ। आर्य समाज की इस भीतरी फूट से आशंकित होकर, स्व० महात्मा हंसराज जी ने मेरे एवं स्व० पं० राजाराम जी के सम्मिलित सुझाव के अनुसार अपनी अध्यक्षता में १९३१ में आर्य समाज के प्रमुख विद्वानों की एक विशेष गोष्ठी आयोजित की, जिसकी बराबर ५ दिन पर्यन्त प्रतिदिन प्रायः आठ-आठ घण्टें की बैठकें होती रहीं। उस गोष्ठी में स्व० महात्मा नारायण स्वामी जी, स्व० स्वामी अच्युतानन्द जी, स्व० स्वामी सर्वदानन्द जी, स्व० स्वामी नित्यानन्द जी, स्व० पं० आर्य मुनि जी, स्व० पं० रामचन्द मेहता जी, स्व० पं० राजाराम जी, स्व. पं० भगवद्दत्त जी एवं स्व० पं० ब्रह्मदत्त जिज्ञासु जी आदि लगभग ५० विद्वानों ने भाग लिया। पं० चारुदेव जी भी उसमें सम्मिलित रहे। गोष्ठी में विचारणीय विषय यह था कि "क्या निरुक्तकार यास्काचार्य वेद में अनित्य इतिहास मानता है अथवा नहीं।" स्व० पं० राजाराम जी का तथा मेरा एवं पं० चारुदेव जी का यह समान मत रहा कि "नहीं मानता"। फलतः, कोई निर्णय न हो सका और भीतरी युद्ध और भी अधिक बलपूर्वक ठन गया। पं० चारुदेव जी ने इस गृह-युद्ध में और अधिक उत्कट रूप से तो भाग नहीं लिया था, परन्तु यह सभी को विदित था कि उनकी हार्दिक सहानुभूति बराबर हमारे पक्ष में ही बनी रही।

यह गृह-युद्ध अन्ततः १९३४ के मध्य में इस बात पर निर्णीत होकर प्रायः शान्त हो गया कि मेरा "दयानन्द ब्राह्म महाविद्यालय" के साथ एवं पं० भगवद्दत्त जी का "डी० ए० वी० कालेज अनुसन्धान विभाग" के साथ, जिसके वे अध्यक्ष थे, कोई सम्बन्ध न रहे तथा मुझे उनके स्थान पर "डी० ए० वी० कालेज, अनुसन्धान विभाग" का संचालक बना दिया जाए। इस निर्णय के फलस्वरूप, "डी० ए० वी० कालेज, अनुसन्धान विभाग" का रा० ब० लालचन्द स्मारक पुस्तकालय" मेरे कार्य का केन्द्र बन गया और वहाँ पर मैंने "विश्वेश्वरानन्द वैदिक शोध संस्थान" का कार्यालय भी स्थापित कर लिया। पं० चारुदेव जी डी० ए० वी० कालेज के संस्कृत-विभाग में प्राध्यापक होने के नाते प्रायः प्रतिदिन "लालचन्द पुस्तकालय" में आते थे। इस कारण, हमारा पारस्परिक संसर्ग अब और भी अधिक बढ़ गया।

उन दिनों मुझे प्रतिवर्ष ३-४ सप्ताह की पर्वतीय पद-यात्रा करने का अभ्यास था। उसी के अनुसार, १९३५ के ग्रीष्मावकाश के दिनों में मैंने पं० चारुदेव जी प्रा. बहादुर मल्ल जी, स्व० पं० रामानन्द जी, तथा स्व० प्राध्यापक ज्ञानचन्द भाटिया जी के साथ मिल कर शिमला से कुल्लू-मनाली की पद-यात्रा की। हम प्रतिदिन लगभग १२-१३ मील का एक पड़ाव भर चलते थे और फिर वहीं किसी अच्छे रम्य स्थान पर विश्राम करते थे। पं० चारुदेव जी ने विधिपूर्वक संगीत का अभ्यास भी कर रखा था। इसलिए, हमें प्रायः प्रतिदिन ही उनके मधुर गान सुनने का भी अवसर मिलता रहता था। कहना न होगा कि इसके फलस्वरूप हमारी वह पद-यात्रा और भी अधिक रसीली बन पड़ी थी।

पं० चारुदेव जी का मेरे एवं विश्वेश्वरानन्द वैदिक शोध संस्थान के प्रति स्निग्ध आत्मीयता का भाव हमारे निकटवर्ती परिचय के आरम्भ से ही बराबर बना चला आता है। १९३६ में संस्थान का सरकारी पंजीकरण सम्पन्न हुआ। उनके नियमों के अधीन निश्चित शुल्क-दान देकर जो सज्जन वि० वै० शो० सं० सभा के सर्वप्रथम जीवन-सदस्य बने, उनमें पं० चारुदेव जी भी सम्मिलित थे। १९४७ में हुए देश-विभाजन के उपरान्त संस्थान लाहौर से विस्थापित होकर साधु आश्रम, होशिआरपुर में पुनः प्रतिष्ठापित हुआ। उस समय उसकी बढ़ी हुई आवास-विषयक आवश्यकताओं की पूर्ति के लिए लगभग १०० नए कमरे बनवाए गए। उस अवसर पर अनेक दानी सज्जनों ने एक-एक छोटे-बड़े कमरे की लागत प्रदान की। पं० चारुदेव जी ने भी उस अवसर पर एक छोटे कमरे के निमित्त १५०० रु० प्रदान किए। इसी प्रकार, इन्होंने १९५९ में संस्थान की एम. ए. (संस्कृत) की श्रेणियों का अध्यापन-कार्य भी पांच मास पर्यन्त एवं १९६६ में व्याकरण-सम्बन्धी कुछ शोध-कार्य भी ३-४ मास पर्यन्त अवैतनिक रूप से किया।

# संस्मरण

## आत्मानन्द विद्यालङ्कार

श्री चारुदेव जी को अपनी आन्तर प्रेरणा ने उन्हें कौमारावस्था में ही फ़ारसी भाषा को त्यागकर संस्कृत ग्रहण करने को वाधित किया। तब से आज तक उनके जीवन में प्रेरणा दे रही भावना का मूल क्या है? इसके समझने में मुझे उनके एक वाक्य ने बड़ी सहायता दी। लगभग दो वर्ष पहले मैं एक मोटर की लपेट में आकर शय्याशायी हो गया। पण्डित चारुदेव जी शास्त्री अपने सुपुत्र डा० सत्यव्रत शास्त्री के साथ कुशल-क्षेम पूछने के लिए मेरे घर पर पधारे। परस्पर संवाद के दौरान उन्होंने एक वाक्य कहा जिसका तात्पर्य यह था "मैंने (श्री चारुदेव जी ने) अपने पौत्र आयुष्मान् शरच्चन्द्र के हृदय में भगवान् पाणिनि आचार्य के प्रति श्रद्धा भर दी है"। इस पाणिनि-सूत्र तुल्य वाक्य ने मुझे उनके स्वभाव-गुणों-कर्मों को समझने में अन्तर्दृष्टि दे दी। अपने मेट्रिक्यूलेशन काल से अब तक संस्कृत के प्रति यह श्रद्धा उनके हृदय में ज्योतिर्मय दीप होकर जल रही है—जग रही है। इसी श्रद्धा दीप से वे अपने कुल-कुटुम्ब, अपने मित्रों, शिष्यों और सामान्य जनता में संस्कृत के प्रति और संस्कृत व्याकरण के प्रति और पाणिनि-कात्यायन-पतञ्जलि के प्रति श्रद्धा ज्योति जगाते रहते हैं। एकलव्य और अर्जुन के समान वे एक ध्येय-निष्ठ हैं और उनकी इस अजस्र-अखण्ड एकनिष्ठता का अभिनन्दन कौन सहृदय विद्वान् न करेगा।

अब लगभग ५५-६० वर्ष हो गए है इस सुदीर्घ काल में शास्त्री जी इस श्रद्धा से प्रेरित होकर तपः स्वाध्याय निरत होकर अपना कर्तव्य-धर्म पालन करते रहे हैं। महाभाष्यकार भगवान् पतञ्जलि ने कहा है "चतुर्भिः प्रकारैर्विद्योपयुक्ता—आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति"। इस वचन के अनुसार शास्त्री जी अपनी नाना विद्याओं का उपयोग करते हैं। वे अपनी मातृभाषा पंजाबी, हिन्दी, उर्दू, संस्कृत, अंग्रेज़ी, जर्मन आदि भाषाओं के ज्ञाता हैं, वेदशास्त्र-सम्पन्न हैं। हाँ, लोगों की दृष्टि में वे प्रधानतया शब्दशास्त्री हैं—शाब्दिक हैं। इतर शास्त्रों में भी उनकी पर्याप्त गति है। उनके अध्यापकों ने उन्हें पण्डित बनाया, पर महापण्डित उनकी अपनी गुणसम्पद् ने उन्हें बनाया। एकलव्य और अर्जुन की तरह निरन्तर अभ्यास से वे आचार्य बन गए हैं। डी० ए० वी० कालिज में संस्कृताध्यापक के रूप में कार्य करते हुए अपने सहयोगियों श्री पं० राजाराम जी, म०

म० पण्डित आर्यमुनि जी, पं० भगवद्दत्त जी, प्रो० सरकार जी और श्री पं० विश्वबन्धु जी आदि की एक सुदृढ़ मण्डली ने, एक तेजस्विनी-प्रतिभाशालिनी मण्डली बन कर, विदेशी भाषा-संस्कृति, सभ्यता के और इस्लामीयत के गढ़ लाहौर में, अपना ऐसा प्रताप और यश फैलाया कि सदियों बाद आर्य धर्म और आर्य संस्कृति का सौरभ दूर दूर तक फैलने लगा। इसमें दूसरे हिन्दू वर्गों का भी सहयोग रहा। पर यह सारा दृश्य भव्य और तेजस्वी था।

अपने अध्यापन कार्य के अतिरिक्त शास्त्री जी ने अपने संस्कृत के प्रवचन-व्यवहार काल में पण्डित मण्डली में, गोष्ठियों में अनेक भाषण दिए, अनेक लेख लिखे, अनेक पुस्तकें लिखीं। बालोपयोगी संस्कृत भाषा, संस्कृत व्याकरण, अनुवाद, प्रस्ताव, कई संस्कृत काव्य-नाटकों पर अंग्रेज़ी टीकाएँ, गान्धि-चरित, शब्दापशब्द-विवेक, व्याकरणमहाभाष्य प्रथम नवाह्निक का अनुवाद, अनेक खण्डों में महाग्रन्थ व्याकरणचन्द्रोदय आदि। वे संस्कृत के प्रत्येक क्षेत्र में संस्कृत को एक प्राणमयी जीवित भाषा के रूप में दर्शाते हैं। संस्कृत के अभिधेयार्थ के अतिरिक्त, द्योत्य, गम्य, लक्ष्य, व्यंग्य अर्थों से पूर्ण पद, वाक्य, महावाक्य के संग्रह और प्रयोग में उनका परिश्रम विलक्षण है। इन नानाविध अर्थों में परस्पर सूक्ष्म भेद को संस्कृत वाङ्मय-रत्नाकर से खोज-खोजकर, अपने ग्रन्थों में यथास्थान समाविष्ट करना—यह उनका अद्भुत कार्य है।

आधुनिक ढंग से एम. ए. तक, अल्प-प्राण स्थूल संस्कृत पढ़ने वालों के लिए और दूसरी ओर महाप्राण-गहन-सूक्ष्म संस्कृत पढ़ने वालों के लिए भी उन्होंने पिछले लगभग ५५ वर्षों में ज्ञानराशि और शब्द-राशि संगृहीत कर दी है। संस्कृत के मुहावरे के संग्रह और सूक्ष्म ऊहापोह, मुनित्रय के व्याकरण नियमों की सूक्ष्म विवेचना और उनके उदाहरणों के संग्रह ने उन्हें अपने विलक्षण क्षेत्र में मूर्घन्य विद्वान् बना दिया है। व्याकरण के दर्शन वाक्यपदीय की रक्षा और परिशुद्धि उनका एक ज्योतिर्मय कार्य है। यह कार्य उन्होंने तब आरम्भ किया था जब दूसरों ने इसे उपेक्षित सा कर रखा था। वे सुदूर दक्षिण तक इसकी खोज में गए और सभाष्य इस ग्रन्थ को सुचारु रूप दिया। अब भी वह रूप अपनी प्रामाणिकता रखता है और विद्वानों में आदर पाता है। यह सब उन्होंने अपनी श्रद्धा, अपने पुरुषार्थ, अपने उत्साह और अपने वित्त के आधार पर किया।

वे क्षण-क्षण विद्या संचय करते हैं, तपोनिष्ठ हैं, अर्थ के संचय और सद्व्यय में सावधान हैं। स्वावलम्बी हैं अपने गृह के स्वामी हैं। उनका अपना भव्य पुस्तकालय है, अपना पुस्तक प्रकाशन है।

अपने सुपुत्र को अपने श्रद्धेय मार्ग पर चला कर आगे पुत्रवधू, पौत्रादि को भी उसी मार्ग पर स्थिर रखा है, पुरातन और आधुनिक विद्याओं का उचित मिश्रण करके। हाँ मूलग्राही पाण्डित्य ग्रहण कराकर, पल्लवग्राही पाण्डित्य नहीं।

जिस देश-काल-परिस्थिति की वे उपज हैं वह संघर्षकाल रहा है। परन्तु वे सनातनधर्म और आर्य समाज, पूर्वीय और पश्चिमीय सभ्यता-संस्कृति और पक्ष, नवीन और प्राचीन मार्ग—सबमें से युक्तियुक्त तत्त्वों का स्वोपज्ञ समन्वय करते रहते हैं। ठेठ, दृढ़बन्ध, अशिथिल परिपक्व, साधु-शुद्ध शास्त्रीय संस्कृत में उनके लेख और भाषण होते हैं और दूसरों से भी वे ऐसी संस्कृत की अपेक्षा रखते हैं। इसलिए गोष्ठी-सभा-समाज में उनकी उपस्थिति में पण्डितों को भी सावधान होकर भाषण देना पड़ता है। महापण्डितों की उपस्थिति का यह भी वड़ा उपकार है, नहीं तो सब कोई निर्भय, निःशङ्क होकर शिथिल शुद्धाशुद्ध, असाधु-संस्कृत का प्रयोग करते जायें।

संस्कृत के प्रचार प्रसार के सम्मेलनों, समाजों, गोष्ठियों में सम्मिलित होकर चुपचाप उन्होंने वहुत सहयोग दिया है। अब भी वृद्धावस्था में, जरा-जीर्ण शरीर से, यातायात की कठिनाइयों के होते हुए भी वे छोटी-छोटी गोष्ठियों में भी सम्मिलित होते हैं और यदि उनसे कोई घर पर आकर लाभ उठाना चाहे तो किसे मनाही है?

इस प्रकार इस लघुलेख में, उनके बारे में बहुत अल्पबोध होने के बावजूद यह बात स्पष्ट हो जायेगी कि महापण्डित श्री चारुदेव जी शास्त्री अपनी स्थिर श्रद्धा, परम पुरुषार्थ, विद्या-व्यासङ्ग, जागरूकता, प्रतिभा, तपः, स्वाध्याय के वल पर एक-एक पग ऊपर ऊपर चढ़ कर पाण्डित्य सोपान के मूर्धन्य पर्व पर चढ़े हैं। अपने ढंग के वे अद्वितीय विद्वान् हैं। आर्यविद्याओं, संस्कृत भाषा, आर्यजाति की सेवा वे पिछले ५०-५५ वर्षों से अखण्ड रूप से कर रहे हैं। उनके कार्य, उनका जीवन, उनका अपने वंश को वैदिक-आर्य-हिन्दू-धर्म, संस्कृति, सभ्यता से सुसंस्कृत करना, उनकी ग्रन्थराशि, हमारे धर्म, समाज, देश की निधि में एक उज्ज्वल रत्न है। भगवान् करें कि ऐसे विद्वान् चिरायु होकर अपने देशवासियों और विद्वानों से उत्तरोत्तर आशीर्वाद, नमस्कार और यश प्राप्त करते रहें।

# ऋग्वेदे काव्यसुषमा

## प्रह्लादकुमारः

याथातथ्येनोक्तं खलु वर्ड्स्वर्थमहोदयेन प्रवलभावधाराया हृत्पटलतस्सद्यस्समुच्छलनमेव वास्तवं काव्यं भवतीति[1]। वस्तुतस्समाजस्य शैशवावस्थायामेव कविवृद्धा वसन्ति। ऋषेरावेगोद्गीर्णोद्गारान् देवताः प्रति प्रापयन्तीम्—

ब्रह्मा कृणोति।[2]

इत्यृचमुद्धृत्य दाण्डेकरमहोदयो वैदिककविताया अन्तःप्रेरणायास्तुलनाम् आंग्लीयरोमाण्टिककवितया करोति[3]।

ऋग्वेदे निसर्गसुन्दरं काव्यं समुल्लसतितमाम्। काव्येऽस्मिन्नपि प्रणयिनामुल्लासो विरहिणां विलापो वीराणामुद्घोषो भक्तानामुद्गारश्शब्दानां सौष्ठवम् अर्थानां गाम्भीर्यं भाषायास्सालङ्कृतत्वं भावानामूष्मा सुतरामाविष्करोति कविताकामिन्या विलासं हासञ्च। तद्धि भावानामुद्दीपनमनुरञ्जनमलङ्करणञ्चाञ्जसाऽऽवामति। तत्रोच्चारणे झङ्कृतिरौज्ज्वल्यमर्थप्रौढिरुक्तिवैचित्र्यमग्राम्यत्वं स्वाभाविकत्वं शब्दगुम्फश्च सम्यग् भावोद्दीपवनमापाद्य सुतरां रसचर्वणामाकलयति। औपम्यविवर्तंतयानेकेऽर्थालङ्कारा अत्र स्वां छटामाविष्कुर्वन्ति। पदे-पदे वर्णावृत्तिः पदावृत्तिः पादावृत्तिर्भावसंगोपनमभिधेयवक्रता च, अनुप्रासपुनरुक्तवदाभास-यमक-पुनरुक्तप्रकाशादिशब्दालङ्कारान् उद्भावयन्ति। मानवीकरणस्य यादृक् प्राकृतिकं समुज्ज्वलं निष्कलङ्कञ्चोदाहरणमत्र काव्ये दृग्गोचरीभवति न तादृग् विश्वसाहित्येऽन्यत्र। विशेषतश्च देव्युषा अनिन्द्या त्रिभुवनसुन्दरीवात्र काव्यरङ्गमञ्चे समुपस्थिता रञ्जयति लोकचक्षूंषि विकासयति च सहृदयानां हृदयारविन्दानि। देवः सूर्य उषोरमणीसौभाग्यभोगभाग्यवान्। तदेवमुषःसूक्तेषु शृङ्गाररसच्छटा दर्शनीयैव। तथा हि—

कन्येव तन्वा शाशदानाँ एषि देवि देवमियक्षमाणम्।
संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती[4]॥

---

१. Lyrical Ballads, Preface.

२. ऋ० १।१०५।१५।

३. "In this connection one may be reminded of the Wordworthian Conception of Poetry as a spontaneous overflow of powerful feelings."

Hṛd in the Ṛgveda, *Siddha Bhārati*, Pt. I, p. 139.

४. ऋ० १।१२३।१०।

स्ववल्लभं सूर्यं दृष्ट्वा तरुण्या उषसो मनो नृत्यदास्ते स्मयमानवदना च सा, अभिमतं दातुमिच्छन्तं प्रियं प्रति प्रतिष्ठते तत्सम्मुखञ्च स्वकीयं वक्षो विवृणोति । अत्र स्थायिभावो रतिः । आलम्बनं सूर्यः । स्मितमभिसरणञ्चानुभावः । हर्षश्च सञ्चारिभावः । एवं बहुषु मन्त्रेषु सूर्योषसोः प्रणयवर्णनानि प्रसभं हरन्ति हृदयानि सहृदयानाम् ।

ऋग्वेद उर्वशीपुरूरवसोः प्रसिद्धं प्रणयाख्यानम्[1], अतिसंक्षिप्ततयोपन्यस्तमप्यन्तर्मर्माणि स्पृशतीति न निगूढं नैगमानाम् ।

इदम् उर्वशीपुरूरवसोः प्रेमाख्यानं कविशिरोमणिकालिदासविरचितस्य 'विक्रमोर्वशीयम्' इति नाम्नो रूपकस्यापि बीजमिति न तिरोहितं विपश्चिताम् ।

ऋग्वेद[2] एव (बृहद्देवता ५।७४) श्यावाश्वो नाम कश्चिद् ऋषिर्विरहविह्वलो राजानं रथवीतिं प्रति तस्य दुहितरमभिलक्ष्य देव्या रात्र्या स्वप्रणयसन्देशं प्रेषयति—

> एत॑ मे॒ स्तोम॑मूर्म्ये दा॒र्भ्याय॒ परा॑ वह । गिरो॑ देवि र॒थीरि॑व[3] ।
> उ॒त मे॑ वोचता॒दिति॑ सु॒तसो॑मे॒ रथ॑वीतौ । न कामो॒ अप॑ वेति मे[4] ॥

प्रकरणेऽत्र विप्रलम्भशृङ्गारवर्णनं बलात् स्पृशति चेतस्सचेतसाम् । एतादृशानि नानाविधानि प्रकरणानि 'ऋग्वेदे' दृष्टिपथमुपयान्ति ।

वीररसस्य रोमहर्षकरं वर्णनं वयमिन्द्रसूक्तेषु लभामहे । इन्द्रो मूर्तिमान् वीररस एवेति हेतोः कदाचित्स काव्यशास्त्रिभिर्वीररसस्य देवतात्वेन भावितः—"महेन्द्रदैवतः[5]" ।

दुराशयमसुरं वृत्रं वज्रघातं हन्तुमिन्द्रस्योत्साह ऋग्वेदस्य नैकेषां सूक्तानां प्रधानविषयो वर्तते । तथा हि श्रीमद्भिर्वागीशविद्यालङ्कारमहोदयैस्सुष्ठिवदं लक्षितम् —"ऋग्वेदान्तर्गतदशममण्डलस्य त्र्यधिकैकशततमं समग्रं सूक्तं वीररसकाव्यम् इति । युद्धार्थं सेनासन्नाहसमये राजपुरोहितः सेनाया मनोबलवर्धनायेन्द्रस्य स्वनृपतेः सामर्थ्यं रणकौशलं सर्वदा समरसज्जतां शत्रून् प्रति भीषणतां च वर्णयन् स्तौति—

> आ॒शुः शिशा॑नो वृष॒भो न भी॒मो,
> घ॑नाघ॒नः क्षोभ॑णश्चर्षणी॒नाम् ।
> सं॒क्रन्द॑नोऽनिमि॒ष ए॑कवी॒रः,
> श॒तं सेना॑ अजयत् सा॒कमिन्द्रः[6] ॥

---

१. ऋ० १०।९५।
२. ऋ० १०।६१।
३. ऋ० ५।६१।१७।
४. ऋ० ५।६१।१८।
५. सा० द० ३।२३२।
६. ऋ० १०।१०३।१।

अयमिन्द्र आशुः-क्षिप्रकारी। शिशानः—तीक्ष्णतेजाः तीक्ष्णप्रज्ञो वा। वृषभ इव शत्रूणां त्रासकः। घनाघनः—शत्रूणामतिशयेन घातकः। चर्षणीनां क्षोभणः—रिपुजनानां क्षोभजनकः। संक्रन्दनः—प्रत्यर्थिनां क्रन्दयिता। यस्याक्रमणमसहमानास्ते क्रन्दन्तीत्यर्थः। निमेषरहितः। निमेषवतो निमेषराहित्यमनुपपद्यमानं तस्य सर्वदा जागरूकतां समरसज्जतां च व्यनक्ति। एकवीरः—अप्रतिहतपराक्रमः। शतं सेनाः साकमजयत्—संभूय समागतानि शत्रूणाम् अनेकान्यनीकानि जयति। जेतुं क्षम इत्यर्थः। एतेन, भाविसमरे युष्माकं विजयो ध्रुव इत्यपि व्यज्यते।

अत्र शत्रुसेनानाशनम् आलम्बनविभावः। तस्य सम्भूयाक्रमणमुद्दीपनम्। इन्द्रगत उत्साहः स्थायिभावः। तस्य वृषभवद् गर्जनं शत्रुसेनायाः क्षोभणं प्रत्याक्रमणादिकञ्चानुभावाः। आवेगोग्रतादयः सञ्चारिणः। एषां सर्वेषां संयोगात्सहृदयेषु वीररसानुभूतिर्जायते[1]।"

त्वं चिदेषां स्वधया मदन्तं मिहो नपातं सुवृधं तमोगाम्।
वृषप्रभर्मा दानवस्य भामं वज्रेण वज्री नि जघान शुष्णम्॥[2]

इत्यादौ मन्त्रस्तोमे दानवो वृत्र आलम्बनम्। अन्तरिक्षस्य जलान्यवरोद्धुं शयनं, तमसि वर्धनं, स्वधया मादनम्, अन्याश्च वृत्रचेष्टा उद्दीपनम्। इन्द्रेण वज्रप्रहारो वज्रक्षेपणं वाऽनुभावः। उग्रतामर्षो वा सञ्चारिभावः। एषां संयोगाच्च वीररसनिष्पत्तिः। एवमेव—वल-शुष्ण-नमुचि-चुमुरि-धुनि-पिप्रु-स्वश्न-रुधिक्रोरणार्बुद-कुयव-मृगय-व्यंसादयो दानवास्सुविक्रान्तस्येन्द्रस्य वज्रस्य लक्ष्यीभूता म्रियन्ते। एषु वर्णनेषु इन्द्रस्य शौर्योत्साहोग्रता-चित्रणानि पाठकानां चेतस्सु वीरतायाः सञ्चारं कुर्वन्ति। तत्र चेन्द्रस्य रणे मदः, वज्रघातेषु हर्षः, समरादपलायनं, भीताभयप्रदानमित्यादयो वीररसस्यानुभावाः स्पष्टं समुपवर्णिताः। एतादृशानि स्थलानि युद्धवीरस्योत्कृष्टान्युदाहरणान्यवगन्तव्यानि। तथैव बलवीरस्य दयावीरस्य दानवीरस्य चोदाहरणान्यप्यृग्वेदे शतश आपतन्तीति मनीषिभिस्तत्रान्वेष्टव्यानि। युद्धभूमेरपि किमपि स्वभावोक्तिसंवलितं सजीवं वर्णनमुपन्यस्तम् ऋषिणा—

अव स्वराति गर्गरो गोधा परि सनिष्वणत्।
पिङ्गा परि चनिष्कददिन्द्राय ब्रह्मोद्यतम्॥[3]

समराङ्गणे हि गर्गरध्वनियुक्तो वाद्यविशेषो युद्धे भयं शब्दयति। गोधा हस्तघ्नः परितो भृशं स्वनति। पिङ्गा पिङ्गवर्णा ज्यापि परिस्कन्दतीति। दुन्दुभिमभिमृशंश्चाह—

१. द्रष्टव्यम्—गुरुकुलपत्रिका, सितम्बर १९७०, पृ० ६३।
२. ऋ० ५।३२।४।
३. ऋ० ८।६९।९।

आ क्रन्दय बलमोजो न आ धा निः ष्टनिहि दुरिता बाधमानः ।
अप प्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीळयस्व ॥[1]

दशममण्डलान्तर्गतं समस्तमप्यक्षसूक्तं[2] करुणभावस्यानुपमं वर्णनं विद्यते । निखिले सूक्ते गतसर्वस्वस्य कितवस्य शोच्या दशा चित्रार्पितेव प्रत्यक्षीक्रियते । तदीय-चेतोवैक्लव्यं कस्य वा सचेतसश्चेतो न द्रावयेत् ? तस्य मनोदशाया यद् वैज्ञानिकं वर्णनमत्र रचितं तद् विश्वसाहित्येऽनुपममेव ! अनुव्रतामनुकूलां जायामेकस्याक्षस्य कारणात् परित्यज्य तदीयहृदयं महान्तमनुतापं भजते । इदानीं तु तस्य श्वश्रूस्तं द्वेष्टि । भार्या गृहागमात् तं निरुणद्धि । पुनः पुनर्याचमानोऽपि कितवो धनदानेन सुखयितारं कमपि न लभते । किं चातो विडम्बना महत्तरा स्याद् यदस्य कितवस्य भार्यां तत्समक्ष-मेवान्ये प्रतिकितवा वस्त्रकेशाद्याकर्षणेन परामृशन्ति । तस्य पितरौ भ्रातरश्चापि तस्याभिज्ञानं तिरस्कुर्वन्ति कथयन्ति चान्यान् उत्तमर्णान् कितवान् रज्ज्वा बद्धमेतं यथेष्टदेशं नयतेति—

"न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत् ।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् ॥
द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम् ।
अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम् ॥
अन्ये जायां परि मृशन्त्यस्य यस्यागृधद्वेदने वाज्य१क्षः ।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम्" ॥[3]

हन्त ! ऋषिणोपनिबद्धं पराजितकितवदशापरिचायकम् इदं सूक्तम् अन्तर्मर्म बहुतरं स्पृशति । हृत्पटले च मृच्छकटिकगतद्यूतनिन्दाप्रसङ्गाद् अधिकतरं प्रभावमुप-जनयति ।

ऋग्वेदस्य विषयानुरूपं हास्यरसः प्रायेणालब्धास्पदोऽपि हासस्य स्थायिभावस्य जीवनस्याभिन्नाङ्गतया क्वचित्पदं कुर्वन् क्वचिन्मन्दस्मितं क्वचिच्चोन्मुक्तहासमुप-जनयति । तद्यथा सोमरसं पायं पायमिन्द्रस्य श्मश्रूण्यपि क्लिन्नानि जायन्ते । तदा च सोमपानेन मत्तस्सन् स वायुर्वनमिव स्वश्मश्रूण्युत्कम्पयति—

सो चिन्नु वृष्टिर्यूथ्या३ स्वा सचाँ इन्द्रः श्मश्रूणि हरिताभि प्रुष्णुते ।
अव वेति सुक्षयं सुते मधूदिद्धूनोति वातो यथा वनम् ॥[4]

१. ऋ० ६।४७।३० ।
२. ऋ० १०।३४ ।
३. ऋ० १०।३४।२-४ ।
४. ऋ० १०।२३।४ ।

सायणाचार्योऽत्र 'इन्द्रः स्वशरीरमुत्कम्पयति' इत्याह । किन्तु 'प्र श्मश्रु दोधुवत्' इत्यस्यैव सूक्तस्य प्रथममन्त्रस्य प्रामाण्येन तस्य श्मश्रुण उत्कम्पनमेव प्रासङ्गिकं प्रतिभाति । अत्र चोपमा हास्यरसं पुष्णाति । इन्द्रश्मश्र्वत्रालम्वनं तत्कम्पनं चोद्दीपनम् ।

सम्पूर्णमपि मण्डूकसूक्तं वर्षारम्भे मण्डूकानामतिहास्यकरं वर्णनं प्रस्तौति । शरत्प्रभृत्यावर्षर्तोरेकं संवत्सरं शशयानाः शिश्याना वर्षणार्थं तपश्चरन्त इव बिल एव सन्तो मण्डूका व्रतचारिणो ब्राह्मणा इव पर्जन्यप्रीतिकरीं वाचं प्रवदन्ति । महति सरसि निर्जले घर्मकाले शुष्कं दृतिमिव शयानमेवं मण्डूकगणं यदा वृष्टिधारा अभिगच्छन्ति तदा यथा वत्सैस्सङ्गतासु गोषु महान् घोषो जायते तद्वद् वृष्टे पर्जन्ये मण्डूकानां महान् कलकलो जायते । शिक्ष्यमाणः शिक्षकस्य वाचं यथानुवदति तथा मण्डूकानां मध्ये कश्चिन्मण्डूकोऽन्यस्य कस्यचन मण्डूकस्य वाचमनुकरोति । यदा च शोभनवाचो मण्डूका वृष्ट्युदकानामुपरि प्लवमानाः शब्दं कुर्वन्ति तदैषां शरीरं स्फीतावयवमेव भवति । एतादृशं मण्डूकप्लवनं दर्शकस्य हास्यमेव जनयति ।

एतादृशसूक्तानां वस्तु प्रात्यहिकजीवनादात्तमपि कञ्चन प्रत्युपहासमवहेलनं वा न प्रकटयति । अतः, श्री मैक्समूलरमहोदयस्यैवं मतं यदिदं सूक्तं याज्ञिकान् ब्राह्मणान् प्रति व्यङ्ग्यरूपमस्तीत्यश्रद्धेयम् । वस्तुतस्त्वत्र प्रावृडारम्भे मण्डूकानभिलक्ष्येषद्धास्यकरं काव्यात्मकं वर्णनमेव सुतरां प्रतीयते ।

रौद्ररसो यथा—

अरो॑रवीद् वृष्णो॑ अस्य॒ वज्रोऽमा॑नुषं॒ यन्मानु॑षो नि॒जूर्व॑त् ।
नि मा॒यिनो॑ दान॒वस्य॑ मा॒या अपा॑दयत्पपि॒वान्त्सु॒तस्य॑ ॥[1]

अत्र मन्त्रे दानव आलम्वनम् । वज्रस्य रावणशब्दस्तद्घातश्चानुभावौ । उग्रता सञ्चारिभावः ।

अरे॑जेतां॒ रोद॑सी भिया॒ने कनि॑क्रदतो॒ वृष्णो॑ अस्य॒ वज्रा॑त् ।[2]

इत्यादिमन्त्रेषु भयानकरसस्य मूलमन्वेष्टुं पार्यते । अत्र प्रथममन्त्रे वज्र आलम्बनम् । तन्नाद उद्दीपनम् । रोदःकम्पनमनुभावः । त्रासश्च सञ्चारिभावः । द्वितीये तु मेघा आलम्बनम् । [illegible] गमनम् उद्दीपनम् । भूमेः कम्पनमनुभावः । त्रासश्च सञ्चारिभावः । बीभत्सरसो यथा—

श्रो॒णामेक॑ उद॒कं गामवा॑जति मां॒समेकः॑ पिंशति सू॒नयाभृ॑तम् ।
आ नि॒म्रुचः॒ शकृ॒देको॒ अपा॑भर॒त् किं स्वि॑त्पु॒त्रेभ्यः॑ पि॒तरा॒ उपा॑वतुः ॥[3]

१. ऋ० २।११।१०।
२. २।११।९।
३. ऋ० १।१६१।१०।

ऋभुष्वेकश्शोणवर्णमुदकं रुधिरं बाह्यभूमिं प्रति गमयति । तथैको मांसं स्वधितिनावयवीकरोति । अथैको निःशेषेणच्छिन्नान्मांसाच्छकृत् कुक्षिस्थम् अपाहरदिति । अत्र स्पष्टं शकृन्मांसरुधिराण्यालम्बनानि जुगुप्सा च स्थायिभावः । तथैव—

अवर्त्या शुन आन्त्राणि पेचे[1]

"अवंशे द्यामस्तभायद् बृहन्तमा रोदसी अपृणदन्तरिक्षम् ।

स धारयत् पृथिवीं पप्रथच्च सोमस्य ता मद इन्द्रश्चकार ॥[2]

अनश्वो जातो अनभीशुरुक्थ्यो रथस्त्रिचक्रः परि वर्तते रजः ।

महत्तद्वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ॥[3]

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।

कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥[4]

इत्यादिमन्त्रेषु विस्मयस्थायिभावोऽद्भुतो रसस्स्फुटः । प्रायेणैतादृशेषु विरोधाभासालङ्कारोऽतिशयोक्त्यलङ्कारश्चोक्तं रसं पुष्णीतः ।

निखिल ऋग्वेदे प्रकृतिनट्या नृत्तमेवेति तदुदाहरणं पिष्टपेषणमात्रम् । तथापि वाल्मीकिकविरचितरामायणगतं वर्षावर्णनं तु नूनम् ऋग्वेदस्य पर्जन्यसूक्तेन सहैव पठनीयमित्यस्मदीयाऽऽस्था । पर्जन्यसूक्ते वृष्टेर्यादृशं सजीवं शब्दचित्रमुपस्थापितम् ऋषिणा तादृशम् अन्यत्र विश्ववाङ्मये कल्पनाप्रधानेषु चमत्कारपूर्णेषु वर्णनेषु सुदुर्लभम् ।

विस्तरभिया पर्जन्यसूक्तं[5] नेह सङ्गृह्यते । तद् दाशतय एव द्रष्टव्यम् ।

किञ्च, वैदिकर्षीणां भावधाराया उद्रेकः कवेरजानत एवाकस्मादुद्भूत इत्येवं नास्ति । वैदिकर्षिस्स्वकाव्यं प्रति सम्यग् जागरूको बभूव । काव्यस्य गुणदोषानपि सम्यक् परिचिचाय । ऋग्वेदे ऋषिशब्दः प्रायेणान्तःप्रेरितं कविमेवाभिधत्ते । विप्र-विप्-शब्दावपि प्रेरणासंवलितं भावान्दोलितं जनं बोधयतः । ऋग्वेदे कविरपि ऋषेरेव गौरवमाप्नोति । काव्यं च कविप्रेरणाप्रसूताभिव्यक्तिरमन्यत ।

मनःपटलस्य पृथग्धरातलेभ्यः पृथक्प्रकारकं काव्यं प्रस्फुटतीति वैदिकः कविः सम्यग् जज्ञे । तथा ह्याह वैरूपोऽष्टादंष्ट्रः—

मनीषिणः प्र भरध्वं मनीषां यथायथा मतयः सन्ति नृणाम् ॥[6]

इति ।

१. ऋ० ४।१८।१३ ।
२. ऋ० २।१५।२ ।
३. ऋ० ४।३६।१ ।
४. ऋ० ४।१३।५ ।
५. ऋ० ५।८३ ।
६. ऋ० १०।१११।१ ।

काव्यस्य वाह्यतत्त्वम् (Physical Form) अन्तस्तत्त्वम् (Mental Form) इति तत्त्वद्वयमपि सुष्ठु विवेद वैदिकः कविः। सत्यप्यन्तस्तत्त्वस्योत मनस्तत्त्वस्योताहो हृत्तत्त्वस्य प्राधान्ये वाह्यतत्त्वस्य नादरूपस्य महत्त्वं कथमपि न हीयते। वस्तुतस्तूभयोः पृथक्करणमपि न संभवति। भावप्रावल्यानुरूपं रसानुकूलं च नादसौन्दर्यमपि समवाय-सम्बन्धेनोद्भवति प्रतिभानवतः कवेः। ऋग्वेदे वहुत्र वहुशश्च प्रतिपादितं यद् यथा कोऽपि तक्षा दारु तष्ट्वा रथं निर्माति तथैवाहं सूक्तं निर्मामि, तथैवाहं सूक्तं करोमि—

अहं तष्टेव वन्धुरं पर्यंचामि हृदा मतिम्[1]

इति।

ततश्चैव तक्ष-कारु-कीरिप्रभृतयश्शब्दा रूपकरूपेण कविपर्यायवाचिनः प्रयुक्ता ऋग्वेदे।[2] नव्य-भद्र-सुकृत-स्वपेत्यादीनि विशेषणपदानि, अतक्षमित्यादीनि च क्रिया-पदानि वैदिककाव्यसमीक्षाप्रसङ्गेऽतीव महत्त्वपूर्णानि सन्ति। वेदानुशीलनेन भूयसां प्राचीनानामर्वाचीनानां च कवीनां निर्देशस्स्फुटं परिचीयते। मन्त्राणां वैशिष्ट्यञ्च तेषां मौलिकतायामेव विद्यते। सुहोत्रो भारद्वाजस्स्वकीयामृचमपूर्व्यां जुघोष। वार्हस्प-त्यस्य भारद्वाजस्य "ऋक्" 'नव्यसी' 'शुचिः' चास्ति। रेणुर्वैश्वामित्रः स्वकीयायामृचि सममेव नवीनतां पवित्रतां व्यापकतां अद्वितीयतां च निर्दिशन्नाह—

समानमस्मा अनपावृदर्च क्ष्मया दिवो असमं ब्रह्म नव्यम्[3]

इति।

सूर्यदुहितुः कल्पना सरस्वत्याः कल्पना चापि वैदिककवेः काव्यीयचेतनामावि-ष्करोति।

एवं खलु न केवलम् ऋग्वेदे काव्यतत्त्वानामस्तित्वमेव तस्य काव्यत्वमपि सिद्ध्यति। अतो विविधकाव्यतत्त्वानां दृष्ट्या ऋग्वेदस्यामूलचूलमध्ययनं नितरामावश्यकमेवेत्यस्माकं दृढा मतिः। तच्चाध्ययनं वहुभिर्विद्वद्भिरल्पाधिकतया प्रस्तुतमपि भूयो विस्तरमपेक्षते॥

१. ऋ० १०।११९।५।
२. Monier Williams, Sanskrit-English Dictionary, pp. 445, 285, 275 etc.
३. ऋ० १०।८९।३।

# शुक्ल यजुर्वेद में मनश्चिन्तन

## (प्रथम अध्याय के आधार पर)

कृष्ण लाल

प्राय: विद्वानों को यह शीर्षक कुछ अस्वाभाविक प्रतीत होगा। कारण कि केवल प्रथम अध्यायं को नहीं, समस्त यजुर्वेद को भी ब्राह्मणकाल से लेकर केवल कर्मकाण्डपरक माना जाता है। यजुर्वेद के मन्त्रों का अनुक्रम भी कर्मकाण्ड के कर्मों के क्रम के अनुकूल माना जाता है। पाश्चात्य व्याख्याकारों ने भी इसकी व्याख्या ब्राह्मणों, श्रौत सूत्रों, सायरण तथा उव्वट-महीधर को आधार बनाकर की है। वेदों के इस युग के महान् भाष्यकार स्वामी दयानन्द सरस्वती ने शुक्ल यजुर्वेद में कर्म की प्रधानता मानते हुए, तथा श्रेष्ठकर्म का अर्थ यज्ञ करते हुए इसमें यज्ञ के महत्त्व आदि विषयों का वर्णन किया है।

परन्तु इन सभी व्याख्याओं से वाजसनेयी माध्यन्दिन संहिता का वास्तविक स्वरूप स्पष्ट नहीं होता। अनेक स्थलों पर यह स्पष्ट प्रतीत होता है कि एक ओर विनियोगपरक व्याख्या में कल्पना का बहुत आश्रय लेना पड़ता है और दूसरी ओर आधियाज्ञिक व्याख्या में व्यत्यय का। उदाहरणार्थं वा० सं० १।१४ में 'शर्मासि' की व्याख्या करने के लिये कृष्णाजिन ग्रहण करने का विनियोगप्रसङ्ग स्पष्ट करते हुए उव्वट को कहना पड़ा है कि "होना तो चाहिये था 'चर्मासि', परन्तु यहाँ चकार का शकार हो गया है" (चर्मासीति प्राप्ते चकारस्य शकार:)। इसी प्रकार महीधर ने कहा है—"अजिन का 'चर्म' नाम मनुष्यों में प्रचलित है और शर्म' नाम दिव्य है" (अजिनस्य चर्मेति मानुषं नाम, शर्मेति दैवं नाम)। स्वामी दयानन्द ने निस्सन्देह निघण्टु (३।४) के अनुकूल 'शर्म' का 'घर' अर्थ किया है, परन्तु 'असि' के स्थान पर पुरुषव्यत्यय के साथ साथ लकार व्यत्यय भी माना है—"हे मनुष्या:, युष्मद्गृहं शर्म भवतु।"

इसी प्रकार वा० सं० १।१६ के 'कु॒क्कु॒टो॑ऽसि' शब्दों के लिये यज्ञ में जिस सिल-बाट पर चावल का आटा पीसा जाता है उन्हें परस्पर टकराने के लिये विधान किया गया है। अब यहाँ अटपटे प्रतीत होने वाले कुक्कुट शब्द को स्पष्ट करने के लिये उव्वट-महीधर ने निम्नलिखित दो निर्वचन दिये हैं :—

१. कुकं कुत्सितं शब्दमसुरघ्नमसुराणां कुटति तनोतीति कुक्कुट: (कुक्कुट, वह सिल-बाट जो राक्षसों के लिये राक्षसनाशक बुरा शब्द करता है)।

सूत्रं पठितम्। उणादिपरिभाषासूत्रसंग्रहे तावद् अनयोर्मध्ये "देविवचि अमिवासिभ्यां रः" इत्यधिकमेकं सूत्रं दृश्यते। एवमेव कातन्त्रोणादौ चतुर्थ एव पादे "घुणेडोर[1]:" इति सूत्रं तदनन्तरञ्च "सर्वधातुभ्यष्ट्रन्[2]" इति पठितम् किन्तु अनयोर्मध्ये उणादिपरिभाषासूत्रसंग्रहे तावत् "भातेर्डवतुः" इत्येकमधिकं सूत्रं पठ्यते, इत्थमेवैषानेकत्र स्थितिश्चिन्त्येति नापरोक्षं प्रेक्षावताम्।

कातन्त्रोणादौ "सर्वधातुभ्यः ष्ट्रन्[3]" "सर्वधातुभ्योऽसुन्[4]" इत्येतदाकारके सूत्रे पठ्येते, उणादिपरिभाषासूत्रसंग्रहे च तावदनयोः स्थाने क्रमशः केवलं "ष्ट्रन्" "असुन्" इति प्रत्ययात्मके सूत्रे दृश्येते। इदमत्रावधेयमस्ति यत् पाणिनीयोणादौ पञ्चपाद्यां "सर्वधातुभ्यः०" इति पठ्यते किन्तु दशपाद्यान्तावत् "धातोः" इत्यधिकारादेव सिद्धे "सर्वधातुभ्यः" इति पठनं व्यर्थमेवेति प्रकल्प्य "ष्ट्रन्" "असुन्" इत्यादीनि सर्वधातुविधेयप्रत्ययात्मकानि सूत्राणि पठ्यन्ते। इत्थमत्रोणादिपरिभाषासूत्रसंग्रहोपरि दशपाद्याः प्रभावः सुस्पष्ट एवेत्यत्र विद्वांस एव प्रमाणम्।

इत्थं सर्वेषामुपर्युक्तानां त्रिविधानामपि कातन्त्रीयोणादिसूत्राणां मिथस्तुलनया केषाञ्चनोदाहरणानां पर्यालोचनया चेदं सुस्पष्टतरं प्रतिभाति यदुणादिपरिभाषासूत्रसंग्रहोपरि कातन्त्रोणाद्यपेक्षया कलापोणादेः प्रभूततरः प्रभावो वर्त्तते।

उणादिपरिभाषासूत्रसंग्रहस्य पाठभेददृष्ट्या सूत्र-क्रमभेददृष्ट्या च यन्महत्त्वं तन्महत्त्वमास्तां तावत्, मम तु सूक्ष्मेक्षिकया ग्रन्थस्यास्य सर्वाधिकं महत्त्वमिदं प्रतिभाति यदत्रोणादिसूत्राणि चतुर्षु पादेष्वेव विभक्तानि सन्ति। वस्तुतस्तु दुर्गसिंहेन कातन्त्रीयोणादिसूत्राणि चतुर्षु पादेष्वेव विभक्तानि भवेयुरिति मे दृढो विश्वासः। यद्यपि प्राचीनतमानि पाणिनीयोणादिसूत्राणि तावत् पञ्चसु पादेषु विभागात् पञ्चपाद्युणादिसूत्राणि, दशसु पादेषु विभागाच्च दशपाद्युणादिसूत्राणि—इति प्रसिद्धिं प्राप्नुवन्ति सन्ति तथापि तानि पाणिनीयोणादिसूत्राणि मूलतश्चतुर्षु पादेष्वेव विभक्तानि इति तत्त्वधिया निश्चिनुमः।

पादस्य, प्रकरणस्य, अध्यायस्य, सर्गस्य वा प्रारम्भोऽन्तो वा कदा क्रियते कदा न क्रियत इति नाविदितं केषाञ्चिदपि विदुषाम्। पादस्य प्रारम्भोऽन्तो वा यादृच्छिको नास्तीति सर्वैः स्वीकर्त्तव्यमेव। यत्र समानोद्देश्यकस्य कस्यचिद्वस्तुनः प्रतिपादनं पूर्णतां गतं तत्र पादान्तः, यत्र च समानोद्देश्यकस्य कस्याप्यन्यस्य वस्तुनः प्रतिपिपादयिषा तत्र पादस्य प्रारम्भः।

कलापोणादौ हि चतुर्थपादस्य समाप्तिः तस्यैव द्वाविंशतितमसूत्रं यावत् स्वीकृता तदनन्तरमेव पञ्चमपादप्रारम्भस्य किञ्चिदपि कारणं न विद्मः, समानोद्देश्यकस्यैव वर्णस्याग्रिमेऽपि पादे प्रवर्त्तनात्।

१. कात० उ० ४, ३८।
२. कात० उ० ४, ३९।
३. कात० उ० ४, ३९।
४. कात० उ० ४, ५६।

श्रीमतां टी० टी० चिन्तामणि महोदयानां सम्पादकत्वे प्रकाशितानां षट्सु पादेषु विभक्तानां कातन्त्रोणादिसूत्राणां पञ्चमपादस्य प्रारम्भिकांशावलोकनेनेदं सर्वथा सुस्पष्टं भवति यत् कातन्त्रोणादिसूत्राणि चतुर्षु पादेष्वेव विभक्तानि सन्ति। तत्र हि—"उणादिविषये प्रसिद्धं पञ्चमं पादं प्रकाशयन्नाह"—इति लिखितमस्ति। अत्र उणादिविषये अप्रसिद्धम् अथवा उणादिविषये प्रसिद्धम् इत्युभयथा पाठ-कल्पनसंभवे यदि अप्रसिद्धम् इत्येव स्वीक्रियेत तदा स्पष्टतया पञ्चमः षष्ठश्च पादौ पश्चाद् योजिताविति स्वीकर्तव्यम्। यदि च प्रसिद्धम् इति पाठः स्वीक्रियेत तदा किं नाम प्रसिद्धत्वम्? कथं न पूर्वे चत्वारः सन्ति? इत्यादिसंदेहदोलादोलायमाने चित्ते, स्वतं ग्रन्थकारस्य अप्रसिद्धावपि पादौ कस्यचिदन्यस्य प्रसिद्धाविति स्वीकर्तव्य-मन्यथा केषाञ्चनाप्रसिद्धत्वं कस्यचन कयोश्चन वा प्रसिद्धत्वमित्यत्र किमपि विनिगमकं नास्ति। अन्यच्चात्राप्यवधेयं यत्केवलं चतुर्षु पादेषु अष्टाविंशतिः गणसूत्राणि पठितानि अन्त्ययोश्च द्वयोस्तावत् किमपि गणसूत्रं नास्ति।

अतोऽपि दृढतरं प्रमाणमिदं विराजते यत् केवलं पञ्चमपादस्य प्रारम्भ एव माङ्गलिकं पद्यं पठ्यते नान्यस्य कस्यचिदपि पादस्य प्रारम्भे। तच्च पद्यं यथा—

> शब्दात्मिका या त्रिजगद् बिभर्त्ति स्फुरद् विचित्रार्थसुधां स्रवन्ती।
> या ऋद्धिरी''''''(ड्या हृदये सदैव) मुखे च सा मे वशमस्तु नित्यम्॥

इदं पद्यं मद्राससंस्करणे त्रुटितमस्ति, अत इदं "व्याकरणदर्शनेर इत्य"भिधाद् ग्रन्थात्पूरितम्। इत्थं षष्ठपादस्यान्तेऽपि पद्यमेकं पठ्यते यथा—

> "शब्दानामानन्त्याद् व्युत्पत्तिर्दृश्यते येषाम्।
> तेषां विज्ञैः कार्या मान्योर्धातोः ततः प्रत्ययान्ताम्॥ [?]
> (तेषां विज्ञैः कार्या मृग्या धातोः ततः प्रत्ययान्तात)

अतोऽत्रेदं पर्याप्तं संभवि यत् पञ्चमः षष्ठश्च द्वौ पादौ केनचिदन्येन पश्चाद् योजितौ। इदमपि सर्वथा संभाव्यते यत् स्वयमेव दुर्गसिंहश्चतुर्षु पादेषु स्वकीयमुद्देश्यमपरिपूर्णं मन्यमानः द्वाविमौ पादौ पश्चाद् विरचय्य योजितवान्, संकेतितञ्चेदमन्तिमे पद्ये यथा—"शब्दानामानन्त्यात्''''''''''''॥

तुलनयेदं सुस्पष्टं यत् कातन्त्रोणादिसूत्राणि पाणिनीयोणादिसूत्रैः प्रभावितानि। पण्डितप्रकाण्डानां श्रीमतां युधिष्ठिरमीमांसकमहोदयानां मतेन कातन्त्रव्याकरणं काशकृत्स्नव्याकरणस्य संक्षिप्तमेव रूपम्।[1] परन्तु कातन्त्रोणादिसूत्राणां पाणिनी-

१. इस ग्रन्थ के प्रथम संस्करण के प्रकाशित होने के अनन्तर काशकृत्स्नधातुपाठ कन्नड़ टीका सहित प्रकाश में आया। काशकृत्स्न टीका में काशकृत्स्न के लगभग १३५ सूत्र भी उपलब्ध हो गये। काशकृत्स्न धातुपाठ और कातन्त्र धातुपाठ की पारस्परिक तुलना करने पर विदित होता है कि कातन्त्र धातुपाठ काशकृत्स्न धातुपाठ का संक्षेप है। इसी प्रकार काश-कृत्स्न के उपलब्ध सूत्रों की कातन्त्र सूत्रों से तुलना करने पर यही परिणाम निकला है कि कातन्त्र काशकृत्स्न तन्त्र का ही संक्षेप है।"—संस्कृत व्याकरण शास्त्र का इतिहास, भाग द्वितीय।

योणादिसूत्रैस्तुलनया कातन्त्रोणादिसूत्रोपरि पाणिनीयोणादिसूत्राणां प्रभूतः प्रभावः सुस्पष्ट एवेति सुधीभिरवधेयम् ।

पाणिनीयोणादिसूत्राणां याऽऽनुपूर्वी सैव कदाचित् केषाञ्चन कातन्त्रोणादिसूत्राणामपि, यथा :—

| | |
|---|---|
| १—स्यन्देः संप्रसारणं (धश्च), कात० उ० १, ७. | १—स्यन्देः संप्रसारणं धश्च, उज्ज्व० द० १, १२. |
| २—नावञ्चेः, कात० उ० १, १४. | २—नावञ्चेः, उज्ज्व० द० १, १८. |
| ३—अवमुह्योष्टिषः, कात० उ० १, २० | ३—अविमुह्योष्टिषच्, उज्ज्व० द० १, ४६. |
| ४—रुहेर्वृद्धिश्च, कात० १, २१ | ४—रुहेर्वृद्धिश्च, उज्ज्व० द० १, ४८. |

इत्येवमादीनि बहूनि सूत्राणि समानानुपूर्वीकाणि सन्ति । भेदस्त्वियान् वर्त्तते यद् यत्र नित्-चित्-आदयः पाणिनीयव्याकरणे स्वरसाधका अनुबन्धास्ते तावत् कातन्त्रे स्वरचिन्ताऽभावाद् बहिष्कृता इति । पाणिनीयोणादिसूत्रप्रभावस्यैवेदं फलं यद् यत्र तत्र कातन्त्रे प्रयोजनाभावेऽपि 'असुन्', 'ष्ट्रन्'इत्यादयो नित्प्रत्ययाः पठिताः । विद्वद्भिरिदमपि न विस्मरणीयं यद् दुर्गसिंहः सर्वथाच्छान्दसप्रयोगाणां विद्वेषी नासीदिति । स तृतीयपादस्य सप्तविंशतितमे सूत्रे लिखति—कुर्विः·········गिर्विः, छान्दसावेतौ[1] ।" किन्त्वेतावतापि कातन्त्रव्याकरणं पाणिनीयव्याकरणवद् वैदिकमपि व्याकरणमिति निश्चेतुं न शक्यते दृढतरप्रमाणाभावात्, स्वतन्त्रतया "कातन्त्रच्छन्दःप्रक्रिया" इत्याख्यस्य ग्रन्थस्य निर्माणाच्च । कातन्त्रच्छन्दःप्रक्रियायाः कृत्प्रकरणस्य तृतीयः पादः उणाद्यात्मक एव । लेखकाश्चास्य ग्रन्थस्य श्रीमन्महामहोपाध्यायाः चन्द्रकान्ततर्कालङ्कारमहोदयाः सन्ति । ते स्वयम् भूमिकायां वर्णयन्ति यत् पाणिनीयव्याकरणस्य वैदिकप्रकरणमेवाधारोऽस्याः कातन्त्रच्छन्दःप्रक्रियायाः, केवलं प्रकृतिप्रत्ययौ कातन्त्रव्याकरणानुसारिणाविति शम् ।

१. कात० उ० ३, २७.

# वागग्मिन्-शब्द-निर्वचन-विचारः

विश्वनाथभट्टाचार्यः

वाग्ग्मि-शब्दप्रयोगश् छन्दसि भाषायां च दृश्यते। तथाहि वाजसनेयिमाध्यन्दिनीय-शतपथ ब्राह्मणस्य शातपर्णेय-धीर-जाबाल-महाशाल-संवादे, सामवेदीयलाट्यायन-श्रौतसूत्रस्य उद्गातृलक्षणे, छन्दोगद्राह्यायण-श्रौतसूत्रस्य ऋत्विग्लक्षणे च वाग्ग्मिशब्दव्यवहारो विद्यते। अपि च भारवेः किरातार्जुनीये, माघस्य शिशुपालवधे, श्रीहर्षस्य नैषधचरिते अन्यत्रापि च वाग्ग्मिशब्दप्रयोग उपलभ्यते।

परन्तु मुद्रितेष्वाकरेषु वाग्ग्मिशब्दस्य वर्णानुपूर्व्यां क्वचिदेकगकारपाठः, क्वचिच्च द्विगकारपाठः परिलक्ष्यते। एवं सति व्याकरणदृष्ट्या पाठविचारे प्रवर्तेमहि।

आदावेकगकारवादिनां चत्वारः पक्षाः। ते चात्र क्रमशो विमृश्यन्ते।

(क) प्रथमो वाच् इति कर्मणि क्विबन्तात् प्रातिपदिकाद् "वाचो ग्मिनि"-रिति सूत्रेण मत्वर्थीये अगिति ग्मिनौ तद्धिते "चोः कु" रिति कुत्वे पश्चात् कलोप इति केचित्।

अपरे पुनः "स्वादिष्वसर्वनामस्थाने" इति सूत्रेण पदत्वे सिद्धे "झलां जशोऽन्ते" इति सूत्रेण जश्त्वादनन्तरमेव गलोप इति जगदुः।

परन्तु लोपोऽयं कस्य गस्य वा एकगकारदुराग्रहभाजां यादृच्छिकः—हल्पूर्वकत्वाभावेन "झरो झरि सवर्णे" इति सूत्रस्येहाऽप्रवृत्तेः। "झरो झरि"—सूत्रे "हलो यमां यमि लोप" इति अव्यवहितपूर्ववर्तिसूत्राद् 'हल' इत्यनुकृष्यत इति वृत्तिकार-सृष्टिधरमतम्। चन्द्रगोमि-सोमदेवाऽभयनन्दिभिरपि मतमिदमनुसृतम्। न चेह हलनुवृत्तिरपाकर्तुं शक्या।

किं च पक्षोऽयं पतञ्जलिप्रयोगविरोधाद् ध्वस्तः—महाभाष्ये द्विगकारनिर्देशात्।

(ख) द्वितीयतो वाक्छब्दात् मिनिप्रत्यये चस्य कत्वे जश्त्वे च एकगकारसिद्धिरिति केचन। वोपदेवेन एकगकारपाठो निपातितः।

केचित् पुनश्चकारस्य कुत्वमनादृत्य साक्षाद् गकारादेशे इति लाघवमाश्रयन्ते।

परन्तु "यरोऽनुनासिकेऽनुनासिको वे" ति सूत्रस्य "प्रत्यये भाषायां नित्यम्" इति वक्तव्येन नित्यो ङम्भावो दुर्वारः स्यादिति मिनावेकगकारपक्षोऽयं निरस्यते।

अन्नम्भट्टस्तु "यरोऽनुनासिकेऽनुनासिको वे" ति सूत्रे वृत्तिकार-जिनेन्द्रबुद्धि-वचनानुसारेण व्यवस्थितविभाषामभ्युपेत्य "प्रत्यये भाषायां नित्यम्" इति वार्त्तिकेऽपि व्यवस्थाबलाद् ग्मिनिप्रत्यये कृते न ञम्भावप्रसङ्ग इति व्याख्याय ञम्भावपरित्राणाय गोच्चारणं व्यर्थमित्याह स्म।

परन्तु "लशक्वतद्धिते" इति सूत्रस्य 'अतद्धिते' इति पदे पर्युदासाश्रयणेन तद्धितभिन्ने इत्यर्थलाभाद् "ग्लाजिस्थश्च ग्स्नुरि" ति सूत्रेण कृतो ग्स्नुप्रत्ययस्य गित्त्वे सम्भवत्यपि तद्धितस्य ग्मिनेर्गित्त्वं कथमपि न सिध्यति—असम्भवदोषापातात्। ग्मिनेर्गकारः प्रत्ययस्याद्यावयव इति सुस्थिते अन्नम्भट्टमतमनूचानैश्चिन्त्यम्।

(ग) तृतीयतो "वचेर्मिनिञ् चस्य ग" इति कातन्त्रोणादिसूत्रेण वच परि-भाषणे इत्यादादिकाद् धातोः कर्तरि वाच्ये मिनिञ् प्रत्यये, चकारस्य गकारादेशे च एकगरूपसिद्धिरिति दुर्गसिंहः।

परन्तु मुद्रितमद्रपुस्तकस्थसूत्रमिदं कातन्त्र-व्याकरणग्रन्थे नोपलभ्यत इति सूत्रस्यास्य प्रामाण्यं सन्देहास्पदम्। किं च कुसृष्ट्या व्याख्यानेऽस्मिन् नित्यो ञम्भावो दुर्वार इति पक्षोऽयं प्रतिक्षिप्यते।

(घ) चतुर्थतो "वाचो ग्मिन् चस्य लोपश्चे" ति विद्यावागीशमते एकगकार-सिद्धिः।

परन्तु कुत्वजश्त्वपरिहाराय चकारलोपप्रयासोऽयं दुर्घटः—चकारगकारयोः सावर्ण्याभावेन "झरो झरि"—सूत्रस्येहाऽप्रवृत्तेः।

एवमेकगकारवादिनां चत्वारः पक्षा निराकृताः।

अधुना सिद्धान्तं व्याख्यास्यामः। वाग्ग्मीति द्विगकारो, वाग्ग्ग्मीति त्रिगकारो वा पाठः साधुः। तथाहि "वाचो ग्मिनिरि"ति सूत्रेण वाक्छब्दाद् अगिति ग्मिनौ तद्धिते कुत्वे जश्त्वे च गकारद्वयम्। तत्र प्रथमः प्रकृतेरन्त्यचकारस्य कुत्वमुखेन जश्त्वे गकारः, द्वितीयश्च प्रत्ययस्याद्यगकारः। "अनचि चे" ति सूत्रेण पाक्षिके द्वित्वे च गकारत्रयम्। तत्रापि प्रथमः प्रकृतेः, द्वितीयः क्रमजः, तृतीयः प्रत्ययस्येति निर्गलितार्थः। अच्पूर्वक-त्वात् प्रथमगकारस्य लोपः कदापि न सम्भवति। "दीर्घादाचार्याणामि" ति सूत्रेण केषांचिदाचार्याणां मते प्रकृतेराकारस्य दीर्घाच्त्वाद् द्वित्वनिषेधे सति क्रमजो द्वितीयगकारो न भवति। आचार्यग्रहणस्य पूजार्थत्वाद् भगवत्पाणिनिमते गकार-त्रयमपि सिध्यति। तद्धितप्रत्ययावयवत्वात् तृतीयगकारस्य लोपः कथमपि न सम्भवति। ग्मिनेर्गकारेण व्यवधानं ञम्भावपरित्राणार्थम्। ग्मिनेरन्त्य इकारो न केवलम् उच्चा-रणार्थो यावत् नित्स्वरपरित्राणार्थश्च। गकारमकारेकारनकारेकाराः सर्वे सार्थकाः। अतः सुष्ठूक्तो ग्मिनिः।

अन्नम्भट्टस्तु प्राशस्त्ये ग्मिनिः, निन्दायां तु आलजाटचाविति विवेकं सूचयितुं ग्मिनेर्गकार इति व्याचख्यौ। परन्तु तस्य एकगकारपक्षः पूर्वमवधीरितः।

अतो वाग्ग्मीति द्विगकारपाठो, वाग्ग्ग्मीति त्रिगकारपाठो वा साधुरिति सर्वं सुस्थमिति पाणिनितन्त्रानुसारिणः। भगवत्पतञ्जलिना द्विगकारो वाग्ग्मिशब्दः प्रयुक्तः। वृत्तिकार-पुरुषोत्तम-शरणदेव-सृष्टिधर-भट्टोजि-नारायणभट्टतिरि-वासुदेवैश्च द्विगकारपाठः स्वस्वोदाहरणेषु प्रादर्शि। ज्ञानेन्द्रनागेशाभ्यां गकारत्रयमपि स्पष्टं सूचितम्।

चन्द्रगोमि-नारायणदण्डनाथ-गोयीचन्द्राऽनुभूतिस्वरूपाचार्य-रामाश्रम-सदानन्द-जीवगोस्वामिभिरपि द्विगपाठः स्वीकृतः।

एवं वस्तुगत्या सिद्धो द्विगपाठो लिपिकरगतवर्णविन्यासवैशिष्ट्यमात्रमिति वक्तुं न युक्तम्—वैयाकरणयुक्तिमुपमृद्य तथाविधवचने मानाभावात्। एकगपाठः सर्वथा प्रामादिकः।

न च विकल्पेनैकगकारोऽपीति वाच्यम्—अच्पूर्वकत्वेन "झरो झरि"—सूत्रस्येहाऽप्रवृत्तेः।

इत्थं वाङ्मीति टङ्कलेखपाठोऽपि प्रामादिकः—ग्मिनेर्गकारस्य जश्भावव्यावृत्त्य-र्थकत्वात्।

केचिद् 'वाग्म्' इति मान्तायाः प्रकृतेरस्त्यर्थे 'इन्' इति प्रत्ययेनैकगं वाग्मिशब्दं साधयन्ति।

परन्तु नैतद् वक्तुं युक्तम्—तादृशमान्तप्रकृतेरनुपलम्भात्।

'वाग्म' इत्यकारान्तायाः प्रकृतेर्मत्वर्थीयेन 'इन्' प्रत्ययेनैकगो वाग्मिशब्दो व्युत्-पाद्य इति बहवः।

इदमपि मतं त्यक्तुमुचितम्—तादृशकल्प्यमूलानुपलब्धेः।

'वाग्मन्' इति नकारान्तायाः प्रकृतेर् 'मन्'—प्रत्ययस्य मकारोत्तराऽकारस्य वर्णविकारे सति एकगकवाग्मिशब्दः सिद्ध इत्येके।

अयमपि पक्षः प्रत्याख्येयः—तादृशनान्तप्रकृतेः क्वाप्यदर्शनात्।

अपरे तु 'वाग्मत्' इति मतुबन्तायाः प्रकृतेः पुनर्मत्वर्थीय 'इन्'—प्रत्यये एकग-वाग्मि-शब्दलाभ इति ब्रुवते।

अयमपि वादः प्रोज्झितुं शक्यः—मत्वर्थीयात् पुनर्मत्वर्थीये पौनरुक्त्यप्रसङ्गात्।

केचन पुनः पक्वशब्दे जश्त्वाभावं दृष्ट्वा 'वाक्विन्' इति शब्दं परिकल्प्य, तस्माद् 'वाक्मिन्' इति रुक्मशब्दवज् जश्त्वरहितं शब्दमुद्भाव्य वाग्भिः, वाग्भ्य इत्यादिषु पदेषु जश्त्वदर्शनाज् जश्त्वेन वाग्मिशब्दमेकगं कुसृष्ट्या व्याकुर्वते।

तन्न—'वाक्वि'-'वाक्मि'-शब्दयोः खपुष्पायमाणत्वात्।

यच्च शौनकपैप्पलादशाखयोर् आथर्वणसंहितायां वाग्वीति शब्दो दृश्यते स मत्वर्थीयविनिप्रत्ययान्तः स्रग्विशब्दवच् छन्दसि बाहुलकात्। आर्यमञ्जुश्रीमूलकल्पे स्रग्मिशब्दस्तु प्रामादिकः।

केचिच् छान्दसं वाग्विशब्दं 'वाग्वत्' इति मतुबन्ताच् छब्दात् कृते वत्वे पुन-र्मत्वर्थीयेन 'इन्' प्रत्ययेन व्याकर्तुमुत्सहन्ते।

तन्न—मत्वर्थीयात् प्रत्यायत् पुनर्मत्वर्थीये पौनरुक्त्यप्रसङ्गात् ।

'वाग्वन्' इति वन्प्रत्ययान्तायाः प्रकृतेर्मत्वर्थीये 'इन्'-प्रत्यये "वाग्विन्" इति रूपसिद्धिरित्येके ।

एतदपि न—'वाग्वन्' इति कल्पितशब्दस्य क्वाप्यनुपादानात् ।

न च च्छान्दसाद् "वाग्वि"शब्दाद् भाषायामेकगो 'वाग्मि' शब्दो निर्वचनीय इति वाच्यम् । प्रत्ययभेदेन शब्दभेदप्रसङ्गात् । न हि यत्र यत्र विनिः प्राप्तस्तत्र तत्र ग्मिनिरपि—तादृशकल्पने मानाभावात् ।

वाक्छब्दादस्त्यर्थे ग्मिनिः, पक्षे मतुबिति नारायणदण्डनाथः । अभयचन्द्रः सोमदेवश्चाप्येवमूचतुः ।

अतो "वाग्ग्मी" ति द्विगपाठे, "वाग्ग्ग्मी" ति त्रिगपाठे वा सिद्धे "अश्वादिभ्यः फञ्" ति सूत्रानुषक्ते अश्वादिगणेऽपि द्विगस्त्रिगो वा पाठः कर्तव्यः । एवं सति वाग् [ग्] ग्मिनोऽन्तरापत्यं पौत्रादि गोत्रमित्यर्थे वृद्धे तद्धिते फञि वाग्-[ग्] ग्मायन इति पदं सिध्यति । नारायणदण्डनाथ-नारायणभट्टतिरिभ्यां च ग्रीवादिगणव्याख्याने द्विगपाठः प्रदर्शितः । मुद्रितवर्धमानग्रन्थे एकगपाठस्तु प्रामादिकः ।

अपि च "उदीचां वृद्धादगोत्रादि"ति सूत्रेण अगोत्रप्रत्ययान्तात् वृद्धसंज्ञकाद् वाग् [ग्] ग्मिशब्दाद् उदङ्मते फिञि "यचि भमि"ति सूत्रेण भसंज्ञासिद्धौ "नस्त-द्धिते" इति सूत्रेण टिलोपे वाग् [ग्] ग्मायनिरिति पदं सिध्यति, प्राङ्मते तु यथा प्राप्तं वाग् [ग्] ग्मीति नारायणभट्टतिरिमतमिति केरलीयपुस्तकपाठः । मुद्रितमद्र-मातृकाग्रन्थे वाङ्मायनिर्वाङ्मश्चेति पाठद्वये जम्भावः प्रामादिकः—वाङ्मिशब्दस्यैवा-नुपपत्तेः ।

अतो वाग् [ग्] ग्मी, वाग् [ग्] ग्मायनो, वाग् [ग्] ग्मायनिश्चेति पदानां द्वित्वाभावपक्षे गकारद्वयं, द्वित्वपक्षे च गकारत्रयमिति सर्वं समञ्जसमिति शम् ॥

श्रीगुरुचरणसमर्पणमस्तु ॥

॥ श्रीः ॥

# घिसंज्ञाविचारे नव्यप्राचीनमतभेदः

**वे० कृष्णमाचार्यः**

शेषो घ्यसखि । अत्र वर्णयोस्तदन्तयोश्च संज्ञेति पक्षद्वयम् । यू स्त्र्याख्याविल्यतो यू इति ङिति ह्रस्वश्चेत्यतो ह्रस्व इति चानुवर्तते । ह्रस्व इति शेष इति च द्विवचनान्ततया विपरिणम्यते । असखीत्यस्य सखिभिन्नावयवयोर्लक्षणा । तथा च सखिभिन्नावयवौ अनदीसंज्ञकौ ह्रस्वौ याविवर्णोवर्णौ तौ घिसंज्ञौ स्त इति वर्णसंज्ञापक्षेऽर्थः ।

सिद्धान्तसंमततदन्तसंज्ञापक्षे असखीत्यस्य सखिभिन्नावित्यर्थः । शेषपदोपस्थाप्यौ अनदीसंज्ञकौ शब्दौ विशेष्यम् । तत्र विशेषणमसखीति । यू इति च । तत्र च विशेषणं ह्रस्वाविति । ततस्तदन्तविधिः । तथा च ह्रस्वौ याविवर्णोवर्णौ तदन्तौ सखिभिन्नौ अनदीसंज्ञकौ शब्दौ घिसंज्ञौ स्त इत्यर्थः । हरिणेत्यादिकमुदाहरणम् । असखीत्युक्तेः सख्येत्यादौ न घिसंज्ञेति नाभावाद्यभावः । अत्र सखिभिन्नं च सखिसदृशं प्रातिपदिकमेव गृह्यते । अतः कृतं सख्येति वाक्यस्य सखिभिन्नत्वेऽपि न घिसंज्ञा । सुसखिशब्दस्य तु भवत्येव घिसंज्ञा । समुदायस्य सखिभिन्नत्वात् प्रातिपदिकत्वाच्च । असखीत्यस्य सख्यन्तभिन्नाविति तु नार्थः । विशेष्यासन्निधानेन तदन्तविध्यभावादिति मनोरमाकारादयः ।

शेखरकारादयस्तु सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नौ अनदीसंज्ञकौ ह्रस्वौ इवर्णोवर्णौ घिसंज्ञौ स्त इति वर्णसंज्ञापक्षेऽर्थः । तदन्तसंज्ञापक्षेऽपि असखीति य्वोरेव विशेषणम् । तौ शेषपदार्थे । तथा च सख्यवयवभिन्नह्रस्वेवर्णोवर्णान्तं अनदीसंज्ञकं घिसंज्ञं स्यादित्यर्थः ।

एवञ्च पक्षद्वयेऽपि सुसखिशब्दे न घिसंज्ञा इकारस्य सख्यवयवत्वादिति वदन्ति ।

अत्र प्राचोक्तमेव युक्तम् । ख्यत्यादिति भाष्यसंमतत्वात् । नव्योक्तस्य तद्विरुद्धत्वात् । तत्र हि किमर्थं विकृतनिर्देशः ? सखिपतिभ्यामित्येव कुतो नोक्तम् ? इत्याशङ्क्य अतिशयितस्सखेतिविग्रहकेऽतिसखेरित्यत्रोत्वं मा भूदित्युक्तम् । अत्र घेर्ङितीति गुणदर्शनेन प्राचोक्तरीत्यैव घिसंज्ञायाः साधनीयत्वात् । नव्यपक्षे त्विकारस्य सख्यवयवत्वेन घिसंज्ञायाः शशविषाणसोदरतया तद्विरोधः स्पष्ट एव ।

अत्र नव्याः ख्यत्यादिति सूत्रेऽतिसखेरित्यस्य सखीमतिक्रान्त इत्येव विग्रहः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच् । गोस्त्रियोरिति ह्रस्वः । न तु अतिशयितस्सखेति । तथा च ङीष्स्थानिकह्रस्वेकारस्य सख्यवयवभिन्नत्वात् तत्र घिसंज्ञा सुसाधेति न तद्विरोध इति ।

तदुपरि प्राञ्चः । अतिसखेरित्यस्य ङीषन्तप्रकृतिकत्वे सखिरूपस्य लाक्षणिकत्वेन लक्षणप्रतिपदोक्तपरिभाषया उत्ववारणसंभवेन तदर्थं विकृतनिर्देशाश्रयणं व्यर्थं स्यात् । अतोऽतिशयितस्सखेत्येव विग्रहो भाष्यसंमतः । तदात्वे सखिशब्दस्य प्रतिपदोक्तत्वेन न लक्षणप्रतिपदोक्तपरिभाषया उत्ववारणं संभवतीति विकृतनिर्देशाश्रयणं

सफलम् । इत्थं च मत्पक्ष एव तत्र घिसंज्ञा वक्तव्या न त्वत्पक्ष इति तद्विरोधो दुष्परिहर एवेति ।

तदुपरि नव्याः । भवदुक्तरीत्या अतिशयितस्सखेति विग्रहेऽपि ख्यत्यात्सूत्रे विहितविशेषणादेव तत्रोत्ववारणसंभवेन विकृतनिर्देशाश्रयणस्य वैयर्थ्यमेव प्राप्नोतीति विकृतनिर्देशाश्रयणपरभाष्यस्यैकदेश्युक्तित्वमेव त्वयापि वाच्यम् । घिसंज्ञा तु मदुक्त-विग्रहेण साधयितुं शक्येति न तद्विरोधलेश इति ।

अत्र प्राञ्चः । अस्तु विकृतनिर्देशांशे भाष्यस्यैकदेश्युक्तित्वं घिसंज्ञा तु मद्रीत्यैव तत्र साधनीया न तु त्वद्रीत्या । तथा हि—असखीत्यत्र लिङ्गविशिष्टपरिभाषोपस्थित्या सख्यवयवभिन्नौ सखिशब्दप्रकृतिकस्त्रीप्रत्ययान्तावयवभिन्नौ चेवर्णोवर्णौ घिसंज्ञा-वित्यर्थस्य वक्तव्यतया अतिसखिशब्दस्य ङ्यन्तप्रकृतिकत्वे तदीयेकारस्य सखिशब्द-प्रकृतिकस्त्रीप्रत्ययान्तावयवत्वेन तद्भिन्नत्वाभावान्न घिसंज्ञावकाशः । अतः समुदायस्य सखिभिन्नत्वमादायैव तत्र घिसंज्ञा साधनीयेति तद्विरोधस्तव स्फुट एवेति ।

अत्र नव्याः । यदुक्तमसखीत्यत्र लिङ्गविशिष्टपरिभाषोपस्थितौ भाष्यविरोध इति तन्न, सखीत्यस्य सख्यवयवपरत्वेन प्रातिपदिकत्ववदुपस्थापकत्वाभावेन लिङ्ग-विशिष्टपरिभाषाया अप्रवृत्तेः । सख्यवयवभिन्न इत्येक एवार्थ इत्यतिसखिशब्दे घिसंज्ञा-सिद्ध्या भाष्यविरोधलेशाभाव इति । न चैवं धर्मिग्राहकमानविरोधः कुमारश्रमणे-त्यत्र कुमारशब्दस्य तत्प्रकृतिके लाक्षणिकत्वादिति वाच्यम्, अन्वयानुपपत्तिमूलक-स्वारसिकलक्षणाग्रहात् पूर्वं प्रातिपदिकत्ववदुपस्थापकत्वसत्त्वात् । असखिपदे तु निरूढलक्षणेति तदभाव इत्याशयात् । किंच त्वत्पक्षो यस्येति चेति सूत्रभाष्यविरुद्धत्वाद् हेय एव । तत्र हि इवर्णस्य किमुदाहरणम् ? अतिसखेरागच्छेति । यद्यत्र ङीषि परे सख्यवयवेकारस्य यस्येति लोपो न स्यात् तदा दीर्घे उपसर्जनह्रस्वत्वे कृते एकादेशस्य पूर्वान्तवत्त्वेन सखिशब्दत्वात् सखीति प्रतिषेधः स्यात् । लोपे तु लक्षणप्रतिपदोक्तपरि-भाषया असखीत्यत्रोपस्थितया प्रतिपदोक्तशब्दस्यैव निषेधबोधनात् प्रकृतस्य लाक्षणि-कत्वेन निषेधाभावात् घिसंज्ञा निर्बाधैवेत्युक्तम् । त्वन्मते लोपाभावेऽपि समुदायस्य सखिभिन्नत्वेन घिसंज्ञाया निर्बाधत्वेनासखीति प्रतिषेधः स्यादित्युक्तिरसङ्गता स्यात् । मन्मते तु लोपाभावे इकारस्य सख्यवयवत्वेनासखीति प्रतिषेधः स्यादित्युक्तिः संगच्छते । तस्मात् मदुक्तपक्ष एव समीचीन इति ।

अत्र प्राञ्चः । लोप इवैकादेशेऽपि सखिशब्दस्य लाक्षणिकत्वेन मतद्वयेऽप्यसखीति प्रतिषेधस्य वक्तुमशक्यत्वेन भाष्ये तत्कथनं एकदेशिन एवेति न तद्विरोधोऽस्मत्पक्ष इति ।

तदुपरि नव्याः—यदुक्तमेकादेशेऽपि लाक्षणिकत्वादसखीति प्रतिषेधो वक्तु-मशक्य इति तन्न, पूर्वान्तवद्भावादतिदेशविषये स्थानिबुद्ध्यैव कार्यप्रवृत्त्या लक्षण-प्रतिपदोक्तपरिभाषा न प्रवर्तत इत्येव भाष्याशयेन भाष्यस्यैकदेश्युक्तित्वाभावात् । अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेरेव क्षीरपेणेत्यादौ णत्वादिसिद्धिः । अन्यथा पे इत्यस्य पूर्वान्तवत्त्वेनोत्तरपदत्वाभावात् लाक्षणिकत्वेन णत्वाप्रवृत्तेः । प्रति-पदोक्तैकाजुत्तरपदे पुनर्भूणामित्यादौ तच्चारितार्थ्यादिति ।

# न्यायनिबन्धेषु शाब्दिकप्रक्रियाभेदः

वे० सुब्रह्मण्यशास्त्री

ललितैः पदविन्यासैर्या नृत्यति विबुधवदनरङ्गेषु ।
सच्छास्त्रवेदवाद्यैः सरस्वतीं तां नमस्यामः ॥

पदवाक्यप्रमाणविद्या विभिन्नप्रस्थाना विराजन्ते । वाक्यजन्यबोधविचारणा परं सर्वैरपि दार्शनिकैराद्रियते । शास्त्रप्रवर्तकपूर्वाचार्योक्ति, कार्यकारणभावादि-कल्पनालाघवादियुक्ति, अनुभवं वा प्रमाणमूर्धन्यमूरीकृत्य स्वस्वाभिमतेन पथा दार्श-निका वाक्यार्थबोधं वर्णयन्ति । व्याकरणस्मृतेः पदसाधुत्वविषयत्वात् प्रत्ययार्था-न्वयादिनिरूपणाय सर्वैरप्यादरणीयं व्याकरणानुशासनम् । तत्र सूत्रादिव्याख्यातॄणां शाब्दिकानामभिमतं प्रक्रियाभेदं भेदेनापि विवृण्वन्ति नैयायिकाः स्वनिबन्धेषु । शास्त्रार्थविचारकुतूहलिनां विनोदाय स्वमतिशुद्धये च कतिपये शाब्दिकप्रक्रियाभेदा-श्चिन्त्यन्ते ।

तत्रादौ कारकाधिकारीयं कर्मकारकविभजनं चिन्त्यते । 'कर्तुरीप्सिततमं कर्म' (१-४-४६) 'तथायुक्त चानीप्सितम्' (१-४-५०) इति सूत्राभ्यां ईप्सितमनी-प्सितं च कर्म प्रदर्शितमस्ति । ईप्सितं कर्म त्रेधा, अनीप्सित कर्म च चतुर्धा विभक्तं वाक्यपदीये—

'निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।
तच्चेप्सिततमं कर्म, चतुर्धाऽन्यत्तु कल्पितम् ॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥' इति ।

ईप्सितकर्मसु त्रिषु, निर्वर्त्यविकार्यकर्मणोर्लक्षणे पक्षभेदं,

सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥
प्रकृतेस्तु विवक्षायां विकार्यं, कैश्चिदन्यथा ।
निर्वर्त्यं च विकार्यं च कर्म शास्त्रे प्रदर्शितम् ॥ इत्यभिधाय,

निर्वर्त्यकर्मणो लक्षणं, विकार्यस्य सोदाहरणं द्वैविध्यं च निरूपितम्—

यदसज्जायते सद्वा जन्मना यत्प्रकाशते ।
तन्निर्वर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम् ॥
प्रकृत्युच्छेदसंभूतं किंचित् काष्ठादिभस्मवत् ।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ इति ॥

अत्रायमर्थः—यत् निर्वर्त्यते—निष्पाद्यते तत् निर्वर्त्यम् । जायमानस्य कस्यचिद् घटादेः प्रकृतिर् मृदादिः कार्योत्पत्तिकाले वर्तते । काष्ठेन निष्पद्यमानभस्मनः प्रकृतिः काष्ठं कार्योत्पत्तिकाले न वर्तते, काष्ठोच्छेदप्रयोज्यत्वाद्भस्मोत्पत्तेः । उभयत्रापि यदा प्रकृतिवाचकशब्देन सह निष्पद्यमानार्थबोधकः शब्दः प्रयुज्यते, तदा निर्वर्त्यं कर्म घटादिकं विकार्यमित्युच्यते । यथा मृदं घटं करोतीत्यत्र घटः, काष्ठं भस्म करोतीत्यत्र भस्म च विकार्यं कर्म । यदा प्रकृतिवाचकः शब्दो नोपादीयते, तत्र, घटं करोति, भस्म करोतीत्यत्र घटः भस्म च निर्वर्त्यं कर्मेति व्यवह्रियते इति प्रथमः पक्षः ॥

पक्षेऽस्मिन्, मृदः काष्ठादेश्च प्रकृतिकर्मणः निर्वर्त्यत्वविकार्यत्वयोरभावात् वक्ष्यमाणप्राप्यकर्मलक्षणायोगाच्च त्रिविधकर्मानन्तर्भावेन तुरीयत्वमापतति ।

'कैश्चिदन्यथा' इत्यादिना द्वितीयः पक्षो निरूपितः । कैश्चित् आचार्यैः अन्यथा-पूर्वोक्तप्रकारवैलक्षण्येन, निर्वर्त्यं विकार्यं च कर्म प्रदर्शितमित्यर्थः ।

'यदसज्जायते सद्वा' इति कारिकया, नैयायिकसंमतारम्भवादाश्रयणेन असतो यस्य कार्यस्योत्पत्तिः, सांख्य-वैयाकरणादिसंमतसत्कार्यवादावलम्बनेन सतः प्रकाशो वा भवति, तन्निर्वर्त्यमिति प्रतिपाद्यते । निर्वर्त्यमिति व्यवहारे, विद्यमानाया वा प्रकृतेरविवक्षा न प्रयोजिका । तथा च घटं करोति, भस्म करोतीत्यत्रेव मृदं घटं करोति, काष्ठं भस्म करोति इत्यत्रापि घटः, भस्म च निर्वर्त्यं कर्मैव । मृदादिकं च प्रकृतिद्रव्यमेव विकार्यं कर्म । न तु निष्पद्यमानं घटभस्मादिकम् । यद् विकारं प्राप्नोति तद् विकार्यम् । कार्योत्पादने कस्याश्चित् प्रकृतेः नाशरूपो विकारो भवति । यथा भस्मोत्पादने काष्ठस्य । कस्याश्चित् प्रकृतेः अनाशेऽपि गुणान्तरोत्पत्तिरूपो विकारो भवति । यथा सुवर्णस्य कुण्डलादिकार्यनिष्पादनाय भुग्नत्वादिगुणान्तरोत्पत्तिरेव न नाशः । प्रकृत्युच्छेदसंभूतमित्यत्र प्रकृतिभूतस्यात्मन उच्छेदं संभूतं प्राप्तमित्यक्षरार्थः । एवं च द्विविधविकारयोगि प्रकृतिद्रव्यमेव विकार्यं कर्मेत्युच्यते, न पूर्वोक्तपक्षे इव निष्पद्यमानं घटभस्मादिकमिति द्वितीयः पक्षः ॥ एवं बृहद्वैयाकरणभूषणसरण्या वाक्यपदीयकारिकार्थो वर्णितः । अत्र च द्विविधेऽपि विकार्योदाहरणे, भस्मवदिति, विकारवदिति चोपादानं नातिश्लिष्टं भवति ।

गोकुलनाथोपाध्यायाः, पदवाक्यरत्नाकरे (न्यायनिबन्धे) 'हरिस्तु' इत्यादिना वाक्यपदीयोक्तप्रथमपक्षं निरूप्य, पक्षान्तरमप्याह 'हरिरेव कैश्चिदन्यथा निरुच्यमानम्' इत्यादिना द्वितीयं पक्षं प्रतिपादयन्ति । तत्र द्विविधविकार्योदाहरणप्रसङ्गे, 'काष्ठादिभस्मवत्' इति वचनसामञ्जस्याय प्रकृत्युच्छेदेति कारिकार्थं वर्णयन्ति । तद्यथा—

"प्रकृत्युच्छेदेत्यादिकारिका तु, यदुच्छेदेन संभूतं निर्वर्त्यं कर्म सा प्रकृतिः विकार्यं कर्म, यथा काष्ठोच्छेदसंभूतं भस्म निर्वर्त्यमिति काष्ठं विकार्यम् । सत्यामेव यस्यां प्रकृतौ गुणोत्पत्तिर्धातुना प्रतिपाद्यते, तदपि द्वितीयं विकार्यं कर्म, यथा सदेव शलाकास्वरूपं कनकमवयवानामनारम्भकसंयोगमात्रविरोधिना कर्मणा भुग्नत्वगुणोत्पत्त्या विकार्यम् । कुण्डलपदस्य भुग्नं द्रव्यमर्थः । धात्वर्थोत्पत्तिस्तु भुग्नत्वे एवार्थतोऽन्वेति इत्यर्थिका ।" इति ।

स्वयं च,

यदुत्पत्तिस्वरूपेण फलेन व्यतिषज्यते ।
तन्निर्वर्त्यं, विकार्यं विकारैः प्राप्यमतोऽन्यथा ॥

इति कारिकया निर्वर्त्यविकार्यप्राप्यकर्मणां विशेषमभिधाय, (क) कटं करोतीत्यत्र उत्पादनार्थककरोत्यर्थफलीभूतोत्पत्तिसंसृष्टः कटः निर्वर्त्यकर्म, (ख) शत्रुं हिनस्ति इत्यत्र धात्वर्थफलेन नाशरूपविकारेण संसृष्टः शत्रुः, तृणं छिनत्तीत्यादौ नाशानुकूलावयव-फलेन विकारेण संसृष्टं तृणादिकं च विकार्यकर्म, (ग) ग्रामं गच्छतीत्यत्र उत्पत्ति-विकारभिन्नेन संयोगेन फलेन संसृष्टो ग्रामः, रूपं पश्यतीत्यादौ तादृशेन विषयत्वेन फलेन संसृष्टो रूपादिश्च प्राप्यं कर्मेति विवेचयन्ति ।

गोकुलनाथोपाध्यायान्तेवासिनः गिरिधरोपाध्यायाश्च, गुरुचरणोक्तमेव निर्वर्त्यादिकर्मणां विशेषं, हर्युक्तपक्षद्वयं च शब्दतोऽर्थतश्च निरूपयन्तीति नात्र विषये विमक्त्यर्थनिर्णयमधिकृत्य वक्तव्यमस्ति ।

वैयाकरणभूषणसारे तु, ईप्सितकर्मणः त्रैविध्यं, अनीप्सितकर्मणः चातु-र्विध्यं च वाक्यपदीयकारिकाद्वयेन निरूप्य,

यदसज्जायते सद्वा जन्मना यत्प्रकाशते ।
तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म व्यवस्थितम् ॥
प्रकृत्युच्छेदसंभूतं किञ्चित्काष्ठादिभस्मवत् ।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥

इति च तत्रैवोक्तमित्यभिधाय, घटं करोतीत्याद्यम्, काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोतीति च द्वितीयम्, घटं पश्यतीति तृतीयम् इत्यादिना सन्दर्भेण सप्तानामपि कर्मणामुदाहरणानि प्रदर्शितानि । अत्र निर्वर्त्ये विकार्ये च कर्मणि हरिणोक्तपक्षभेदस्य प्रस्तावो नास्ति । बृहद्वैयाकरणभूषणे वाक्यपदीयादुद्धृतं,

सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥
प्रकृतेस्तु विवक्षायां विकार्यं, कैश्चिदन्यथा ।
निर्वर्त्यं च विकार्यं च कर्म शास्त्रे प्रदर्शितम् ॥

इति कारिकाद्वयं नोट्टङ्कितम् ।

एतद्ग्रन्थपरामर्शे काष्ठसुवर्णादिः प्रकृतिकर्मणः निरुक्तकर्मप्रभेदेष्वन्तर्भावो न स्फुटं भासते ।

भूषणसारव्याख्यातारो हरिवल्लभभट्टाचार्याः, 'यदसज्जायते सद्वा जन्मना यत्प्रकाशते' इत्यस्यानन्तरं 'प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा' इति कारि-कार्धं योजयन्ति । तथैव वाक्यपदीयपाठः इत्यभिधाय, तत्रोपपत्तिं च प्रदर्शयन्ति,

सामान्यलक्षणकथनानन्तरमेव विशेषजिज्ञासया विभागकरणं युज्यते। अतः 'विकार्यन्तु कर्म द्वेधा व्यवस्थितम्' इत्यतः प्राक् विकार्यलक्षणकथनमावश्यकमिति। परन्तु, 'कैश्चित्' इत्यनेन पक्षान्तरोपन्यासः न तेषामभिमतः। किंशब्दस्य सर्वनाम्नः प्रसिद्धार्थकतायाः 'अन्यथा' इत्यस्य प्रकृतेरविवक्षायामित्यर्थकतायाश्च स्वीकारात्।
तदुक्तं दर्पणे—

"प्रकाशते" इत्यनन्तरं, "प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा। तन्निर्वर्त्यम्" इत्येव वाक्यपदीयपाठः। अन्यथा सामान्यधर्मेणालक्षितस्य विशेषरूपेण प्रदर्शने अर्थान्तरतापत्तेः। तदर्थस्तु कैश्चित्—प्रसिद्धैराचार्यैः, प्रकृतिविवक्षायां निष्पाद्य विकार्यमित्युच्यते। अन्यथा—तदविवक्षायां तन्-निष्पाद्यं निर्वर्त्यमिति तदर्थः" इति। यद्यपि तण्डुलानोदनं पचति इत्यत्र विकार्यकर्मणः ओदनपदस्यापि निर्वर्त्यते-निष्पाद्यते इति व्युत्पत्त्या निर्वर्त्यत्वमस्ति। तथापि प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति निष्पाद्यतारूपं पारिभाषिकं निर्वर्त्यत्वम्। तच्च न विकार्यकर्मणि वर्तते।

'प्रकृतेस्तु विवक्षायां विकार्यम्' इत्यनेन विकार्यलक्षणमभिसंहितम्। प्रतीयमानप्रकृतिविकृतिभावकत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्वोत्पत्त्यन्यतरात्मकफलवत्त्व विकार्यस्य लक्षणम्। तण्डुलानोदनं पचतीत्यत्र तण्डुलौदनयोः प्रकृति-विकृतिभावः प्रतीयते। धात्वर्थव्यापारेण पूर्वभावविशिष्टासत्त्वरूपविकारः फलं तण्डुले, उत्पत्तिरूपविकारः फलमोदने जायते इति प्रकृतिः तण्डुलः विकृतिर् ओदनश्चेत्युभयमपि विकार्यं कर्म भवति।

एवं विकार्यलक्षणे कथिते 'विकार्यं तु कर्म द्वेधा व्यवस्थितम्' इति विभागः प्रदर्श्यते। प्रकृत्युच्छेदेति कारिकया विकार्यान्तर्गतविकृतिकर्मण एवं द्वैविध्यमुच्यते। यद्यपि प्रकृतिर् विकृतिश्चेति विकार्यं द्विविधमिति प्रतिपाद्य प्रकृतिलक्षणं वक्तुमुचितम्। तथापि विकृतिकर्मणो द्वैविध्ये ऽवगते प्रकृतिरपि विकार्यकर्मान्तर्गतमिति ज्ञातप्रायं भवतीति विकृतिकर्म विभक्तम् प्रकृत्युच्छेदेत्यादिना। तेन क्रियानिर्वाह्याभावप्रतियोगितावच्छेदकधर्मवत्त्वं प्रकृतित्वमिति ध्वनितम्। काष्ठं भस्म करोति, तण्डुलानोदनं पचति, काशान् कटं करोति इत्यादौ भस्माद्युत्पादकक्रियाप्रयोज्यः काष्ठतण्डुलकाशादीनां पूर्वभावविशिष्टाभावतत्प्रतियोगितावच्छेदकपूर्वभावः वैशिष्ट्यवत्त्वेन काष्ठादीनां प्रकृतित्वं भवति। विकार्यकर्मोदाहरणप्रदर्शककारिकायां काष्ठादीनां भस्ममात्रस्योपादाने प्रकृतिकर्मणः काष्ठस्य, निर्वर्त्य, विकार्य, प्राप्य, व्यतिरिक्ततया तुरीयत्वापत्तिः। अतोऽत्र कारिकायां प्रकृतिकर्म काष्ठादिकमपि उदाहरणतया निर्देष्टव्यम्। अतश्च काष्ठादिभस्मवदिति न समस्तं पदम्। किन्तु काष्ठादि इति पृथक् पदम्। प्रकृत्युच्छेदसंभूतमिति भस्मवदित्यत्रान्वेति। प्रकृतिनाशप्रयोज्योत्पत्तिमत्त्वेन भस्मतुल्यमन्यदपि विकारजातमित्यर्थः। एवं च प्रकृति-विकृतिभावापन्नकाष्ठभस्मादि विकार्यमित्यर्थः पर्यवस्यतीति।

वयन्तु पश्यामः प्रकृत्युच्छेदसंभूतमित्यावर्तते। काष्ठादि इत्यत्र भस्मवदित्यत्र चान्वेति। काष्ठादिविशेषणतायां, प्रकृतेः—स्वात्मनः उच्छेदं संभूतं-प्राप्तम् (भू प्राप्ता-

वित्यनुशासनात्) इत्यर्थः। भस्मविशेषणतायां प्रकृतेः नाशेन जन्यमित्यर्थः। प्रकृत-क्रियया नाशं प्राप्तं काष्ठादि (प्रकृतिकर्म) प्रकृतिनाशप्रयोज्योत्पत्तिमत् भस्मतुल्य-(विकृतिकर्म) चेत्युभयमपि विकार्यमित्युक्तं भवति। एवमेव, 'किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्' इत्यत्रापि 'सुवर्णादि' इति पृथक्पदम्। गुणान्तरोत्पत्त्येति तृतीया वैशिष्ट्ये। गुणान्तरोत्पत्तिविशिष्टं सुवर्णादि विकार्यम्। तृतीयान्तस्यावर्तनात् गुणान्तरोत्पादप्रयोज्यविकारवत् कुण्डलादिकमपि विकार्यमित्युक्तं भवतीति।

व्युत्पत्तिवादकृतः गदाधरभट्टाचार्यास्तु, कर्म हि त्रिविधं भवति, प्राप्यं प्रकृति-विकृती चेति कर्मविभजनं प्रतिपादयन्ति। प्राप्यकर्मलक्षणनिरूपिकां क्रियाकृत-विशेषाणामिति कारिकां प्रदर्श्य,

यदसज्जायते पूर्वं जन्मना यत्प्रकाशते।
तन्निर्वर्त्यं विकार्यं च कर्म द्वेधा व्यवस्थितम्॥
प्रकृत्युच्छेदसंभूतं किञ्चित्काष्ठादिभस्मवत्।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्॥

इति करिकाद्वयमुल्लिखन्ति। निर्वर्त्यविकार्यकर्मविषये पक्षद्वयं हरिणोक्तमिति नाभिहितं व्युत्पत्तिवादे, नापि सूचितम्। 'जन्मना यत्प्रकाशते' इत्यनन्तरं प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा' इति कारिकार्धयोजनेऽपि संमतिर्न सूचिता। परन्तु निरुक्तकारिकायां विकार्यपदं प्रकृतिकर्मविकृतिकर्मोभयबोधकं पारिभाषिकं ग्राह्यम्। विकृतिकर्ममात्रपरतायां, काष्ठस्य सुवर्णस्य च प्रकृतिकर्मणः निर्वर्त्यादिषु त्रिषु हर्युक्ते-ष्वनन्तर्भावात् तुरीयत्वापत्त्या कर्मणः त्रैविध्योक्तिर्विरुध्येत इति मन्यन्ते। तथा च व्युत्पत्तिवादः—"अत्र प्रकृतिरपि ग्राह्या। अन्यथा काष्ठसुवर्णादेस्तुरीयतापत्तेः। विकार्यपदेनैकव्युत्पत्त्या प्रकृतिविकृत्युभयाबोधनेऽपि उभयसाधारणरूपावच्छिन्ने पारि-भाषिकमेव विकार्यपदम्।" इति।

श्रीधर्मदत्तसूरयः गूढार्थतत्त्वालोके, विकार्यं द्वेधा प्रकृतिः विकृतिश्चेति द्विप्रकारकं व्यवस्थितम्। तयोर्मध्ये किञ्चिद् विकृतिरूपं प्रकृत्युच्छेदसंभूतं काष्ठादीनां भस्म यथा, किञ्चिद् अपरं विकृतिरूपं कर्म प्रकृतिगतपूर्वगुणविलक्षणगुणोत्पत्त्या निष्पन्नं सुवर्णादीनामलङ्कारादिकं यथा इति, 'विकार्यं तु कर्म द्वेधा' इत्यादिकारिकां व्याचक्षते। काष्ठादिभस्मवदिति प्रकृतिसहितस्य विकार्यस्योदाहरणात् प्रकृति-बोधकपदसमभिव्याहृतपदबोध्यत्वं विकार्यस्यावश्यकमिति लभ्यते। पक्षे चात्र काष्ठादि-भस्मवदित्येकं पदमिति बोध्यम्।

अत्र प्रकृतिकर्मणः कण्ठरवेणानुपादानं, निर्वर्त्यप्राप्ययोरिव पार्थक्येन त-ल्लक्षणस्य स्फुटमनभिधानं विकृतिकर्मण एव सतः प्रकृतिबोधकपदासमभिव्याहारस्थले पारिभाषिकस्य निर्वर्त्यत्वस्य कर्मविभाजकत्वेनाभिधानञ्च नातीव श्लिष्टमित्यभि-सन्धिना, हरिणोक्तं कर्मविभागमनुक्त्वा, 'प्राप्यं प्रकृतिविकृती च' इति प्रकारान्तरेण कर्म विभज्य विकृतिकर्मणः पारिभाषिकं निर्वर्त्यत्वं निरूपयन्ति भट्टाचार्याः।

(क) क्रियानिष्पाद्यं यत् तत् विकृतिकर्म। तण्डुलानोदनं पचति, कुसुमानि स्रजं करोति, काशान् कटं करोति इत्यादौ ओदन-माला-कटादीनि विकृतिकर्माणि! प्रथमे, पाकक्रियया तण्डुलविनाशेनौदनस्य निर्वर्तनम्। द्वितीये क्रियया कुसुमानां सन्दर्भविशेषो जायते। कुसुमानि न नश्यन्ति। सन्दर्भस्य विशेषणस्य जन्यत्वेन सन्दर्भविशिष्टकुसुमरूपमालाया निष्पत्तिः। तृतीये काशेष्वेव कटो धर्मी क्रियया उत्पाद्यते इति विशेषोऽवसेयः। प्रकृतिकर्मासमभिव्याहारस्थले, ओदनं पचति, स्रजं करोति, कटं करोति इत्यादौ ओदनादिकं निर्वर्त्यं कर्मेति व्यपदिश्यते।

इदन्त्ववधेयम्। निर्वर्त्यलक्षणनिरूपककारिकायाः 'यदसज्जायते सद्वा जन्मना यत्प्रकाशते' इति पाठः शाब्दिकसंमतः, न्यायनिबन्धे पदवाक्यरत्नाकरे, विभक्त्यर्थनिर्णये चोपलभ्यते। सत्कार्यवादप्रस्ताव एव नास्ति। व्युत्पत्तिवादे तु, 'सदसज्जायते पूर्वं जन्मना यत्प्रकाशते' इति पाठो दृश्यते। श्रीबचचाझामहोदयाश्च भट्टाचार्योक्तत्रिविधविकृतिकर्मसाधारण्येन व्याचक्षते। पूर्वं—प्रकृतक्रियारूपव्यापारात्पूर्वम् असत्—स्वरूपेणासदोदनकटादिकं प्रकृतक्रियया जायते। तदेकं निर्वर्त्यम्। यच्च स्वरूपेण विद्यमानमेव प्रकृतक्रियया जन्मना कस्यचित् (सन्दर्भविशेषादेः) जन्मना प्रकाशते—तद्विशिष्टतया प्रकाशते, यथा मालादिकं तदपरं निर्वर्त्यम्। प्रकृतिसम्बन्धाप्रतिपादनात् प्रकृतिबोधकपदाप्रयोगो लभ्यते इति ते वर्णयन्ति इति।

(ख) प्रकृतक्रियाप्रयोज्यस्य वस्त्वन्तरोत्पत्तिप्रयोजकस्य पूर्वभावविशिष्टासत्त्वरूपविकारस्याश्रयः प्रकृतिकर्म। यथा निरुक्तस्थलेषु, तण्डुलकुसुम-काशादीनि प्रकृतिकर्माणि। प्रथमे तण्डुलस्यैव पाकेन नाशाद् विशिष्टाभावः, द्वितीये सत्स्वेव कुसुमेषु क्रियया सन्दर्भविशेषविशिष्टकुसुमाभावः संपद्यते, तृतीये च काशे कटाभावविशिष्टत्वरूपपूर्वभावविशिष्टाभावः क्रियाप्रयोज्य इति विवेकः। तथा च क्रियाप्रयोज्याभावप्रतियोगितावच्छेदकवत्त्वं प्रकृतिकर्मणो लक्षणं पर्यवसितम्।

(ग) प्राप्यं-क्रियाजन्यफलशालि, ग्रामं गच्छतीत्यादौ क्रियाजन्यसंयोगाश्रयग्रामादिकं, घटं जानातीत्यादौ ज्ञानादेर्विषयो घटादिश्च।

ननु, क्रियाजन्यफलाश्रयत्वस्य कर्मतारूपत्वेन त्रिविधकर्मसाधारण्यात् प्रकृतिविकृतिकर्मणोरतिव्याप्तमिदं प्राप्यलक्षणम्। तण्डुलानोदनं पचति इत्यत्र पचधातोर् नाश उत्पत्तिश्चेति फलद्वयावच्छिन्नव्यापारोऽर्थः, 'द्व्यर्थः पचिः' इति महाभाष्योक्तेः। निवृत्तभेदाया एव क्रियाया धात्वर्थतास्वीकारात् न व्यापारद्वयार्थकत्वं पच्धातोरिति भाष्याशयः। क्रियाजन्यस्य नाशरूपफलस्य प्रतियोगितासंबन्धेनाश्रयः तण्डुलः, उत्पत्तिरूपस्य फलस्याश्रय ओदन इति तण्डुलौदनयोरुभयोरपि कर्मत्वम्। कर्मत्वस्य फलरूपत्वात् द्वितीयाविभक्तेः कर्मप्रत्ययस्य फलार्थकता। तण्डुलपदोत्तरद्वितीयायाः, जनकतासंबन्धेन क्रियान्वयिनाशार्थकत्वे, तथा ओदनपदोत्तरद्वितीयाया जनकतासंबन्धेन क्रियान्वय्युत्पत्त्यर्थकत्वे, जनकतासंबन्धस्य वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकत्वात् नञ्समभिव्याहारस्थले तत्संबन्धावच्छिन्नप्रतियोगिताकनाशाद्यभावबोधनं क्रियायां न संभवतीति आश्रयतासंबन्धेन (वृत्तिनियामकेन) क्रिया-

न्वयिनो नाशजनकत्वस्य प्रकृतिकर्मोत्तरद्वितीयार्थता, उत्पादकत्वस्य च विकृतिकर्मोत्तरद्वितीयार्थता स्वीक्रियते। तथा च प्राप्यकर्मलक्षण प्रकृतिविकृतिकर्मणोरतिव्याप्तमिति चेन्न,

पूर्वभावविशिष्टाभावभिन्नत्वे सति उत्पत्तिभेदविशिष्टस्य क्रियाजन्यफलस्याश्रयत्वमेव प्राप्यकर्मणो लक्षणमिति विवक्षणेनोक्तातिप्रसङ्गविरहात् वाक्यपदीयोक्तस्यापि प्राप्यकर्मलक्षणस्यात्रैव पर्यवसानम्।

क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ इति **वाक्यपदीयम्।**

अत्रोक्तस्य यथाश्रुतलक्षणस्य ग्रामादावव्याप्तिः, गमनक्रियाजन्यसंयोगस्य विशेषस्य प्रत्यक्षेण गम्यमानत्वात्।

अतः प्रकृतिकर्मगतः पूर्वभावविशिष्टाभावरूपो विशेषः, विकृतिकर्मगत उत्पत्तिरूपो विशेषश्च कारिकायां विशेषपदेन विवक्षित इति वक्तव्यम्। तादृशविशेषे दर्शनानुमानादिप्रमाणासिद्धत्वकथनस्य तादृशविशेषाभावस्य लक्षणत्वे तात्पर्यम्, तस्यैव लघुत्वात्। कर्मसामान्यलक्षणाक्रान्तत्वात्, क्रियाजन्यफलशालित्वे सति निरुक्तविशेषाभाववत्त्वमिति फलितम्। तदपेक्षयापि क्रियाजन्यफले निरुक्तविशेषभिन्नत्वस्य निवेशनमेव लघूभूतमिति तत्रैव कारिकातात्पर्यं युज्यते। तस्मात् **वाक्यपदीयोक्तं** प्राप्यलक्षणं भट्टाचार्योक्ते एव पर्यवस्यतीति बोध्यम्।

'क्रियाकृतविशेषाणाम्' इत्यत्र क्रियाकृतविशेषा उत्पत्तिक्षयोपचयादयो भावविकारा एव गणनीया इति **पदवाक्यरत्नाकरकाराः।**

घटं जानाति इत्यादौ आवरणभङ्गानुकूलव्यापारो धात्वर्थः। क्रियाजन्यावरणभङ्गरूपफलाश्रयत्वाद् घटादेः कर्मत्वमिति प्राचीनाः शाब्दिकाः।

ज्ञानानुकूलव्यापारो धात्वर्थः। फलस्य ज्ञानस्य फलतावच्छेदकविषयतासंबन्धेनाश्रयत्वाद् घटादेः कर्मतेति नव्याः शाब्दिकाः। नैयायिकास्तु, घटं जानातीत्यादेर्घटविषयकज्ञानस्यैवानुभवात् केवलं ज्ञानमेव धात्वर्थं इति वदन्ति।

तन्मते क्रियाजन्यफलस्य घटादावभावात् ज्ञानविषयत्वमेव कर्मत्वं भाक्तम्। अत एव, जानात्यादेः फलावच्छिन्नव्यापारवाचकत्वाभावात् भाक्तः सकर्मकत्वव्यवहार **इत्याख्यातवादे शिरोमणिभट्टाचार्या** निरूपयन्ति।

न च मुख्यं कर्मत्वमादाय 'कर्मणि द्वितीया' (२-३-२) इति शास्त्रस्य चरितार्थता गौणमुख्यन्यायात्। अतश्च गौणे कर्मणि तस्याप्रवृत्तेः घटादिपदोत्तरं द्वितीया न भवति। न हि तीरे गङ्गापदस्य भाक्तत्वेऽपि तेन तीरेण पानस्नानादिकं कर्तुं शक्यते इति वाच्यम्। भाक्तराजपदव्यवहार्येण पुरोहितादिना राजकार्यप्रवर्तनस्य दृष्टत्वात्, विशिष्यार्थोपस्थापकविशिष्टरूपोपादानपुरःसरपदकार्यविषये एव गौणमुख्यन्यायप्रवृत्तिरिति वैयाकरणैरेव व्यवस्थापितत्वेन तन्न्यायस्यात्राप्रवृत्त्या द्वितीयोपपत्तेः। न च 'न विभक्तौ लक्षणा' इति प्राचीननैयायिकोक्तिविरोधः शङ्कनीयः। विनानुशासन-

मेकविभक्तेः अपरविभक्त्यर्थे न लक्षणा इत्येवंपरतायाः तदुक्तेर्वर्णनात्। वस्तुतस्तु, आधेयतात्वादेरिव विषयतात्वादेरपि अखण्डतया विषयतात्वावच्छिन्नेऽपि शक्तिरेव द्वितीयाया इति भट्टाचार्यैरभिहितं बोध्यम्।

न च— सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु च ॥

इति भाष्यवार्त्तिकात् कर्मण्येव द्वितीया इति नियमस्वीकाराद् विषयत्वार्थकता द्वितीयाया न सम्भवतीति वाच्यम्। तत्रापि कर्मपदस्य गौणमुख्यसाधारणकर्मपरत्वेनाविरोधात्।

अत्रेदमवधेयम्। 'प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु च' इत्येव चकारघटितो भाष्यवार्त्तिकपाठः शाब्दिकानां ग्रन्थे वैयाकरणभूषणसारे बृहद्वैयाकरणभूषणे च समुपलभ्यते।

न्यायनिबन्धे पदवाक्यरत्नाकरे तु 'नियमः प्रकृतेषु वा' इति पाठाश्रयणेन वाकारस्यानादरार्थकतया कर्मण्येव द्वितीया इति नियमस्यानादरणीयत्वमभिहितम्—

'विभक्तिः प्रकृतेष्वेवेत्येवं नियमवादिनि।
चतुर्थे चरणेऽनास्थां वाकारेणाह वार्त्तिकम् ॥ इति

कारिकयेति।

रामरुद्रभट्टाचार्यास्तु घटं जानातीत्यादौ क्रियाजन्यफलानाश्रयस्यापि घटादेः 'अकथितं च' (१-४-५१) इति सूत्रेण कर्मसंज्ञा विधीयते इति वदन्ति। तदुक्तं व्युत्पत्तिवादस्य द्वितीयाविभक्त्यर्थविचारे गां दोग्धि पय इति वाक्यार्थनिरूपणावसरे रामरुद्रीये—

"तथापि साक्षात् धात्वर्थतावच्छेदकफलभिन्नधातुप्रतिपाद्यान्वयिधर्मावच्छिन्नमपादानत्वादिभिरविवक्षितं कर्म इत्यर्थकतया तत्सूत्रस्य (अकथितं चेति सूत्रस्य) तेषां कर्मत्वोपपत्तिरिति ध्येयम्।" इति।

अयं पक्षः पदवाक्यरत्नाकरे 'अकथितं च इति सूत्रेण विषये कर्मसंज्ञा ज्ञाप्यते। ......इत्यपरे' इति सन्दर्भेण प्रदर्शितः परन्तु, परिगणितानां द्विकर्मकधातूनां योगे प्रधानकर्मव्यतिरिक्तस्य अपादानत्वादिभिरविवक्षितस्य कर्मसंज्ञां शास्ति इदं सूत्रमिति शाब्दिकमर्यादाऽनुसन्धेया।

किञ्चान्यत्, गां पयो दोग्धि इत्यत्र पयः प्रधानकर्म, अपादानत्वाविवक्षायां कर्मसंज्ञा गोपदात् द्वितीयोपपत्तये 'अकथितं च' (१-४-५१) इति सूत्रेण विधीयते। 'अप्रधाने। 'अप्रधाने दुहादीनां प्रधाने नीहृकृष्वहाम्' इत्यनुशासनात् दुहादिधातूत्तरकर्माख्यातेनाप्रधानकर्माभिधीयते। अतो गौर् दुह्यते क्षीरम् इति प्रथमान्तगोपदघटितं वाक्यं साधु इति शाब्दिका वदन्ति। नैयायिकाः गदाधरभट्टाचार्या अपि तथैव निरूपयन्ति।

जगदीशभट्टाचार्यास्तु, दुह् धातोर् मोचनानुकूलव्यापारोऽर्थः। मोचनं गोनिष्ठव्यापारः। तदनुकूलव्यापारो दोग्धृगोपनिष्ठः। तथा च साक्षात् धात्वर्थतावच्छेदक-

मोचनव्यापाररूपफलाश्रयत्वात् गोः प्रधानकर्मता 'कर्तुरीप्सिततमं कर्म' (१-४-४६) इति सूत्रेणैव सिद्धा। पयसः कर्मतासिद्धये 'अकथितं च' (१-४-५१) इति सूत्रं प्रवर्तते। सर्वत्र (दुहादिप्रयोगेऽपि) कर्माख्यातेन प्रधानकर्मतैव बोध्यते। गोः प्रधानकर्मत्वात् तत्कर्मत्वस्याभिहितत्वात् 'गौर्दुह्यते क्षीरम्' इति प्रथमान्तगोपदघटितं वाक्यं साधु भवति, इति विलक्षणप्रक्रियां निरूपयन्ति। तदुक्तं शब्दशक्तिप्रकाशिकायाम्—

'गां पयो दोग्धि गोपः इत्यत्र दुहेर् मोचनानुकूलव्यापारोऽर्थः।...पयः-कर्मताकं यद्गोवृत्ति मोचनं तदनुकूलव्यापारवानिति बोधः।' 'अत एव परम्परया दुह् धात्वर्थतावच्छेदकीभूतवहिःक्षरणशालित्वेन पयःप्रभृतेः तत्कर्मत्वसंपत्त्यर्थम् 'अकथितं च (१-४-५१) इति सूत्रान्तरप्रणयनमपि पाणिनेः संगच्छते'।

'दुहादेर्गौणकं कर्म नीवहादेः प्रधानकम्' इत्युक्तिभेदेन विविद्वयं शाब्दिकानामनादेयम्।" इति तत्र तत्र।

नैयायिकमते घटादेर् मुख्यं ज्ञानकर्मत्वं नास्तीत्याशयेन भट्टाचार्यैः प्राप्यकर्मनिरूपणावसरे 'ज्ञानादेर्विषयश्च' इति पृथक्तयाभिहितम्। पदवाक्यरत्नाकरकारास्तु विषयता ज्ञानं च धात्वर्थः, विषयतात्मकफलाश्रयत्वाद् घटादेः कर्मत्वमिति वदन्ति। हरिवल्लभा, न्यायमतनिरूपणावसरे विषयतानिर्वाहकं ज्ञानं ज्ञाधात्वर्थं इत्यनुवदन्तः पक्षमिमं रोचयन्ते इति प्रतिभाति।

एवं उपात्तविषयं, निर्दिष्टविषयं, अपेक्षितक्रियमिति त्रिविधेषु अपादानेषु अपेक्षितक्रियस्य, कुतो भवान्? पाटलिपुत्रात् इत्युदाहरणं प्रदर्शयन्ति शाब्दिकाः। माथुराः स्रौघ्नेभ्य आढ्यतरा इत्युदाहरणमभिहितं व्युत्पत्तिवादे। सिद्धान्तकौमुदीकाराः 'पञ्चमी विभक्ते' (२-३-४२) इति सूत्रेण तत्र पञ्चमीति तामुपपदविभक्तिं ब्रुवन्ति। एवं, 'सप्तम्यधिकरणे च' (२-३-३६) इत्यत्र चकारात् दूरान्तिकार्थेभ्यः सप्तमी सिद्धयति। अतः दूरं दूरे इत्यादि सिद्धयतीति शाब्दिकाः। चकारादकारकाधारवाचिनोऽपि सप्तमी भवति। अत एव भूतले घटः इत्यादौ भवतीतिक्रियाया अध्याहाराभावेपि सप्तमी साधुः। साध्यवद्भिन्ने साध्याभाव इति दीधितिकाराणां सप्तमीसमासतया व्याख्यानमपि संगच्छते, वर्तते इति क्रियाध्याहारे सामर्थ्याभावेन समासासाधुतापत्तेः। इति व्युत्पत्तिवादे प्रतिपादयन्ति भट्टाचार्याः।

एवं, धूमादग्निमानित्यादौ 'विभाषा गुणेऽस्त्रियाम्' (२-३-२५) इति सूत्रे विभाषा इति योगविभागाश्रयणेन पञ्चमीमुपपादयन्ति शाब्दिकाः। स्वकार्यज्ञाप्यान्यतराश्रयाश्रितत्वं गुणत्वमिति परिष्कारमाश्रित्य विनैव योगविभागं पञ्चमीमुपपादयन्ति नैयायिकाः।

इत्थमन्येऽपि शाब्दिकानां प्रक्रियाभेदाः न्यायनिबन्धेषु प्रदर्शिताः सुधीभिरवगन्तव्या इति शिवम्॥

# ॥ईश्वरश्रुतिनिर्णयः॥

बालसुब्रह्मण्यशास्त्री

नत्वा गुरून् महाभागान् तदुक्तीः परिभाव्य च ।
बालकः कुरुते स्वार्थमीश्वरश्रुतिनिर्णयम् ॥

अस्ति ईश्वरशब्दः लोके वेदे च तत्र तत्र प्रयुज्यमानः । अयञ्च शब्दः ईश ऐश्वर्ये इति धातोः स्थेशभासपिसकसो वरच्" इति सूत्रेण वरचि निष्पन्नः । अस्ति चान्या व्युत्पत्तिः "अश्नोतेराशुकर्मणि वरट् च" इति औणादिकसूत्रेण अश् व्याप्तौ इत्यस्मात् वरटि निष्पन्ना । आशुकर्म वरदानादिक्रिया यस्य तस्मिन् वाच्ये शीघ्रदातरि इति यावत् तत्र ईश्वरः इति प्रयुज्यते । स्त्रियान्तु वरटः टित्वात् "टिड्ढाणञ् इत्यादिना ङीपि ईश्वरीशब्दः । ईशेः वनिपि "वनो र च" इत्यनेन ङीप्रयोस्तु कृतयोः धातुस्वरेणाद्युदात्तः द्वितीयः ईश्वरीशब्दः । प्रथमस्तु प्रत्ययस्वरेण मध्योदात्तः । ईश्वरस्य स्त्री इत्यर्थे विवक्षिते पुंयोगलक्षणे ङीषि अन्तोदात्तः तृतीयः ईश्वरीशब्दः । एवं ईश्वरीशब्दः त्रिविधः । वरच्प्रत्ययान्तस्य ईश्वरशब्दस्य कृदन्तस्य स्त्रियां टित्वाभावात् ङीपः अप्रवृत्तेः अदन्तत्वात् टापि ईश्वरा इति भवति । अतएव ईश्वरी च ईश्वरा उमायाम्" इति मेदिनीकरः द्विविधम् शब्दमाह । "विन्यस्तमङ्गलमहौषधिः ईश्वरायाः" इति भारविः टाबन्तमाह । अतएव च "ईश्वरानुग्रहादेव पुंसामद्वैतवासना" इति सूक्तेः ईश्वरायाः उमादेव्याः अनुग्रहादेव इत्यपि व्याख्यानम् केनोपनिषदमाश्रित्याभियुक्ताः वर्णयन्ति । अत्र ईश्वरशब्दः योगरूढः इति विचक्षणानामभ्युपगमः पङ्कजादिशब्दवत् । ईश् धातोः लटि तस्य "लटः शतृशानचावप्रथमासमानाधिकरणे इति शानचि निष्पन्नः ईशानशब्दः ईश्वरापरपर्यायोऽपि योगरूढ एव । अयमीशानशब्दः कठोपनिषदि बहुत्र प्रयुज्यते ।

"अङ्गुष्ठमात्रः पुरुषः ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥

इति मन्त्रे ईशानशब्दः (योग) रूढ एवाङ्गीकार्यः । अतएव व्यासाचार्यः "शब्दादेव प्रमितः" इति सिद्धान्तसूत्रे ईशानपदं श्रुतिरूपमाह । "निरपेक्षो रवः श्रुतिः" इति मीमांसकमतानुरोधेन रूढशब्दस्यैव वाचकत्वेन श्रुतिशब्देन व्यवहारः । उत्तरमीमांसायां प्रथमाध्यायस्य तृतीयः पादः शाब्दिकपाद इति व्यवह्रियते । यतः "द्युभ्वाद्यायतनं स्वशब्दात्" "शब्दादेव प्रमितः" "पत्यादिशब्देभ्यः" इति चादि-

मध्यावसानेषु श्रुतिवाचकं शब्दपदं सूत्रकारः प्रयुङ्क्ते । पूर्वोक्तकठमन्त्रे भूतभव्यस्य इति प्रतिसम्बन्ध्युपादानात् ईशानशब्दः केवलयौगिकः, रूढिशक्तिर्नोन्मिषति । यतः अस्ति न्यायः "योगरूढिमताम् शब्दानां यौगिकार्थप्रतिसम्बन्ध्युपादाने रूढिर्नोन्मिषतीति । अतएव" पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः इति श्लोके सरः प्रतिसम्बन्धिनः अग्रपदस्योपादानात् सरोरुहशब्दे रूढिर्नोन्मिषति । केवलं योगार्थ एव प्रतिभासते । अतएव पद्मशब्दप्रयोगः पौनरुक्त्याभावश्च । अन्यथा "उत्फुल्लस्थलनलिनीवनादमुष्मात् उद्धूतः सरसिरुहोद्भवः परागः इत्यत्र सरलिरुहशब्दस्येवात्र सरोरुहशब्दस्य रूढ्युन्मेषे पद्मपदं पुनरुक्तम् स्यात् । एवञ्च तन्न्यायेन "ईशानो भूतभव्यस्य" इतिमन्त्रे भूतभव्यस्येति प्रतिसम्वन्ध्युपादानात् ईशानपदे रूढ्यनुन्मेषे केवलयोगार्थप्रतिभाने न ईशानपदं श्रुतिरिति केचन मन्यन्ते । नेदं समीचीनम् । रूढ्यर्थाविवक्षायाम् योगार्थप्रतिसम्बन्ध्युपादानं न सार्वत्रिकम् अनुगतं प्रयोजकम् । यतः "कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये" इत्यत्र पिनाकपाणिपदगम्ययोगार्थप्रतिसम्वन्धिनः अनुपादानेऽपि हरस्येति पृथक् पदं उपात्तं दृश्यते । रूढ्यर्थाविवक्षायां किल पूर्वश्लोके पद्मपदवत् अत्र हरस्येति पृथक् पदमपुनरुक्तं स्यात् । अपि च योगार्थप्रतिसम्बध्युपादानमात्रं रूढ्यर्थाविवक्षायां कारणमिति निर्बीजं वक्तुं न शक्यते । तात्पर्यानुसारेण हि अविवक्षा वक्तव्या । अतः पद्मानि यस्य इत्यादौ रूढ्यर्थाविवक्षायामन्यदेव कारणं वक्तव्यम् । तत्र काव्यानां व्यञ्जाप्रधानत्वात् व्यञ्जनोपयोगी योऽर्थः तत्रैव कवेस्तात्पर्यातिशयः इति यस्याग्रसरोरुहाणि इत्यत्र हिमवदग्रभागगतेषु सरस्सु विद्यमानानां पुष्पाणां विकसनम् रविः ऊर्ध्वमुखैः मयूखैः करोति इति वर्णयन् महाकविः हिमवतः औन्नत्याधिक्यं व्यञ्जयति । सरोरुहपदं कवितात्पर्यविषयीभूतहिमवदौन्नत्यव्यञ्जनोपयुक्तम् योगार्थमादायैव पर्यवस्यतीति कवेरत्रैव तात्पर्यमिति रूढ्यर्थप्रतीतिः झटिति न स्यात् इति मन्वानः कविः तदर्थं पुनः पद्मपदमुपात्तवान् । एवमेव पिनाकपाणिपदस्य शिवे शौर्यातिशयद्योतकतया योगार्थपरत्वस्यैव कवितात्पर्यविषयीभूतत्वम् । अतिशूरस्य पिनाकपाणेरपि धैर्यच्युतिं सम्पादयामि किमु वक्तव्यमन्यस्य धैर्यच्युतौ इति हि तत्र विवक्षितोऽर्थः । ततश्च यत्र योगरूढं पदं व्यञ्जनाव्यापारव्यग्रम् तन्निर्वाहकतया योगार्थमेवापेक्षते तत्र रूढ्यर्थाविवक्षा युक्ता, झटिति तदप्रतीतेः । झटिति तत्प्रतीत्यर्थम् पुनः तद्वाचकपदोपादानमित्येवानुगतम् प्रयोजकम् रूढ्यर्थाविवक्षायाम् वक्तव्यम् । यतः इदं प्रयोजकम् ईशानो भूतभव्यस्य इत्यत्र न सम्भवति यद्यपि "यस्याग्रसरोरुहाणि" "हरस्यापि पिनाकपाणेः" इत्यादौ सम्भवति । यतः कठमन्त्रे वाच्यातिरेकेणान्यार्थः नैव विवक्षितः । परमात्मन एव मुख्यया वृत्त्या गम्यमानस्य विवक्षाविषयत्वम् । नापि ईशितृत्वरूपः यौगिकार्थः अन्यार्थव्यञ्जनोपयुक्तः श्रुतितात्पर्यविषयीभूततया कल्पयितुमपि शक्यते । अतः अनुगतस्य व्यञ्जनोपयुक्तयोगार्थकतारूपस्य तात्पर्यस्य अन्यत्र सर्वत्रापि अनुगतस्य रूढ्यनुन्मेषप्रयोजकस्य कठमन्त्रगतईशानशब्देऽभावात् रूढ्युन्मेषे न किमपि प्रतिबन्धकम् । अतः ईशानपदम् रूढिरूपम् श्रुत्यात्मकमेव । अपि च भूतभव्यस्येति ईशानपदे गुणभूतम् अन्वेति । न तेन प्रधानईशानपदगतरूढेः

परित्यागः न्याय्यः। गुणे त्वन्याय्या कल्पना इति हि जैमिनीयो न्यायः। गुणभूत-बहुत्व-संख्यानुरोधेन प्रधानभूतपशुप्रातिपदिकस्य तद्घटितविशिष्टमन्त्रस्य वा अन्यथानयनम् प्रकरणात् बहुपशुके यागे उत्कर्षश्च न न्याय्यः इति किल तत्र सिद्धान्तितम्। पद्मानि यस्य इत्यत्र तु सरोरुहपदम् अग्रपदमपेक्षते। नहि अग्रपदेन विना औन्नत्यव्यञ्जनोपयोगी हिमवदग्रभागगतसरस्सु विद्यमानत्वमर्थो लभ्यते। तथा च विशेषणेनापि यस्याग्रे इत्यनेन स्वापेक्षितेन योगार्थसंकोचोऽपि सह्यते। पदस्वारस्यलभ्यस्य सामान्यरूपस्य योगार्थस्य विशेषे पर्यवसानं व्यञ्जनोपयोगि आश्रयणीयं किल। एवं व्यञ्जनोपयोगि-योगार्थसंकोचाङ्गीकारे किमु वक्तव्यं रूढ्यर्थपरित्यागोऽपि सोढव्यः इति। प्रकृते कठ-वल्लीगतईशान शब्दे तु व्यङ्ग्यार्थस्य विवक्षितस्य अभावात् भूतभव्यपदं न योगलभ्यार्थ-संकोचकम्। तत्पदाभावेऽपि ईशानपदेनैव सकोचकाभावात् निरङ्कुशमैश्वर्यं लभ्यते। अतएव "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन इत्यत्र संकोचकाभावात् निरङ्कुशं तत्तत्पदानि यज्ञदानादीनि स्वस्वशक्त्या सर्वयज्ञदानपराणि इत्यभ्युपगम्यते। व्रीहि-भिर्यजेत इत्यादौ तु संकोचकप्रकरणवशात् यजतिः साङ्कुशः दर्शपूर्णमासयागमात्र-परोऽभ्युपगम्यते। एवञ्च भूतभव्यस्येति पदं ईशानश्रुत्या निरङ्कुशैश्वर्यस्य प्रतीतेरनु-वादमात्रमभ्युपगन्तव्यम्, नाग्रपदवत् व्यञ्जनोपयोगि, नापि रूढ्यर्थोन्मेषप्रतिबन्धकम्। अपि च व्यङ्ग्यार्थप्रतीतौ उपक्षीणतेव रूढ्यनुन्मेषे योगरूढिमतः पदस्य अन्यदपि कारणम् वक्तुं शक्यम्। "लपनं पद्ममेवास्याः लावण्यसरसीरुहमित्यत्र लावण्यसरसि जातं पद्ममेवास्याः कामिन्याः मुखम् इत्यर्थप्रतिपादने सरसीरुहपदेन अलभ्यलावण्यार्थकं लावण्यपदम् सरसीरुहपदगम्ययौगिकार्थविशेषकम् सत् तत्र व्यापृतमिति अनेनापि हेतुना रूढ्युन्मेषो न भवति। अतएव पद्मपदं पृथक् प्रयुक्तम्। एवमेव "अग्रसरोरुहाणि" इत्यत्रापि सरोरुहपदेन अलभ्यमानाग्रविशेषितयौगिकार्थवशीकृतमिति सरोरुहपदात् पृथक् पद्मपदं प्रयुक्तम्।

कठवल्लीकृतईशानपदे प्रकृते तु संकोचकाभावात् अलभ्यमानार्थप्रतिपादक-पदान्तरोपादानन्नास्तीति ईशानपदयौगिकार्थतया तल्लब्ध एवार्थः भूतभव्यस्य इत्यनेन पश्चात् अनुवदिष्यते। रूढ्यर्थानुन्मेषशङ्कापि अत्र नास्ति। अतः ईशानपदरूढेः अनुन्मेषे व्यङ्ग्यार्थव्यापाराख्यस्य अथवा तत्पदालभ्यार्थबोधकपदान्तरोपादानाख्यस्य वाऽनुगतस्य प्रयोजकस्य ईशानपदेऽभावात्, प्रतिसम्बन्ध्युपादानस्य च प्रयोजकस्याननु-गतत्वेन परित्यागात् ईशानपदं रूढ्युन्मेषवदिति, सिद्धं श्रुतिरेवेति। ईश्वरशब्दस्य योगरूढस्य भूतपत्यादिशब्दवत् असाधारणमहादेववाचकत्वमभिप्रेत्यैव श्रीमान् शिति-कण्ठभाष्यानुयायी हरदत्ताचार्यः स्वकीयायां चतुर्वेदतात्पर्यसंग्रहरूपायाम् श्रुतिसूक्ति-मालायां "तन्त्वामनन्यगतिः ईश्वर संश्रयामि इति प्रथमश्लोके स्वग्रन्थप्रतिपाद्यं महादेवं शरणं याति। ईशानपदवत् भर्गपदमपि योगरूढं महादेवमात्रवाचकम् अकारान्तमित्यप्यभिप्रैति हरदत्ताचार्यः।

गायत्रीमन्त्रगतं भर्गशब्दमपि नासुन्नन्तमपि तु घञन्तमेव अकारान्तम्। अतः गायत्रीप्रतिपाद्यः सवितुरपि वरेण्यः महादेव एव, सवितृपदमात्रश्रवणात् सावित्रमन्त्र

इति व्यवहारः इति इममर्थम् बहुश्रुतिस्मृतिपुराणयुक्तिनिचयप्रदर्शनेन पञ्चदशभिः श्लोकैः सप्रपञ्चं विवृणोति श्रीमान् शितिकण्ठमतानुयायी हरदत्ताचार्यः। विस्तर-भयात् एतावता उपरम्यते, इति शिवम्।

मतेर्विकासमन्विच्छन् ईश्वरश्रुतिनिर्णयम्।
यथावत्सूत्रभाष्योक्तिमनूद्य कृतवानिह॥
सन्तः क्षाम्यन्तु दोषांस्तान् गच्छतः स्खलनं भवेत्।
नहि निर्दुष्टमप्येतद् जगत् वेधोविनिर्मितम्॥
ईश्वरः प्रीयतामीशश्रुतिनिर्णयवर्त्मना।
भक्तेस्मिन् बालके देवः सुब्रह्मण्याभिधे सदा॥

# संस्कृतादिभारतीयभाषाशब्दनिर्वचनसमस्या

भागीरथप्रसादत्रिपाठी

सहायकमैतिह्यं शब्द-निर्वचने। शब्दानामितिहासज्ञानाय प्रयोगाः, संबद्ध-भाषागतशब्दैस्तुलना गुणदोषनिरूपणं च निकषः। शब्दानामैतिह्यप्राप्त्यभावे काल्पनिक्या निरुक्त्या संतोषाय परिपाटी पुरातनी—'मह्यां रौति मयूरः' इत्यादि। अद्यत्वे भाषाविज्ञानके युगेऽप्यस्मिन् भारतीया वैयाकरणाः प्राधान्येन समाश्रयन्ति परिपाटीमेताम्। एवंविधान्यविचारितरमणीयानि निर्वचनानि बालक्रीडामात्रमिति नालं जिज्ञासूनां जिज्ञासाप्रशान्तये गवेषकविद्वज्जनाह्लादाय च। 'सदोषानुसन्धानानुष्ठानापेक्षया तस्याकरणं श्रेयः। अनुसन्धानकर्मणि नातित्वरा विधेया।' इति जीवरसायनज्ञस्य नोबेलपुरस्कारविजेतुः श्रीटिसेलियसमहोदयस्य (स्वीडनाभिजनस्य) मतम्। यावच्चिरमैतिह्यादिभिः प्रमेयाणां संपुष्टिर्न भवेत्, तावच्चिरमनुमानानि साधनरूपतया नाङ्गीकरणीयानि।

भारतीयभाषाणां ध्वनिपरिवर्तनानि भारतीयवैयाकरणैर्ज्ञायन्ते। पाणिनीयव्याकरणस्य सुष्ठुज्ञानं भारतीयभाषाणां विश्लेषणे परमं सहायकम्। किन्तु व्याकरणेनाधारेण भारोपीयभाषाणां ध्वनेर्ध्वनिपरिवर्तनस्य च विश्लेषणमविचारितचेष्टामात्रम्। व्याकरणं तावत् पदसिद्धेरुपायः, न त्वितिहासः।

दायच् इति डच् इति वा शब्दस्य दैत्यात्, सुलतान-शब्दस्य च सुरत्राणशब्दाद् व्युत्पादनमनैतिहासिकम्। यूनिवर्सिटी-शब्दस्य 'योनिवरसृति'—शब्दात् बाइसिकल-शब्दस्य च वायुशकलशब्दान्निष्पादनं कल्पनाकौशलमात्रं दिष्टदुरुपयोगो वा। बाइसिकलशब्दगतः 'बाइ' इति लैटिनशब्दो द्विसंख्याबोधकः, न तु वायुवाचकः। आर्येतरभाषाशब्दानामादानं तदनुवादो वा संस्कृताद्यार्यभाषासु नास्ति नूतना दिक्। पुरुषवानरार्थकस्य द्राविडभाषामयस्य 'आणमन्ति' इति शब्दस्यानुवादो वृषाकपिशब्दे (ऋ० १०, ८६ सूक्ते) द्रष्टव्यः। द्राविडभाषासु 'आण्' इत्यस्य 'आळ' इत्यस्य वार्थो भवति 'पुरुषः' इति। 'मन्ति' इत्यस्य चार्थो भवति—'वानर' इति। पुरुषार्थकोऽयमेव 'आळ्'—शब्दस्तत्र भाषासु स्त्रीलिङ्गे 'आळी' इति स्त्र्यर्थे व्यवह्रियते। तत्रत्यः स्त्र्यर्थक एष आळी-शब्दः संस्कृतभाषायां सख्यर्थे गृहीतो मूलतः संस्कृतेतरः। वाल्मीकीयरामायणादौ 'आणमन्ति'-शब्दो हकारागमेन सह 'हनूमन्त्'—रूपेणोपलभ्यते, तदनुरूपाश्च पौराणिक्यः कथा अपि दृश्यन्ते। दाक्षिणात्यासु भाषासु तदुच्चारणं 'हणमन्त' इत्येव।

केचिच्छब्दा लिप्यन्तरमात्रेण (Transliteration) मनाक् परिवर्तनेन तद्रूपा एवाविकलाः संस्कृतभाषायां गृहीताः सन्ति । ग्रीकभाषाया 'केन्त्रोन्'—शब्दः (तु० लैटिन्—केन्त्रुम्) संस्कृतभाषायां 'केन्द्र'—रूपेण, दियोमित्रियोस् (>जायामित्र)—शब्दो जामित्ररूपेण च गृहीतौ स्तः । महाभारतस्यादिपर्वणि—'सुरुङ्गां विविशुस्तूर्णम्' (१, १४८, ११) पर्वसंग्रहे च—'विदुरस्य च वाक्येन सुरुङ्गोपक्रमक्रिया' इत्येतयोः श्लोकयोरुपात्तः सुरुङ्गा-शब्दः संस्कृतेतरः । ग्रीकभाषायाः 'सुरिंक्स्'—शब्दाद् गृहीतोऽयम् । आङ्ग्लभाषायाः 'सिरिंक्स्' इति 'सिरिन्ज्' इति च शब्दौ तुलामर्हतः । एषां शब्दानां निर्वचनस्य गवेषणाप्रयासः संस्कृतभाषायां सुतमां मोघो भविष्यति । यथाकथञ्चिद् हठाद् व्युत्पत्तिकल्पना सर्वथाऽप्रामाणिकी, अनैतिहासिकी निष्फला च भवति । संस्कृताद् विश्वभाषाणामुद्गमे भ्रान्तधारणा भारतीयवैयाकरणान् हठाद् व्युत्पत्तिकल्पनां प्रति चिरकालात् प्रेरयति । शब्दानामितिहासविचारणाया गुणदोषविवेचनायाश्चार्थे भवति कापि विशिष्टा शिक्षाऽपेक्षिता । यथा संस्कृतव्याकरणशिक्षायां पाटवाय द्वादशवर्षाणि गमनीयानि भवन्ति, तथैव शब्दानामैतिहासिकस्य निर्णयस्य कृतेऽपि कस्याश्चिद् विशिष्टायाः शिक्षाया योजनाऽपेक्ष्यते । सेयं शिक्षा श्रमयत्नावपेक्षते, न तु कण्ठस्थीकरणमात्रम् । आदौ, योग्यमार्गदर्शकस्य साहायकं वाञ्छनीयम् । यद्यपि ग्रीकभाषायाः 'सेमिदालिस्' इति शब्दस्य 'लिस्'—प्रत्ययस्य लोपं विधाय संक्षिप्तात् 'सेमिदा' इत्यस्मात् संस्कृते 'समिता'—शब्दो निर्मितः, तथापि भारतीया वैयाकरणाः 'सम्यग् इना=प्राप्ता' इत्येतादृशीं व्युत्पत्तिं हठात् प्रदर्शयन्त्येव । शब्दस्यैतिहासिकपरीक्षणाय प्रश्न उपस्थापनीयो भवति—'शब्दोऽयं भारतीये वाङ्मये कुतः कालादारभ्य प्रयुक्तोऽस्ति' इति । तद्वाच्यस्य पदार्थस्य प्रयोगो व्यवहारो वा कस्मात्कालाज् जात इत्यादि च चिन्त्यम् । इतः सहस्रद्वयवर्षानन्तरं संस्कृतेन केनचिदनूदितं द्विचक्रिकावाचकं वायुशकलशब्दं दृष्ट्वाऽनुसन्धाताऽभिधास्यति—'अहो, वायुशकलं तु संस्कृतवाङ्मये लभ्यते । नूनं तस्याविष्कारः प्रथमं भारते जात इति । द्विचक्रिकायाः सर्वेषामवयवानां नामानि तेन संस्कृतसाहित्ये गवेषणीयानि भविष्यन्ति तथ्यनिर्धारणार्थम् । तत्र कस्याप्यवयवस्य नामधेयानुपलब्धौ सोऽन्यत्र योरोपीयभाषासु गवेषणया ज्ञास्यति खलु स्रोतांसि । समितया निर्मीयमाणानां पदार्थानां नामानि संस्कृते गवेषणयापि नोपलप्स्यन्ते । भावप्रकाशे षोडशशताब्दीके ग्रन्थे समितापि दृश्यते, कानिचन खाद्यनामान्यपि दृश्यन्ते[1] । समिता धौतगोधूमचूर्णमात्रम् । किन्तु दशमशताब्दीकेन यादवप्रकाशेन समुद्घोषितम्—'गोधूमस्तु म्लेच्छभोज्यः' इति । भावप्रकाशकारेण भावमिश्रेणाप्यनुमोदितम्—'महागोधूम इत्याख्यः पश्चाद्देशात् समागतः' इति ।

तैत्तिरीयसंहितायाम्, माध्यन्दिनवाजसनेय्यां संहितायाम्, शतपथब्राह्मणादिषु ग्रन्थेषु प्राप्तसमुल्लेखानां गोधूमानां म्लेच्छभोज्यतायाः पश्चिमदेशात् समागतत्वस्य च कुतो निर्देशः कृतः कोशकाराभ्याम् ? अनुसन्धायकैः प्राचीनभारते गोधूमानामुपयोगः,

१. विशेषतो ज्ञानाय 'तद्धितान्ताः केचन शब्दाः' इति पुस्तकस्य भूमिका द्रष्टव्या ।

गोधूमनिर्मितपदार्थाः, पदार्थनिर्माणसाधनानां नामानि संस्कृतवाङ्मयेऽन्वेषणीयानि। ख्रीस्ताब्दात् द्वितीयशताब्दीतः प्राक् संस्कृतग्रन्थेषु गोधूमपदार्थानां तत्साधनानां च स्रोतांसि नासाद्यन्ते। कौटलीयेऽर्थशास्त्रे भारतीयानां भोजनम् 'आर्यभक्तम् इत्युक्तम्। तत्र भक्तम्, सूपः, घृतं तैलं वेति पदार्था उल्लिखिता भोजने। यद्यपि तत्र गोधूमोल्लेखः, तथापि भक्ष्यपदार्थरूपेण न तद्वर्णनम्। तेषां यववत् क्षुण्णत्वं दर्शितम्—'गोधूमास्तु क्षुण्णाः' इति। यज्ञेषु गोधूमनिर्मितस्य कस्यचन पदार्थस्य होमादिकं न विधीयते। परतस्ते (गोधूमाः) केवलं यूपचषालेषूपयुज्यन्ते स्म। दाक्षिणात्या परम्परा सा। तत्र गोधूमचूर्णपिण्डेन निर्मितो दीप उपयुज्यते। अन्यत्रापीयं प्रथा प्रायः प्राप्तप्रचारा। तैत्तिरीयसंहितायां तु—'अनाहुतिर्जर्तिला गवीधुकाश्च' इत्युक्त्वाऽऽरण्यगोधूमाः (=कौडिल्ला, गरहेडुआ, कसाड कोङ्कणीभाषायाम्) अपि हवनाद् बहिष्कृताः।

इमाः सर्वाः शब्दसंक्रान्तयः प्रकाशयन्ति भारतीयानां सांस्कृतिकान् संबन्धान्। उपयोगीनि वस्तूनि भारतीयैस्तथासक्त्याऽङ्गीकृतानि यथा तेषां वैदेशिकत्वप्रख्यापने चेखिद्यते तदीयं चेतः। उपयोगिनां वस्तूनां कुतश्चिदप्यादानं भारतीयसंस्कृतेर्वैशिष्ट्यम्—'अमेध्यादपि काञ्चनम्' इति। अवेस्ताभाषायाः 'गन्तोम' इति, पर्सियन्-भाषायाश्च गन्दुम् इति शब्दौ तुलनीयौ। संस्कृते 'गोधुम' इति 'गोधूम' इति च द्विधा शब्द-प्राप्तिः। तमिलभाषायां 'गोदुमै' शब्दो मननीयः। संस्कृते गोधूमशब्दस्य व्युत्पत्तिः काल्पनिकी—$\sqrt{}$गुध् (वेष्टने)+ऊम (उणादिप्रत्ययः)। केषाञ्चिद् विदुषां मतानु-सारेण शब्दस्यास्य व्युत्पत्तिरेवं भवेत—'गौः=पृथिवी, ततो धूमवन्निर्गताः' इति (मॉनियर् विलियम्स्)। आर्यैर्मार्गे मेसोपोतामिया-(ईराक)—देशेऽवाप्तो गोधूम-परिचय इति 'आर्या वैदेशिकाः' इति मतमूरीकुर्वतां मतम्। तैर्भारताद् बहिर्गत्वा-ऽपि गोधूमपरिचयः कर्तुं शक्यते स्म। किन्तु 'मोहेन्-जो-दड़ो' 'हरप्पा' इत्यादिषु स्थानेषु गोधूमा लब्धा एव।

इदानीं पुनर्वयं व्यवहारमाश्रयामः। महाभाष्यकारेण भगवता पतञ्जलिना गोधूमास्तन्निर्मितपदार्था वा भोज्यरूपेण क्वापि नोपस्थापिताः। तेन तु पदे पदे दर्शित ओदनः। एकत्र पचतेरर्थो विक्लित्तिर्दर्शितः। अतो रोटिकया सह पचतेः सम्बन्धो भवितुं नार्हति। तत् तु स्पष्टतो भर्जनम् आचष्टे। रोटीशब्दो देशजाद् रोट्टशब्दाद् गृहीतोऽस्ति। तस्य मौलोऽर्थस्तु—तण्डुलचूर्णमिति। गुर्जरभाषायां 'लोट' इत्यवाप्यते। पालिभाषायामनुपलब्धोऽयं शब्दः।

सप्तदशशताब्द्याः प्रथमार्धे हालैण्डदेशस्य वाणिजेन पैलसट इत्याख्येन लिखितम्—'तुर्कादयो यथा गोधूमरोटिकया सह मांसभोजनं कुर्वन्ति, भारतीयास्ता-दृशमभ्यवहारमकृत्वा कणैः कणान् भुञ्जते (गल्लह रा बा गल्लह मी खुर्दन्द)। भक्तम्, द्विदलम्, मनाक् च घृतमित्येतावन्मात्रं भारतीयानां भोजनम्' इति।

प्राप्तेऽप्यस्मिन्नितिहासे पुरोडाशशब्दाद् रोटस्य रोटिकाया वा कल्पनाऽसंगता। तया दिशा तु पूड़ा (पूड़ी)-शब्दकल्पनाऽपि पुरोडाशशब्दस्य 'रो' इत्यस्मिन् 'श' इत्यस्मिश्च लुप्ते सति 'पुडा' इत्यवशिष्टाच्छब्दाद् शक्यते कर्तुम्। उत्कलभाषायां

'पुरोड़' इति शब्दो लभ्यते । नैतस्य पुरोड-शब्दस्यापि संबन्धः पुरोडाशशब्देन भवितु-मर्हति । पूरपुट-शब्देन संबद्धो ज्ञेयोऽसाविति ।

वेदेषु 'पुरोळाश' इत्यस्य 'पुरोडाश' इत्यस्य वार्थो नास्ति रोटिकेति[1] । पुरो दीयमानस्य कस्यचिदपि हविषो नामधेयमिदम्[2] । अतः पशुः, पशुप्रतिमा, यजमान-स्तदात्मा च, यज्ञततिर्मस्तिष्कश्चेत्यादयोऽपि पुरोडाशत्वेन गण्यन्ते स्म[3] । 'पुरोळा' इत्यस्यार्थः—पुरोगामी पुरोदाता चेत्यपि[4] । पुराडाशः खलु भक्तम्=अन्धोऽन्नमपि[5]। ऋग्वेदसंहितायां 'पचत्यम्' इति पुरोडाशस्य विशेषणतयोपन्यस्तम् । 'पचने साधु' इति तदीयोऽर्थः । पुरोडाशेन सह पच्धातोः प्रयोग ऋग्वेदसंहितायां त्रिर्लभ्यते । एतस्मादपि ज्ञायते यत् पुरोडाश-खाद्यं नासीद् रोटिकासदृशम् । किन्तु संयावप्रतीकाशो घृतेन जलेन च पाकयोग्य आसीत् कश्चन विशिष्टः पदार्थः । ऋग्वेदसंहिताव्याख्यायां सायणेन पुरोडाशस्यार्थो धानाकरम्भादिलक्षणः कृतः[6] ।

भावप्रकाशे रोटिकाशब्दः प्रयुक्तः[7] । यदि रोटिकैव पुरोडाशोऽभविष्यत्, तदा स तत्स्थाने पुरोडाशशब्दमेव प्रायोक्ष्यत । माषपिष्टिकागर्भाया गोधूमचूर्णतो रचिताया रोटिकाया नामधेयं तेन वेढमिकेति समाख्यातम्[8] । तुलनीयः प्राकृतभाषायाः प्रश्नव्याकरणसूत्रे (२, ५ प० १४८) अभिधानराजेन्द्रे चोल्लिखितः 'वेढिम'—शब्दः । तदर्थः—वेष्टनं कृत्वा निर्मितं खाद्यमिति । एवं सत्येतेषां शब्दानां व्युत्पत्तिः संस्कृतभाषायाः प्रकृतिप्रत्ययाभ्यां कल्पिता सर्वथा दोषयुक्ता । एतादृशानां लोके भूयिष्ठतया प्रयुक्तानां देशजादिशब्दानां ग्रहणस्यानुमोदनं वामनेन स्वकीये काव्या-लङ्कारसूत्रवृत्तिग्रन्थे (५।१।१३) कृतम् । उटजशब्दव्युत्पत्तिप्रसङ्गे भानुजिदीक्षितेन नामलिङ्गानुशासने सुधाख्यायां व्याख्यायाम् उटशब्दस्तृणादिवाचको देशीत्युक्तम् । इत्थं

१. वीहि शूर पुरोळाशम्—ऋ० ३।४१।३=पुरोडाशाख्यं हविः (सायणः) ।
पुरोडाशं पचत्यं जुषस्व—ऋ० ३।५२।२=पुरो दाशन्त एनमिति पुरोडाशो हविः (सायणः)।
२. सः (कूर्मरूपेणाच्छन्नः पुरोडाशः) वा एभ्यः (मनुष्येभ्यः) तत्पुरोऽदाशयत् । य एभ्यो यज्ञं प्रारोचयत् तस्मात् पुरोदाशः । पुरोदाशो ह वै नामैतद् यत् पुरोडाश इति—श० ब्रा० १।६।२।५ ।
३. पशोर्वै प्रतिमा पुरोडाशः—तै० ब्रा० ३।२।८।८ ।
आत्मा वै यजमानस्य पुरोडाशः—कौषीतकिब्रा० १०।५ ।
मस्तिष्को वै पुरोडाशः—तै० ब्रा० ३।२।८।७ ।
४. पुरोळा इत्तुर्वशो यक्षुरासीद् राये—ऋ० ७।१८।६=पुरोळाः=पुरोगामी, पुरोदाता वा (सायणः) ।
५. पुरोळाशं नो अन्धस इन्द्र सहस्रमा भर—ऋ० ८।७८।१=पुरोदीयमानम् एतत्संज्ञकम् अन्धसः अन्नं स्वीकुरु (सायणः) ।
६. तां आशिरं पुरोळाशमिन्द्रेमं सोमं श्रीणीहि—ऋ० ८।२।११=तदनन्तरं पुरोडाशम्=धाना-करम्भादिलक्षणं सवनीयपुरोडाशम् इमम्=अस्मदीयं सोमं च श्रीणीहि=मिश्रय (सायणः) ।
७. सिद्धैषा रोटिका प्रोक्ता (१४५ पृ०) ।
८. 'रचिता रोटिका सैव प्रोक्ता वेढमिका बुधैः (१४ पृ०) ।

संस्कृतभाषाया विद्वांसोऽपि संस्कृते संस्कृतेतरशब्दानङ्गीकुर्वन्ति। तेषां संस्कृतेतर-शब्दानां व्युत्पत्तिप्रसङ्गे संस्कृतप्रकृतिप्रत्यययोरुपन्यासो ह्रासाय स्वाज्ञानप्रकाशाय च भवेत्। अस्मिन् प्रसङ्गे शाबरभाष्योल्लिखिताः पिकपीलुप्रियङ्ग्वादयो म्लेच्छशब्दा विवेचनीयतामर्हन्ति।

संस्कृतभाषायां संस्कृतेतरशब्दानामस्ति वृहती सूची। संस्कृतभाषातः पालि-भाषायां गृहीतः शब्दो रूपान्तरीभूय पुनः संस्कृतभाषायां प्रयुक्तोऽभूत्। यथा चतुर-शब्दः पालिभाषायां चटुलत्वं गतः। सः पुनः 'त्रासातिमात्रचटुलैः' (रघु० (९।५८) इति संस्कृतभाषायां चाञ्चल्यरूपेऽर्थे प्रयुक्तः। प्राकृतभाषायां खजाकार्थकश्चट्टुल-शब्दः। कतिषुचित् प्रदेशेषु चाञ्चल्यरूपेऽर्थे दर्विशब्दः प्रयुज्यते। संप्रति चमसशब्दो-ऽप्यनेकार्थकः, विशेषतश्चातुर्यरूपाद्यर्थकः।

संस्कृतभाषाया राष्ट्रशब्दोऽपभ्रष्टः सन् 'लाट' इति भूत्वा पुनः संस्कृतभाषायां लाटत्वेनैव प्रयुक्तः। वस्तुतः स सुराष्ट्रशब्दस्य संक्षेपः। सुराष्ट्रप्रदेशः पश्चिमराजस्थानात् प्रभृति सिन्धुप्रदेशं यावदासीत्। सिन्धुप्रदेशस्योपभाषा 'लड़िकाना' 'लाड़' 'लार' इति वा (तुल० 'लडका मडकाश्चैव तङ्गणा परतङ्गणाः' (मभार० भीष्म० ५०, ५१)। परतस्तु राजस्थानस्य पश्चिमभागमादाय पूर्णः सुराष्ट्रप्रदेशः गुरु+सुराष्ट्र>गुर्जराट इति गुर्जर इति वा जातः। पश्चिमराजस्थानस्थितस्यार्बुदपर्वतस्य शिखरं गुरुनाम्ना प्रख्यातम् आसीत् (द्र० टाडलिखितं राजस्थानपुस्तकम्)। तत्र शिखरे भगवतो दत्ता-त्रेयस्य पादुके विद्येते। रघुकुलगुरोर्वसिष्ठस्याप्याश्रमस्तत्र पुराऽवस्थित इत्यर्बुदाचलस् तीर्थमिति प्रसिद्धः संप्रत्यपि। राजपुत्राणामुत्पत्तिरिहैव कीर्तिता। अस्मादेव गुरुस्थानाद् आरभ्य संपूर्णः सुराष्ट्रप्रदेशः—गुरुसुराष्ट्र>गुर्जरात्र>गुर्जराट गुजरात इति ख्यातः। मार्कण्डेयपुराणे 'गुरुस्वराः' इत्यनेन रूपेण संकेतमात्रम् उपलभ्यते। भाषाया ऐतिह्यमनुसृत्य सकारोऽनेकत्र जकारत्वेन परिणतः। तद्यथा—√अस्+धि (मध्यमपुरुषैकवचने) इत्यत्र धातुसकारस्य जकारत्वेन परिवर्तने अज्+धि>अय्+धि>अइ+धि='एधि' इति। न+√सद्>नज्द्>न+य्द्>नइ+द्=नेद्+ईयसुन्=नेदीयस्, नेद्यस् इति संस्कृते, पर्सियन्-भाषायां तु नज्द (=नजदीक) इति। एवमेव—अपि+√सद्>पिज्द>√पीड् इति। भारतीयैर्वैयाकरणैः शब्दधातूना-मेषां मूलस्यानवगमाद् नैतादृशेन रूपेण कृतं विश्लेषणम्। तैः √नेद् इति √पीड् इति च धातू अविभाज्यौ मतौ।

उक्तस्येतिहासस्यानवगमात् केचन विद्वांसः 'गुर्जर' शब्दं खजर-शब्दाद् व्युत्पाद-यन्ति, केचिच्च 'गोचर'-शब्दात्। श्रीमतो भाण्डारकरस्य लेखे व्युत्पादितेऽपि गोचराद् गुर्जरशब्देऽसंतोषः प्रकटितः, खजरशब्दाच्च व्युत्पादनाय प्रयत्न आस्थितः। ततोऽपि नैतत् तोषाय प्राभवत्, व्युत्पादितेऽपि तस्मिन् खजरशब्दाद् मध्यवर्तिनो रेफोद्भवस्या-समाहितत्वात्।

एवमेव गुर्जरसहचरस्य जाटशब्दस्यापि व्युत्पादनार्थम् ऐतिह्यानवगमात् कल्पनाः समाश्रीयन्ते। इदमीयस्यैतिह्यस्य गवेषणे यत्नः कर्तव्यः। यास्कीये निरुक्ते जाट्य-

शब्दप्रयोगो दृश्यते ।[1] देशीनाममालायां (३।४५) जाडीशब्दो गुल्मलताप्रतानार्थको लभ्यते । शब्दसाम्यदर्शनमात्रेणैव व्युत्पत्तिनदीष्णैर्न शब्दद्वयस्य मिथःसंबद्धता कल्पनीया । सर्वेऽपि जाटा न भवन्ति जटिला इति जटातस्तदीया व्युत्पत्तिर्हासाय भविष्यति । जातीनां नामधेयं कस्यचिद् देशस्य सरितो वा संपर्केण जायते, आहोस्वित् पूर्वजातेस्तादृशं रूपं भवति यद् विविधपरिवर्तनान्नाशु परिचीयत इति जानन्त्येव जातिविशेषज्ञाः । विशेषणरूपेण प्रयुक्तस्य जाटशब्दस्यार्थो भवति 'ग्राम्यः, उद्दण्डः' इत्यतः केचिदेनं जाड्यशब्देनाभिसंबध्नन्ति ।

जाटजातिरियं सिन्धुप्रदेशे, पूर्वपञ्चाम्बुप्रदेशे, राजस्थाने, उत्तरप्रदेशस्य च पश्चिमे भागे प्रसारमाप्ता । एषाऽऽभीराभिन्नप्रायेति प्रवृत्तीनामेतदीयानामवलोकनाज्ज्ञायते । यादवानां चानेकाः श्रेणयः सन्ति । श्रीकृष्णकाले यादवा दुर्दान्ता[2] उद्दण्डाश्चाप्यभूवन् । एतेषां दुर्व्यवहारेण चोद्विग्न ऋषिवर्गः । यादवशब्दस्यापभ्रंशः 'यादो'[3] इति 'जाट' इति । ध्वनिपरिवर्तननियमानुसारेण संस्कृतभाषाया दकारो हिन्द्यादिभाषासु डकारो भवति । यथा दरः > डर इति । डकारस्य टकारो भवति । यथा—आडी > आटी = नदनद्यादितटप्रदेशेषु निवसन्ती चटका (तुल० 'त्वमाप्याडिर्भवस्वेति' —मार्कण्डेयपुराणे ९, १०) : आडम्बरः > अटब्बर इति ।

प्राप्तेऽप्येवंप्रकारे प्रमाणसूत्रे नैतद् निर्वचनं तावत् प्रामाणिकं स्यात्, यावद् ऐतिह्यप्रमाणैर्यदुवंशेन सह जाटजातेः संबन्धस्य पुष्टिर्न स्यात् । पंजाबप्रदेशे जाटबालको 'जटेटा' 'जटेटी' इति, जाटस्त्री 'जट्टी' इति, अर्भकः 'जट्टुंगड़ा' इति जाटश्च 'जट्ट' इत्यभिधीयते । मद्रदेशे जट्ट—(> जर्त)—प्रदेशस्योल्लेखो विहितो हेमचन्द्रेण । (पुराणेषु 'विश्वस्फूर्जि' इति 'विश्वस्फाणि इति रूपेण च विख्यातेन) वनस्परण (९०-१२० खी०) मगधादाप्रयागं कृतो राज्यविस्तारः । तेन विहारप्रदेशाद् मद्रका अपि जेजाकभुक्तिप्रदेशे समाहूताः । ते मूलतः पञ्चाम्बुप्रदेशाभिजना आसन् ।[4] महाभारते शल्यपर्वणि चत्वारिंशेऽध्याये मद्रदेशीयानां जनानां दुश्शीलतां वर्णयता कर्णेन मद्राधिपतिः शल्य आक्षिप्तः । तत्र दशमे श्लोके जर्तिकनामकानां वाहीकानां चरितं सुनिन्दितमाख्यातम् ।[5] पञ्चाम्बुप्रदेशीया लोकोक्तयोऽपि तथार्थका

१. 'सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका यथा व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति' —निरु० १।४।१४—जाट्यः = जटावान् (निरुक्तविवृतिः) ।

२. (क) जट्ट ते फट्ट, बद्धे चंगे । (ख) जट्ट बूट जट्टबहिड़, वहिड़, बंहड़ ।
(ग) जट्ट वाहद्द, जट्ट बाघ । (घ) जट्ट णा जाणे गुणकरा चणा न जाणे वाह ।
उस्दा गुरू सुहागा उस्दा गुरू शाह ।।

३. जायव—णायाधम्मकहासुत्त ।

४. द्र० 'बुन्देलखण्ड की प्राचीनता' ४९ पृ० ।

५. कार्येणात्यर्थगूढेन वाहीकेपूषितं मया ।
तत एषां समाचारः संवासाद् विदितो मम ॥९॥
शाकलं नाम नगरमापगा नाम निम्नगा ।
जर्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितम् ॥१०॥

लभ्यन्ते[1]। उभयत्रोक्तिषु सादृश्यम् अस्ति, देशोऽप्यभिन्नः। जिप्सीभाषायां 'जत्त' (फिर्दौसी), जोत्त=अरबियादेशस्य सीरियादेशस्य च जिप्सीजातीयाः। सिन्धीयभाषायां तत्रत्यः कर्षकः 'जट्टु' इत्युच्यते। जाटशब्दस्य मूलं 'जर्त' इति। एतेन 'मेसागेताई' इत्येतस्य 'गेताई' इति 'जेटाइ' इति वा जाटशब्दमूलमिति प्रत्यादिष्टम्। एवं दिशा जर्तशब्दस्य निर्वचने प्रयत्नो विधेयः। एवं तावदितिहासात्मिकया तुलनात्मिकया गुण-दोषविवेचनात्मिकया च सरण्या व्युत्पत्तिपरीक्षणं नामानुसन्धानपथः॥

१. भीण रोही, मैण्ह लोही, तलवार सरोही।
रन्न जट्टी होर सब खान दी चट्टी॥

# शब्दपूर्वको योगः

सत्यकामवर्मा

## १. पीठिका

महामहिमवतः शब्दानुशासनपयोनिधेः व्याकरणचन्द्रोदयं चिकीर्षितवतो महामनीषिणः श्रीमतश्चारुदेवस्य शब्दब्रह्मविदो हीरकजयन्तीप्रसंगे समुचितैव भाति शब्दब्रह्मणश्चर्चा। सहेतुकमपीदं, यतोहि तेनैव पण्डितप्रवरेण वाक्यपदीयस्य प्रथमः समुद्धारः प्रकल्पितः। पदवाक्यप्रमाणज्ञस्य वाग्विदां वरस्य भर्तृहरेर्वाक्यपदीयस्य समुद्धारे तस्य हि श्रमः केन शेमुषीजुषा संस्कृताध्यायिना न समादृतः? स हि शब्दब्रह्मविदो हरेरुत्तराधिकारं सप्रमाणं वहति। शब्दापशब्दविवेकं समुद्बोधयता व्याकरणचन्द्रोदयं च विदधता तेन हि सारस्वतेन स्वयमपि शब्दब्रह्मण उपलब्ध्यै शब्दपूर्वको योगोऽध्यासितः। अतः सावसर एव भर्तृहरिणा चर्चितस्य शब्दब्रह्मोपलब्धिहेतोः शब्दपूर्वस्य योगस्य चर्चाप्रसंगः।

## २. प्रास्ताविकम्

वाक्यपदीयमधीयानेन श्रीमता सुब्रह्मण्य-ऐयरमहाभागेन सर्वप्रथमं तस्याध्यात्मिकं महत्त्वं स्पष्टीकृतम्। तेनैव च वाक्यपदीयस्थब्रह्मकाण्डस्योपास्यत्वेन स्थितस्य शब्दब्रह्मण उपलब्ध्यै सहायभूतस्य शब्दपूर्वस्य योगस्य महत्त्वमपि स्पष्टीकृतम्। भर्तृहरिनाम्नि स्वकीये ग्रन्थे तेनैव महाभागेन योगस्यास्य महाभाष्ये निगदितेन 'शास्त्रपूर्वकेण प्रयोगेण'[1] 'वाग्योगेन[2]' च सार्धं सम्बन्धोऽपि स्थापितः। एकत आध्यात्मिकमिव अपरतश्च लौकिकं व्यावहारिकं चेवेदं मतं कस्य स्वाध्यायशालिनो मनो न हरति। अत एवास्माभिरपि तत्रैव श्रमस्य हेतोः कृतसंकल्पैः यत्किंचिदपि स्वाध्यायपरिणामजातमधिगतं तदेवेह निगद्यते।

## ३. सम्बद्धा कारिका

एकस्यामेव कारिकायां केवलं योगस्यास्य नाम्ना निर्देशो भर्तृहरिणा कृतः। सा चेयम् कारिका—

> यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः।
> शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत् ॥ वा० १.२०॥

अस्यां कारिकायां 'यत्र'-इत्यस्य सम्बन्धो द्वाविंश्यां कारिकायां समापतितेन 'परब्रह्म'-पदेन संगच्छते। अस्य च परब्रह्मणः प्रकरणं तत्पूर्वासु सर्वासु कारिकासु

१. 'शास्त्रपूर्वके प्रयोगे०'—सिद्धान्तवार्त्तिकम्। म० १.१.१।
२. 'वाग्योगविद् दुष्यति०'—व्याकरणप्रयोजनेषु 'यस्तु प्रयुङ्क्ते' इत्यस्मिन् प्रसङ्गे। म० १.१.१।

सदपि विशेषतया सप्तदश्याः कारिकायाः : 'अत्रातीतविपर्यासः'-इत्यादेर् आरभ्यते। तत्रापि 'अत्र'-इत्येतस्य सम्बन्धः पूर्वयोः कारिकयोः वर्णितेन 'व्याकरणेन' संगच्छते। व्याकरणे चोपलभ्यमानस्य ब्रह्मणः शब्दब्रह्मत्वमेव सिद्ध्यतीति नास्त्यत्र संदेहलेशावशेषः। तच्च तिसृषु कारिकासु भर्तृहरिणा निस्संशयं स्पष्टीकृतम् : 'आसन्नं ब्रह्मणस्तस्ये'ति एकादश्यां कारिकायां, 'तद्व्याकरणमागम्येति' द्वाविंश्यां कारिकायां, 'तस्माद्यः शब्दसंस्कारः'-इति शताधिकद्वात्रिंशकारिकायां चेति। सर्वास्वपि चासु कारिकासु व्याकरणमेव ब्रह्मणस्तस्य प्राप्त्युपायरूपेण वर्णितमस्ति। तच्च ब्रह्म शब्दब्रह्मैव भवितुं शक्नोतीति नास्त्यत्र सन्देहलेशावशेषोपि।

**४. धर्मस्तस्य च साधनम्**

कथितं हि **'यतोभ्युदयनिःश्रेयससिद्धिः स धर्मः'**। अभ्युदयो नाम लौकिकी समृद्धिः, निःश्रेयसं च पारलौकिकी। भर्तृहरिणा उभे अप्येते लक्ष्ये व्याकरणस्यापि साध्यत्वेन वर्णिते। निश्रेयसं हि नाम कैवल्यं मोक्षो वा। तच्च व्याकरणद्वारैव सारल्येन सिद्ध्यति, भर्तृहरिणेदं प्रतिपादितम्। **'तद्द्वारमपवर्गस्य'**,[1] **'इयं सा मोक्षमाणानाम्'**,[2] इत्यादिरूपेण तेन मोक्षोऽपवर्गो वा व्याकरणस्य लक्ष्यरूपेणोपस्थापितः। ब्रह्मोपलब्ध्यनन्तरमेव मोक्ष उपलभ्यते। तस्य च ब्रह्मण उपलब्धिरपि व्याकरणेनैव द्वारा सम्भवति। **'तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते'**,[3] **तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते**[4], इत्यादिषु शब्दसंस्कारप्रतिविधात्रा व्याकरणेनैव द्वारा शब्दब्रह्मण उपलब्धिः सम्भाव्यते। स्पष्टमेवं यन्मोक्षोपलब्ध्यै व्याकरणस्यावश्यकता स्वीकृतैव वर्त्तते। अन्यथापि भर्तृहरिः स्वमतं पोषयन्नाह :

> **सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा।**
> **युक्ता प्रणवरूपेण सर्ववादाविरोधिना॥**[5]

प्रणवो ब्रह्मैव नापरः। तस्य चोपलब्धिः विद्याद्वारैव सम्भवति। वेदरूपा सा च विद्या। तस्या विशुद्धिः परमावश्यिका। सा च व्याकरणद्वारैव सम्भवति। यतो हि, व्याकरणं हि सर्वविद्यास्थानमधिविद्यं च तत् प्रकाशते :

क.—**'पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते॥'**[6]

ख—**'तथैव लोके विद्यानामेषा विद्या परायणम्॥'**[7]

एवं कथयितुं शक्यते यत् मोक्षोपलब्ध्यै व्याकरणं हि साधनरूपेण महत्तया स्वीक्रियते।

१. वा० १.१४।
२. वा० १.१६।
३. वा० १.२२।
४. वा० १.१३२।
५. वा० १.९।
६. वा० १.१४।
७. वा० १.१५।

अभ्युदयो नामापरं लक्षणं धर्मस्य। उक्तं हि भर्तृहरिणा : साधूनां साधुभिस्तस्माद् वाच्यमभ्युदयार्थिभिः[१]। अस्यायमर्थो यत्साधुत्वज्ञानं परमावश्यकमभ्युदयाय। कथितं चान्यत्र तेनैव महाभागेन : 'साधवो धर्मसाधनम्।'[२] साधुशब्दान् ज्ञात्वैव वयं धर्मसाधने समर्था भवेम। साधुत्वं चेदं व्याकरणेनैव परिपाल्यते पुष्यते च। कथितं च भर्तृहरिणा : साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।[३]

लौकिकाय अभ्युदयाय वाचोपि प्रयोजनवत्ता सिद्धा। भर्तृहरिमतेऽपि 'वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती। न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥[४] तस्या वाचः संस्कारेणैव परब्रह्मोपलब्धिर्भवतीत्युक्तं तेनैव 'तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः'[५]। संस्कारश्चायं व्याकरणेनैव द्वारा सम्पाद्यते। कथितं हि भर्तृहरिणा : 'वाङ्मलानां चिकित्सितम्',[६] 'कायवाग्बुद्धिविषया ये मलाः',[७] इत्यादि। उभयत्रापि व्याकरणमेव वाङ्मलानां चिकित्सितभूतमुद्घोषितम्।

### ५. उपायमात्रम्

सिद्धं ह्येवं यद् व्याकरणेनैव द्वारा धर्मोपलब्धिः संजायते। नान्यः पन्था विद्यते। धर्मसाधनेनैव ब्रह्मोपलब्धिः परिणमति। अतएव सिद्धं व्याकरणस्योपायत्वं ब्रह्मोपलब्धौ। उपायस्य च परिभाषा कृता ह्येवं भर्तृहरिणा : "उपादायापि ये हेयास्तानुपायान् प्रचक्षते[८]।" अर्थात्, व्याकरणं साधनमात्रमेव, न खलु साध्यम्। तच्च ब्रह्मोपलब्धौ हेयत्वेनावतिष्ठते। ब्रह्मोपलब्धौ तु व्याकरणस्य साध्यभूता वागपि स्वरूपत्वेन हेया त्याज्या वा संजायते। यदि ब्रह्मण एवापरं नामधेयं शब्दब्रह्मेति स्वीकुर्मः, तदापि वाचो बाह्यं स्वरूपं महत्त्वहीनमेवावतिष्ठते; यतो हि शब्दब्रह्मण एव अनादिनिधनत्वं सिध्यति, न तु वाचो व्यक्तस्य रूपस्य। तस्यैव ब्रह्मणोऽर्थे भर्तृहरिणा 'रसः', 'ज्योतिः', 'प्रकाशः', इत्यादयः संज्ञाः प्रयुक्ताः—'यो वाचः परमो रसः',[९] 'यत्तत् पुण्यतमं ज्योतिः',[१०] 'प्रकाशं यमुपासते',[११] इत्यादिषु। व्याकरणस्य विभाजकं वाचश्च व्यक्तं रूपं तुलनायामन्धकारत्वेनैवावतिष्ठते : 'तस्य मार्गोयमाञ्जसः,[१२]

१. वा० १.१४०।
२. वा० १.२७।
३. वा० १.१४२।
४. वा० १.१२५।
५. वा० १.१३२।
६. वा० १.१४।
७. वा० १.१४७।
८. वा० २.३८।
९. वा० १.१२।
१०. वा० १.१२।
११. वा० १.१६।
१२. वा० १.१२।

'यदस्मिन्नेव तमसि',[1] इत्यादिः। यद्यपि तयोर्विना तज्ज्योतिः प्रकाशो वापि नैव समुपलभ्यते : 'वाग्रूपता चेदुत्क्रामेत्',[2] 'यदस्मिन्नेव तमसि ज्योतिः शुद्धं विवर्त्तते',[3] इत्यादि।

अतः कथयितुं पार्यते यद् व्याकरणस्य वाचश्च ज्ञानत्वमेव सिद्ध्यति, तयोः ज्ञेयत्वरूपेण तु शब्दब्रह्मैवावतिष्टते।

## ६. कोऽसौ योगः ?

भगवता पतञ्जलिना योगसूत्रेषु ब्रह्मण उपलब्ध्यै योग एव उपायभूतः प्रदर्शितः। तस्य च परिभाषा एवं कृता : योगश्चित्तवृत्तिनिरोधः[4]। आध्यात्मिकं तत्। तेनैव भगवता स्वकीये महाभाष्ये 'चत्वारि शृङ्गा'-इत्यस्य मन्त्रस्य व्याख्याप्रसङ्गे 'महो देवो मर्त्यां आ विवेश' इत्यस्यायमभिप्रायोऽभिलक्षितः 'महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्'[5] इत्युक्तम्। यदपि प्रयोजनं योगेन साध्यते, तदेव व्याकरणेनापि सम्पाद्यते। अतएव कथितं भर्तृहरिणा : 'आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः।'[6]

अन्यत्रापि च भगवता पतञ्जलिना कथितम् : 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति।[7] भर्तृहरिरपि तदेव कथयति :—

सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा।
युक्ता प्रणवरूपेण सर्ववादाविरोधिना॥[8]

वाचः शुद्धिरियं प्रणवरूपेण युक्ता सत्येव सर्वविद्यावेद्यत्वमावहति। अत्र 'प्रणव-युक्त'-शब्दयोः समावेशो विशेषतयावधानयोग्यः। अनयोः सम्बन्धः क्रमशः योगेन ब्रह्मणा चोपजायते। शब्दात्मना ब्रह्मणैव सायुज्यमिष्यते। कथितं च भर्तृहरिणा :

'अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥'[9]

अत्रापि हि सायुज्य-प्रयोगो योगस्य समाध्यवस्थोपलब्धिपरिचायकत्वेनैवावतिष्ठते।

अतः सुस्पष्टमेव यद् योगे यथा चित्तवृत्तिनिरोध आत्मब्रह्मणोरैकात्म्यस्य मूलत्वेन स्थितोऽस्ति, तथैव शब्दब्रह्मण उपासकस्य आत्मापि शब्दसंस्कारमाध्यमेनैव तद् ब्रह्माधिगन्तुं समर्थो भवति। कथितं हि : 'तस्माद्यः शब्दसंस्कारः सा सिद्धिः

१. वा० १.१८।
२. वा० १.१२५।
३. वा० १.१८।
४. यो० १.२।
५. 'चत्वारि०'—व्याकरणप्रयोजनेषु म० १.१.१।
६. वा० १.११।
७. म० १.१.१।
८. वा० १.९।
९. वा० १.१३१।

परमात्मनः ।'[1] अतो व्याकरणे श्रम एव भर्तृहर्यभिप्रेतो योगो, नान्यदिति सुनिश्चितम् ।

७. शब्दप्रयोगः

उपजायते तदायं प्रश्नो यत्कोसौ शब्दपूर्वको योगः, यस्य परिणामोपलब्धौ वाचो निमित्तानि अक्षरस्मृतेः चिह्नानि इव प्रतिबिम्बवद् भासन्ते ? कथं च तस्य व्याकरणाद् भेदः ?

एतस्मिन्नेव प्रसगे ऐयरमहाभागैः भगवतः पतञ्जलेः 'शास्त्रपूर्वकः प्रयोगः' 'वाग्योगश्च' स्मृतौ ।[2] तेषां मते 'शब्दपूर्वको योगः' द्वाभ्यामेताभ्यां नैव सर्वथा भिन्नः । नेदं युक्तं भाति। कथितं हि मुनिना पतञ्जलिना 'प्रयोगे सर्वलोकस्य' इत्यस्य वार्त्तिकस्य प्रसङ्गे 'शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन'[3] इत्येतत्सिद्धान्तवार्त्तिकम् । तदेव भर्तृहरिणापि स्वकीये वाक्यपदीये पुनरपि कथितम् : 'शिष्टेभ्य आगमात् सिद्धाः साधवो धर्मसाधनम् ।[4] उभयोरपि तयोः मते शास्त्रपूर्वकः प्रयोग एव अभ्युदयाय धर्मसाधनाय वा कल्पते। अपरत्रापि च आगमस्यानन्त्यं प्रामाण्यं च भर्तृहरिणा स्वीकृतम् :

चैतन्यमिव यश्चायमविच्छेदेन वर्तते ।
आगमस् तमुपासीनो हेतुवादैर्न बाध्यते ॥[5]

अतः आगमस्याश्रयः शब्दप्रयोगाय तत्साधुत्वपरिज्ञानाय वा अनिवार्यतया स्वीक्रियते । अनेन विना नैव सम्भवति शब्देष्वधिकारः। शब्देषु चाधिकारवानेव शब्दप्रयोगवित् शब्दयोगविद् वाग्योगविद् वाऽभिधीयते । उद्धृतं हि पतञ्जलिना :

यस्तु प्रयुङ्क्ते कुशलो विशेषे, शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र, वाग्योगविद् दुष्यति चापशब्दैः ॥'[6]

स्पष्टमेव यद् भगवान् पतञ्जलिः शास्त्रपूर्वकं प्रयोगमभिदधानोपि वाग्योगमेवाभिप्रैति । तद्दृष्ट्या उभयोरपि प्रयोगः समानार्थः । कथयितुं शक्नुमो यत्तेन भगवता शब्दपूर्वो योगः सर्वथैव न स्मृतो; यतो हि तेन भगवता 'साधुशब्दस्य' स्थाने 'शब्द'-शब्दः एव प्रयुक्तः—'भूयांसोपशब्दाः, अल्पीयांसः शब्दाः एकैकस्य शब्दस्य बहवोऽपभ्रंशाः[7]', इत्यादिः ।

अतः कथयितुं शक्यते यत् शब्दप्रयोगः, शास्त्रपूर्वकः प्रयोगः, वाग्योगश्चेत्यनर्थान्तरम् । परमस्ति तेषां विभेदः 'शब्दपूर्वात् योगात्' ।

१. वा० १.१३२ ।
२. भर्तृहरि, १४१-४६ ।
३. म० १.१.१ ।
४. वा० १.२७ ।
५. वा० १.४१ ।
६. म० १.१.१—व्याकरणप्रयोजनेषु ।
७. म० १.१.१ ।

ज्ञाते योगे, ज्ञाते च शब्दप्रयोगे, स्वाभाविको ह्येव शब्दपूर्वं योगं प्रति जिज्ञासा। आध्यात्मिको योगोऽपि निदिध्यासनादिभिश्चरणैः समाधिपर्यन्तं साध्यते। यमनियमासनादिषु प्रवृत्तिरपि विना शास्त्रज्ञानेन विना ह्याप्तोपदेशेन वा नैव शक्या। नियमेषु ईश्वरप्रणिधानस्वाध्याययोः अस्तित्वमपि ज्ञानमाध्यमेन विना नैव सिद्धयति। सर्वमपि च ज्ञानं शब्देनैवानुविद्धम् : 'अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।[1]' अतः कापि योगसाधना विना शब्देन न सम्भवति। यमादारभ्य धारणापर्यन्तं शब्देष्वाश्रयोऽनुल्लंघनीयः। धारणावस्थायां मनःस्थिरीकरणाय शब्दस्यैवाश्रय आवश्यकः। जपरूपेण शब्द एव मनोभावमावहति। मनोभावानां केन्द्रीकरणं वा केनापि शब्देनैव माध्यमभूतेन सम्भवति। पुनः पुनरुच्चार्यमाणो हि सः शब्दः 'जप' इतिनाम्ना कथ्यते। मानसमेवोच्चारणमिदं, नैन्द्रियम्। ध्यानावस्थायामागम्य जपेन स्थिरीभूते मनसि शब्दरूपमवहीयते, तस्य चाभिप्रेता प्रतीतिः स्थिरीभवति। सा च ध्येयरूपा प्रतीतिः समाधिदशायां आत्मपरमात्मनोः संयोगरूपेणात्मानमभिव्यनक्ति। तस्यामनुभूतायां न किंचिज्ज्ञेयत्वेन कथमप्यवशिष्यते। ज्ञानज्ञेययोरभेदोऽप्युपजायते। स तु निर्विकल्पः समाधिः। विकल्पश्च शब्दविषयः। निर्विकल्पत्वे हि शब्दानामप्यनुपयोगित्वमुपजायते। तदा तु सागरे क्रीडतः तटप्रतीतिरिव शब्दब्रह्मणि तरतः साधकस्य पूर्वोच्चारितानां शब्दानामाभासो वा पूर्वप्रतीतिर्वा जायते। नहि शब्दास्तदा स्वरूपेणावतिष्ठन्ते। स्वरूपमर्थरूपं च ते तदा विसृज्य शब्दभावनारूपेण प्रतिबिम्बवदिवाभान्ति। अथवा एवमपि कथयितुं शक्यते, यत्तदा आत्मपरमात्मनोः संयोगप्रतीतिर्यद् ब्रह्मत्वमादधाति, तच्छब्दभावनया सह्यखण्डितोपि सन् शब्दस्य बाह्यरूपत्वं नैवावधत्ते। तत्र ब्रह्मशब्दयोरभेद इव समुपजायते। सैवावस्था वेदब्रह्मणोरेकत्वस्य। अतः समुचितमेवेदं कथनं यच्छब्दपूर्वेण योगेनैव माध्यमेन परब्रह्मण उपलब्धिः सम्भवति। ब्रह्मणश्चोपलब्धौ शब्दानामुपयोगो हीयते। अत एव स योगोपि **'शब्दपूर्वको योगः' 'शब्दपूर्वो वा योगः'** इत्येवं कथ्यते।

**९. शब्दब्रह्म :—**

तच्च ब्रह्म स्वयमपि शब्दत्वादभिन्नमेवेति बहुधा सिध्यति। उचितमेवेदं कथनं यन्न कापि प्रतीतिरनुभूतिर्वा शब्दरूपत्वेन विना अनुभवितुं शक्यते। **'अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।'**[2] अन्यथापि, यदि हि ब्रह्मणः प्रतीतिः स्फोटरूपेण जायते, तदापि तस्य शब्दत्वेनाभिन्नत्वं सिध्यति। अथवा, ओंकाररूपेण ध्यायिनां ब्रह्मोपलब्धिः नादात्मिकैव। अत एव ते ब्रह्मापि नादब्रह्मैवाभिदधति। शब्दतत्त्वरूपेणैव च ब्रह्मणः शब्दब्रह्मणश्चानादिनिधनत्वं सिध्यति।

अतः शब्दब्रह्मोपलब्धौ शास्त्रविहितः आगमानुमतः शब्दप्रयोग एव योगस्यापि कारणभूतः शब्दपूर्वस्य योगस्य चरमोपलब्धिं सम्भवां करोति। अत एव हि कथितं भर्तृहरिणाः

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[3]

१. वा० १.१२३।
२. वा० १.१२३।
३. वा० १.१।

# मुहावरों के अनुवाद की समस्या

भोलानाथ तिवारी

अनुवाद आज के युग की एक अनिवार्य आवश्यकता है। अनुवाद में जिन विभिन्न प्रकार की समस्याओं से अनुवादक को जूझना पड़ता है, उनमें एक महत्त्व-पूर्ण समस्या मुहावरों के अनुवाद की है। सामान्य शब्दावली के माध्यम से की गई अभिव्यक्ति की तुलना में मुहावरों के माध्यम से की गई अभिव्यक्ति जितनी अधिक प्रभावशाली तथा व्यंजक होती है, उसका अनुवाद भी उतना ही कठिन होता है।

अनुवाद करते समय स्रोत भाषा में किसी मुहावरे के मिलने पर अनुवादक का प्रयास सबसे पहले लक्ष्य भाषा में उस मुहावरे के शब्द तथा अर्थ दोनों ही दृष्टियों से समान मुहावरे की खोज की दिशा में होना चाहिए। स्रोत और लक्ष्य भाषा में कुछ थोड़े मुहावरे ऐसे मिल सकते हैं, जिनमें शब्द और अर्थ (या भाव) दोनों की समानता हो। यह समानता कई कारणों से हो सकती है।

इनमें सबसे प्रमुख कारण एक भाषा का दूसरे पर प्रभाव है। उदाहरण के लिए मान लें कि कोई अनुवादक अंग्रेजी से हिंदी या हिंदी से अंग्रेजी में अनुवाद कर रहा है। अंग्रेजी भाषा ने अनेक अन्य क्षेत्रों की भांति मुहावरों के क्षेत्र में भी हिंदी भाषा को प्रभावित किया है, अतः यह स्वाभाविक है कि दोनों में अनेक मुहावरे ऐसे हैं जो शब्द और अर्थ दोनों ही दृष्टियों से समान हैं। उदाहरणार्थ—

अंग्रेजी—To be caught red-handed.
हिंदी —रंगे हाथ पकड़ा जाना
अंग्रेजी—Ups and downs of life
हिंदी —जीवन के उतार-चढ़ाव
अंग्रेज़ी—Child's play
हिंदी —बच्चों का खेल
अंग्रेज़ी—Crocodile's tears
हिंदी —घड़ियाली आंसू, मगरमच्छ के आंसू
अंग्रेज़ी—To keep in the dark
हिंदी —अंधेरे में रखना
अंग्रेज़ी—White lie
हिंदी —सफेद झूठ

अंग्रेज़ी—White elephant
हिंदी —सफ़ेद हाथी
अंग्रेज़ी—Iron curtain
हिंदी —लौह आवरण
अंग्रेज़ी—Cold war
हिंदी —शीत युद्ध
अंग्रेज़ी—Broken-hearted
हिंदी —भग्न-हृदय
अंग्रेज़ी—Bird's eye view
हिंदी —विहंगम दृष्टि
अंग्रेज़ी—To gird oneself
हिंदी —कटि-बद्ध होना
अंग्रेज़ी—To throw mud
हिंदी —कीचड़ उछालना
अंग्रेज़ी—To get blood-thirsty
हिंदी —खून का प्यासा होना
अंग्रेज़ी—To throw dust into one's eyes
हिंदी —(किसी की) आंखों में धूल झोंकना
अंग्रेज़ी—Black market
हिंदी —काला बाज़ार

इसी प्रकार मध्यकाल में फ़ारसी भाषा का हिंदी भाषा पर अन्य क्षेत्रों की भांति मुहावरों के क्षेत्र में प्रभाव पड़ा, जिसके परिणाम-स्वरूप इन दोनों भाषाओं में अनेक मुहावरे शब्द तथा अर्थ दोनों ही दृष्टियों स समान हैं। उदाहरण के लिए—

फ़ारसी—दंदाँ तुर्श करदन
हिंदी —दाँत खट्टे करना
फ़ारसी—मार-ए-आस्तीन
हिंदी —आस्तीन का साँप
फ़ारसी—दस्त अज़ जान शुस्तन
हिंदी —जान से हाथ धोना
फ़ारसी—कमर बस्तन
हिंदी —कमर बाँधना
फ़ारसी—अंगुश्त ब दन्दाँ
हिंदी —दांतों तले उंगली दबाना
फ़ारसी—आब शुदन
हिंदी —पानी-पानी होना

कभी-कभी ऐसा भी होता है कि प्रभाव के समान स्रोत के कारण स्रोत तथा लक्ष्य भाषा में अर्थ तथा शब्द दोनों ही दृष्टियों से समान मुहावरे, मिल जाते हैं। उदाहरण के लिए समान स्रोत के कारण निम्नांकित मुहावरे, हिंदी-मराठी, हिंदी-बँगला तथा हिंदी-गुजराती आदि में समान हैं—

फ़ारसी—अंगूर तुर्श शुदन (मूल स्रोत)
हिंदी —अंगूर खट्टे होना
मराठी—द्राक्षें आंबट होणें
अंग्रेज़ी—Grapes to be sour
फ़ारसी—ज़मीन ओ आसमान यक कर्दन (मूल स्रोत)
हिंदी —ज़मीन आसमान एक करना, आकाश-पाताल एक करना—
मराठी—आकाश पाताल एक करणें
अंग्रेज़ी—To throw dust into one's eyes (मूल स्रोत)
बंगला—चोखे धूलो देओ या
हिंदी —आँखों में धूल झोंकना
अंग्रेज़ी—To build castles in the air (मूलस्रोत)
हिंदी —हवाई क़िले बनाना

वस्तुतः आधुनिक भारतीय आर्य भाषाओं में संस्कृत, फ़ारसी तथा अंग्रेज़ी से अनेक मुहावरे आए हैं, अतः उनमें शाब्दिक तथा आर्थिक समानता है।

स्रोत तथा लक्ष्य भाषा के मुहावरों में कभी-कभी शब्द और अर्थ की दृष्टि से ऐसी समानता भी मिलती है जिसके कारण के बारे में कुछ कहना कठिन है। संभव है यह आपसी प्रभाव या लेन-देन, समान स्रोत, समान अनुभव या संयोग के कारण हो। कुछ उदाहरण हैं:—

फ़ारसी—कमर बस्तन
अंग्रेज़ी—To gird up one's loins
To gird oneself
हिंदी—गुस्सा पी जाना
गुजराती—गुस्सो पी जवो
मराठी —बारा घाटांचे पाणी पिणें
हिंदी —बारह घाट का पानी पीना
हिंदी —कोल्हू का बैल
मराठी —घाण्याचा बैल
गुजराती—लोखंड ना चणा चाववा
हिंदी —लोहे के चने चबाना
बंगला —डूमरेर फूल

हिंदी —गूलर का फूल
हिंदी —नानी याद आना
पंजाबी —नान्नी याद आणा
हिंदी —ईद का चांद
बंगला —ईदेर चाँद
उड़िया —निज गोड़ेरे निजे कोराड़ि मारिव
हिंदी —अपने पांव पर आप कुल्हाड़ी मारना
मराठी —द्राविडी प्राणायाम करणें ।
हिंदी —द्राविड प्राणायाम करना ।
हिंदी —कुत्ते की मौत मरना
गुजराती —कूतराने मौते मरवुँ
मराठी —कमर टूटणों
हिंदी —कमर टूटना
हिंदी —आग में घी डालना
बंगला —आगुने घी डाला
उड़िया —आखिर कंटा हेवा
हिंदी —आंखों का काँटा होना
हिंदी —घाट-घाट का पानी पीना
गुजराती —घाट-घाट ना पाणी पीवां
मराठी —आकाश पाताल चे अंतर
हिंदी —आकाश पाताल का अंतर
हिंदी —आग लगाना
मराठी —आग लावणें
मराठी —तोंड काळे करणें
हिंदी —मुंह काला करना
हिंदी —बात का बतंगड़ करना
गुजराती —वातनुं वतेसर करवुं
गुजराती —आंख लाल-पीली करवी
हिंदी —आंख लाल-पीली करना
मराठी —राई चा पर्वत करणें
हिंदी —राई का पर्वत करना
पंजाबी —अपने पैरां ते कुहाड़ी मारना
हिंदी —अपने पांव पर आप कुल्हाड़ी मारना
हिंदी —अंगूठा दिखाना

उड़िया —बूढ़ाग्रांगुठि देखेइवा

(उड़िया में 'अंगूठा' को 'बूढ़ाग्रांगुठि' कहते हैं)

मराठी —डाल न शिजरणें

हिंदी —दाल न गलना

उड़िया —हाथ पशु पशु वाहा पशिवा

हिंदी —उगली पकड़कर पहुँचा पकड़ना

हिंदी —गागर में सागर भरना

गुजराती —गागरमां सागर समाववो

स्रोत भाषा से लक्ष्य भाषा में अनुवाद करते समय लक्ष्य भाषा में समान मुहावरों की खोज करने में जल्दी नहीं करनी चाहिए। कभी-कभी ऐसा भी होता है कि लक्ष्य भाषा में स्रोत भाषा के उक्त मुहावरे के लिए एक से अधिक मुहावरे होते हैं जिनमें एक भाव की दृष्टि से लगभग समान होता है, दूसरा भाव की दृष्टि से पूर्णतः समान होता है तथा तीसरा भाव तथा शब्द दोनों की दृष्टियों से पूर्णतः समान होता है। स्पष्ट ही तीसरा मुहावरा ही अनुवाद के लिये सर्वोत्तम है। उदाहरण के लिए मान लीजिए हिंदी से गुजराती में अनुवाद किया जा रहा है और हिंदी में 'गुस्सा पी जाना' का प्रयोग है। गुजराती में लगभग इसी अर्थ में 'क्रोध गळी जवो' का प्रयोग होता है। अनुवादक जल्दी में अनुवाद में इसका प्रयोग कर सकता है, किंतु गुजराती में इसी भाव का एक दूसरा भी मुहावरा है, 'गुस्सो पी जवो'। स्पष्ट ही भाव तथा शब्द दोनों से समान होने के कारण अधिक सटीक अनुवाद यह दूसरा ही होगा। किंतु इस बात से भी अनुवादक को सतर्क रहना चाहिए कि कहीं ऐसा तो नहीं है कि शब्दसाम्य होने पर भी अपेक्षित भाव-साम्य नहीं है।

कभी-कभी समान शब्दावली तथा भाव में कुछ समानता होने पर भी दो भाषाओं के मुहावरे अर्थ में पूर्णतः एक नहीं होते। उदाहरण के लिए—

हिंदी—चारपाई पकड़ना

मराठी—अंथरूणास खिळणें

(विस्तर से चिपकना)

दोनों काफ़ी समीप हैं किंतु हिंदी मुहावरे का प्रयोग थोड़े बीमार होने पर भी हो सकता है, जबकि मराठी का वहुत अधिक बीमार होने पर। अनुवादक को इन ऊपरी समानता वाले मुहावरों से बचना चाहिए।

इसी तरह अंग्रेज़ी To build castles in the air का हिंदी में 'मन के लड्डू खाना' अनुवाद भी हो सकता है किंतु 'हवाई किले बनाना' अधिक अच्छा होगा।

अनुवादक को स्रोत और लक्ष्य भाषा में यदि आर्थिक और शाब्दिक दोनों ही दृष्टियों से समान मुहावरे न मिलें तो अर्थ की दृष्टि से समान तथा शब्द की दृष्टि से

लगभग समान मुहावरों की खोज की जानी चाहिए अनेक भाषाओं में ऐसे मुहावरे मिल जाते है। उदाहरण के लिए :—

हिंदी —आंख में धूल झोंकना
गुजराती—आंखमां धूल नांखवी
अंग्रेज़ी —To add fuel to flame
हिंदी —आग में घी डालना
गुजराती—अंगूठो वताववो (अंगूठा बताना)
हिंदी —अंगूठा दिखाना
पंजाबी —नेड़े ना लग्गण देणा
हिंदी —पास न फटकने देना
गुजराती —डोळा काडवा
हिंदी —आँखें निकालना
हिंदी —गला भर आना
मराठी —कंठ दाटून येणें
यों मराठी में 'गळा भरून येणें (लगना)' भी होता है।
हिंदी —उंगली पकड़कर पहुंचा पकड़ना
गुजराती—आंगळी आपतां पोचों पकडवों (उंगली देते हुए पहुंचा पकड़ना)
मराठी —नाक तोंड मुरडणें (नाक-मुंह मोड़ना)
हिंदी —नाक-भौं सिकोड़ना
हिंदी —जान हथेली पर लेना
मराठी —तळ हातावर शिर घेणें
मराठी —साता समुद्रापलीकडे (सात समुद्र के परली ओर)
हिंदीं —सात समुन्दर पार
बंगला —अमवस्यार चांद
हिंदी —ईद का चांद
(मूलतः इन दोनों में अंतर है किंतु प्रयोगतः ये अर्थ की दृष्टि से समान हैं)।

अनुवादक को यदि उपर्युक्त प्रकार के शाब्दिक एवं आर्थिक समानता वाले मुहावरे मिलें तो शाब्दिक समानता को छोड़ केवल आर्थिक समानता पर ध्यान देने के अतिरिक्त उसके पास कोई और चारा नहीं रह जाता।

उदाहरण के लिए हिंदी में अर्थ-विशेष में 'छठी का दूध याद आना' मुहावरा चलता है। मान लीजिए पंजाबी में कोई व्यक्ति अनुवाद कर रहा है। पंजाबी में यह मुहावरा नहीं है। इस अर्थ में वहां 'नान्नी याद आणा' चलता है। इसका अर्थ यह हुआ कि पंजाबी में अनुवाद करने वाले को 'छठी का दूध याद आना' के स्थान पर पंजाबी में 'नान्नी याद आणा' रखना पड़ेगा। हिंदी में 'नानी याद आना' भी चलता है अतः पंजाबी से हिंदी अनुवाद में इस मुहावरे में दोनों स्तरों पर समानता

उपलब्ध है। इस प्रकार के आर्थिक समानता वाले मुहावरे काफ़ी भाषाओं में मिल जाते हैं।

हिंदी —ऊल-जलूल बातें करना
मराठी —अघळ-पघळ बोलणे
हिंदी —मूसलाधार बरसना
मराठी —आभाकास भोंक पडणें
—(आकाश में सेंध पड़ना)
अंग्रेज़ी —To rain cats and dogs
मराठी —जीभ मोकळी सोडणें
—(जीभ स्वतंत्र छोड़ना)
हिंदी —जीभ की लगाम ढीली करना
अंग्रेज़ी —Cock and bull story
हिंदी —बे सिर-पैर की बात
—ऊटपटांग बात
हिंदी —अपनी आंख से पूछना
अंग्रेज़ी —To take the evidence of one's eyes
अंग्रेज़ी —Apple of discord
हिंदी —झगड़े की जड़
हिंदी —भगीरथ प्रयत्न
अंग्रेज़ी —Herculean effort
उड़िया —आखि रे आखि मिशिबा (आंख से आंख मिलना)
हिंदी —आँखें चार होना
हिंदी —आँखें पथराना
उड़िया —आखिरु पाणि मरिबा
—(आंख से पानी मरना)
हिंदी —काला अक्षर भेंस बराबर होना
मराठी —अक्षर शत्रु असणें
अंग्रेज़ी —Cast in the same mould
हिंदी —एक ही थैली के चट्टे-बट्टे होना
हिंदी —ऊंट के मुंह में जीरा
अंग्रेज़ी —A drop in the ocean
अंग्रेज़ी —To have on the brain
हिंदी —...का भूत सवार होना
—...की धुन सवार होना
—...की सनक सवार होना

हिंदी —मन में चोर होना
अंग्रेज़ी —To have no arriere-pensee

यदि स्रोत भाषा के किसी मुहावरे का शाब्दिक और आर्थिक दोनों दृष्टियों से कोई समान मुहावरा लक्ष्य भाषा में न मिले तथा केवल आर्थिक या भाव की समानता वाले मुहावरे की खोज में भी निराश होना पड़े तो अनुवादक स्रोत भाषा के मुहावरे का लक्ष्य भाषा में शाब्दिक अनुवाद करने की बात सोच सकता है किंतु इसके साथ एक ही शर्त है। उस अनूदित मुहावरे को लक्ष्य भाषा में वही भाव या अर्थ व्यक्त करना चाहिए जो मूल मुहावरा स्रोत भाषा में कर रहा हो। यदि ऐसा नहीं है तो अनुवाद नहीं किया जा सकता। उदाहरण के लिए अंग्रेज़ी का एक मुहावरा है to put the cart before the horse. इससे युक्त किसी अंग्रेज़ी सामग्री का हिंदी अनुवाद करते समय इसे 'घोड़े के आगे गाड़ी रखना' रूप में अनूदित किया जा सकता है या मराठी 'जिभेचा पट्टा चालू करणें' को हिंदी 'जीभ का पट्टा चालू करना' या अंग्रेज़ी Not to know the a b c of को हिंदी में,··· का ······अ व स न जानना'······का क ख ग न जानना 'A fish out of water' को 'जल के बाहर मछली', To lick the boots of को किसी के 'जूते चाटना' (यद्यपि इसके लिये तलवे चाटना या सहलाना चलता है) कहा जा सकता हैं, किंतु To beat about the bush का अनुवाद 'झाड़ी के आस-पास पीटना' या To find oneself in hot water का 'अपने को गर्म पानी में पाना' या 'पानी पानी होना' या हिंदी 'नौ दो ग्यारह होना' का अंग्रेज़ी में Nine and two makc eleven या To become water water नहीं किया जा सकता। इसका आशय यह हुआ कि किसी मुहावरे का शाब्दिक अनुवाद करने के पूर्व इस बात पर अच्छी तरह विचार कर लेना चाहिए कि लक्ष्य भाषा में वह हास्यास्पद तो नहीं होगा और वही भाव दे सकेगा या नहीं जो मूल मुहावरा स्रोत भाषा में दे रहा है।

स्रोत भाषा में शब्द-अर्थ या केवल अर्थ की समानता वाले मुहावरे न मिलने पर तथा ऊपर कथित कारणों से मुहावरे के योग्य न होने पर अनुवादक के सामने दो ही रास्ते रह जाते हैं : या तो वह मुहावरे का मुहावरे में अनुवाद न कर, सीधी-साधी भाषा में उसका भावार्थ व्यक्त कर दे या फिर उक्त मुहावरे के भाव वाला कोई नया मुहावरा लक्ष्य भाषा में स्वयं गढ़ ले। इन दोनों में पहला ही अधिक सरल और निरापद होता है। उदाहरण के लिए अंग्रेजी का एक मुहावरा है जो मूलतः उपमा अलंकार पर आधारित है : dead like a dodo. 'डोडो' एक प्राचीन जंतु है जो अत्यन्त विलुप्त हो चुका है। इस मुहावरे का अर्थ है 'ऐसा मरा हुआ कि फिर जीने की संभावना न हो।' हिंदी में इसके समान कोई मुहावरेदार अभिव्यक्ति कम से कम मुझे नहीं याद आ रही है। 'डोडो की तरह मृत' हिंदी में नहीं चल सकता। ऐसी स्थिति में इसे सीधे शब्दों में 'बिल्कुल ही मर चुका है' या कुछ इसी प्रकार कहना पड़ेगा। अर्थात् मुहावरे का अर्थ मुहावरे में न कर सीधे शब्दों में करना

पड़ता है। कुछ अंग्रेज़ी और हिंदी मुहावरों के हिंदी और अंग्रेज़ी में इस प्रकार के भावानुवाद यों किए जा सकते हैं :

| | |
|---|---|
| To beat about the bush | विषय से हट कर बोलना या लिखना; मुख्य प्रश्न या बात पर न आना |
| To beat black and blue | मारते-मारते नील डाल देना |
| To go to the dogs | बर्बाद हो जाना |
| To pay back in the same coin | जैसे को तैसा देना, जैसे के साथ तैसा व्यवहार करना |

('ईंट का जवाब पत्थर से देना' इसके समान लगता है किंतु वस्तुतः इसमें जवाब 'समान' न होकर 'अधिक' है।)

| | |
|---|---|
| आंख का पानी उतर जाना | To become shameless |
| गधे को बाप बनाना | To flatter a fool for expediency |
| दांत खट्टे करना | To give a tough fight |
| गांठ का पूरा आंख का अंधा | Having a full purse and an empty head |
| पत्थर पर दूब जमना | An impossible phenomenon to occur |
| पानी न मांगना | To die instantly |
| आंखे बिछाना | To give a very cordial welcome |
| पानी से पहले पुल बांधना | To make preparation to counter an unseen crisis |
| सिर पड़े का सौदा | A matter with no alternative |

अनुवाद में सबसे अधिक मुहावरों के साथ प्रायः यही करना पड़ता है। कुछ अन्य उदाहरण हैं—

मराठी —उंबरास फूल येणें
(गूलर का फूल लाना; गूलर के पेड़ में फूल नहीं लगते)
हिंदी —असंभव कार्य करना
मराठी —पासंगास न पुरणें
(पासंग को भी न पूरा करना)
हिंदी —बहुत कम होना
('ऊंट के मुंह में ज़ीरा होना' भी कुछ संदर्भों में हो सकता है।)
मराठी —रत्नापोटीं गारगोटी होणें
(रत्न के पेट में कीचड़ की गोटी होना)
हिंदी —अच्छे के घर बुरी संतान होना
पंजाबी —रसोई दी इट्ट मोरी लाणा

हिंदी —अच्छी चीज़ बुरी जगह लगाना, उच्च कुल के या गुणी के लड़के (या लड़की) से निम्न कुल या दुर्गुणी की लड़की (या लड़के) का संबंध करना।

मराठी —अक्कावाईचा फेरा येणें

(अक्कावाई—बुराई की अधिष्ठात्री देवी)

हिंदी —बहुत बुरी स्थिति आना

अंग्रेज़ी —To have at one's finger-ends.

हिंदी —कंठस्थ होना

अंग्रेज़ी —Tooth and nail

हिंदी —जी-जान, से, पूरी शक्ति से

अंग्रेज़ी —To give a blank cheque

हिंदी —खुली छूट देना

किंतु जैसा कि ऊपर भी कहा गया है एक दूसरा रास्ता भी जहाँ संभव हो अपनाया जाना चाहिए। अनुवाद का कार्य creative कार्य है और किसी मुहावरे का अनुवाद मुहावरे में न करके सीधे-सीधे शब्दों में करना उस creativity को क्षति पहुंचाना है। मुहावरे से युक्त अभिव्यक्ति में अर्थ की गहराई की ध्वन्यात्मकता के कारण सामान्य शब्दों की अभिव्यक्ति से अधिक होती है। इसीलिए जब हम अनुवाद में किसी मुहावरे के स्थान पर सीधे सीधे शब्दों का प्रयोग करते हैं तो वह अनुवाद प्रायः मात्र कामचलाऊ होता है। मूल की पूरी अर्थवत्ता अपनी ध्वन्यात्मकता के साथ लक्ष्य भाषा में नहीं उतर पाती। इस तरह अनुवाद मूल की गहराई तक नहीं पहुँच पाता। कम से कम मेरे विचार में इसी लिए कुशल अनुवादक को पूरा अधिकार है कि वह कोई और रास्ता न होने पर स्रोत भाषा के मुहावरे के लिए लक्ष्य भाषा में यदि संभव हो तो व्यंजक, सटीक तथा लक्ष्य भाषा की प्रवृत्ति के अनुकूल मुहावरा गढ़ ले। उदाहरण के लिए मान लीजिए हिंदी में किसी सामग्री में मुहावरा आया 'जिस पत्तल में खाना उसी में छेद करना'। अनुवाद अंग्रेज़ी में किया जा रहा है। अंग्रेज़ी में इसके समान मुहावरा कम से कम मेरी जानकारी में कोई नहीं है। अनुवादक चाहे तो इसके भाव को सीधे-सीधे अंग्रेज़ी शब्दों में व्यक्त कर सकता है किंतु कदाचित् अधिक अच्छा यह होगा कि वह To blow off the roof that provides shelter या To cut off the hand that feeds जैसा कोई मुहावरा गढ़ ले। ऐसा करने से मूल अभिव्यक्ति की गहराई प्रायः अक्षत रह जाती है, उसको क्षति नहीं पहुँचती। इसी तरह 'पानी में रहकर मगर से बैर करना' को To live in Rome and strive with the Pope रूप में मुहावरा गढ़ कर व्यक्त किया जा सकता है।

मुहावरों के अनुवाद में एक यह बात विशेष रूप से उल्लेख्य है कि कभी-कभी मुहावरों को अनुवादक पहचान नहीं पाता और वैसी स्थिति में उनके शब्दों को सामान्य शब्द समझ कर वह सीधे अनुवाद कर देने की गलती कर बैठता है, जिससे

अर्थ का अनर्थ हो जाता है या कभी-कभी अपेक्षित अभिव्यक्ति नहीं हो पाती। उदाहरण के लिए एक वाक्य है 'कल को वह शैतान मुझे मार बैठे तो कौन ज़िम्मेदार होगा ?' इसमें 'कल को' वस्तुतः 'भविष्य में' के अर्थ का मुहावरा है। इस बात को न पकड़ सकने के कारण अंग्रेज़ी में अनुवाद करने वाला इसे tomorrow रूप में अनूदित करने की गलती कर सकता है। इसी तरह bold-faced 'निर्भीक मुख' या 'धृष्टमुखी' 'निर्भीक' या 'ढीठ' नहीं है, अपितु 'निर्लज्ज' या 'बेशर्म' है, blue blood 'नीले खून वाला' न होकर 'कुलीन' या 'अभिजात' है, तथा blue book 'नीली पुस्तक' न होकर 'अधिकृत रिपोर्ट' है। वस्तुतः होता यह है कि लोकोक्तियां तो प्रायः पानी में तेल की बूंद की तरह अभिव्यक्ति में अलग रहती हैं, अतः उन्हें अनुवादक सरलता से पहचान लेता है अतः अनुवाद में ग़लती होने की संभावना अपेक्षाकृत बहुत कम हो जाती है, किंतु मुहावरे अभिव्यक्ति में दूध-पानी की तरह घुले-मिले रहते हैं, अतः उन्हें पहचानना अपेक्षाकृत कठिन होता है। इसीलिए उनके अनुवाद में ग़लती होने की संभावना अधिक रहती है।

एक बात और। पूरे मुहावरे को एक भाषिक इकाई मानकर अनुवाद करना चाहिए। उदाहरण के लिए He fell in love with her 'वह प्रेम में गिरा उसके साथ' अनुवाद नहीं हो सकता। fall in love with एक भाषिक इकाई है, अतः पूरे को एक साथ लेना पड़ेगा, शब्द-शब्द नहीं, वरना वह शाब्दिक अनुवाद हो जाएगा जो निरर्थक और हास्यास्पद होगा।

# नास्तिकवादनिरासः

## अण्णङ्गराचार्यः

जगता जनाः सामान्यतः त्रेधा विभागमर्हन्ति आस्तिका नास्तिका आस्तिक-नास्तिकाश्चेति। अस्ति परलोकः, स्तः पुण्यपापकर्मणी, सन्ति देवताविशेषाः पर-दैवतसनाथाः इति ये गृह्णन्ति, ते आस्तिकाः। प्रोक्तमेतदखिलं नैवेति गृहीत्वा,

यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥

इति वादकेलिमुपवृंहयन्ति ये, ते नास्तिकाः। बहिः आस्तिकवदभिनयनिरताः अन्तर्हृदि नास्तिकभावमेव विभ्रति ये, ते तावदास्तिकनास्तिकाः। एतेषु आस्तिकाः स्वयमुज्जीवितुं प्रभवन्ति सुखेन। नास्तिकाश्च उपदेशादिभिः विनयनेन उज्जीवनं लम्भयितुं शक्या योग्याश्च भवन्ति। आस्तिकनास्तिकास्तु सर्वथाऽपि अधोगतिमनुविन्दन्तः शोचनीय-जन्मानो भवन्ति हन्त।

अज्ञस्सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्माऽपि नरं न रञ्जयति॥

इत्येतत्सुभाषितमिह स्मृतिपथं नेतुं योग्यम्।

नास्तिकमतं लोकायतमिति व्यपदेशभाजनं प्रथते। लोके आयतं यत्, तदेव हि लोकायतम्। प्रायः कृत्स्नोऽपि लोको नास्तिकैरेव भरितो यतः, तत एवैतेषां मतं लोकायतमभवत्। त्रिविक्रमभगवतः पादारविन्दमिव लोके विस्तीर्णं ह्येतत्।

सर्वतः करवीरादीन् सूते सागरमेखला।
मृतसंजीवनी यत्र मृग्यमाणदशां गता॥

इति हि प्राह श्रीमान् वेंकटनाथार्यः। मणिमाणिक्यादीनामनर्घवस्तूनाम् अतिविरलत्वेन अत्यन्तदौर्लभ्यम्, करीषपुरीषादीनां सर्वथा सौलभ्यं च ननु नियतमनुभवामः। उपादेयवस्तूनां मृग्यत्वम्, हेयवस्तूनामतिसौलभ्यं च लक्षणम्, इत्यपि सुग्रहम्। जगति विद्वांसः कति मूढाश्च कति? इत्यनुयुक्ते किमुत्तरयिष्यथ? नास्तिकमतस्य अवैदिकमतस्य वा सर्वतः प्रसृमरत्वमात्रेण आस्तिकमतस्य को निकर्षः? प्रत्युत समुत्कर्ष एवेति सुवचम्।

भगवान् नास्तीति ये वदन्ति, ते भगवानस्तीत्येवं प्रोक्तवन्तस्सिध्यन्ति। आः कथमेतत्? नास्तीत्युक्तेः अस्तीत्यर्थसिद्धिः कथमिवेति प्रक्ष्यथ। ब्रूमहे। अवधत्त। लोके यद्यद्वस्तु समुद्दिश्य नास्तीति प्रयुञ्ज्महे तत्तद्वस्तु प्रकारान्तरेण अस्तीत्येव सिध्यतीति किं न पश्यन्ति भवन्तः? घटो नास्ति, पटो नास्तीत्येवंविधाः पारंपरार्थमपि परिगृह्यन्तां व्यवहाराः। घटः पटो वा अत्र नास्ति, इदानीं नास्तीति विवक्षा वा? उत सर्वदा सर्वत्रैव नास्तीति विवक्षेति विमृशत। विमर्शे तावत् अनायास ज्ञास्यथ स्थलविशेषे समयविशेषे च तत्तद्वस्तूनामसत्तामभिदधति नास्तिवादिन इति। यत्सर्वथा-ऽप्यसत् तन्न वाचा व्यपदिश्यते। लोके आस्तिको नास्तीत्युक्ते यथा सर्वथा तस्य

नास्तिता न सिध्येत्, तथैव भगवान्नास्तीत्युक्तेऽपि भगवतः सर्वथा नास्तिता नैव सिध्येदिति गृह्यताम्। कस्मिंश्चन घटे ध्वस्ते सति, घटो नास्तीति कथयामः, तेन तस्य घटस्य कालान्तरे देशान्तरे सद्भावः वा किमभिप्रेयते ? इति चेत्; अत्रापि घटस्य प्रकारान्तरेण सद्भाव एव वेदितव्यः। कम्बुग्रीवादिमत्त्वेन स्थितस्य वस्तुनः शकलाकारप्राप्तिरेव हि ध्वंस इह। स्थूलावस्थां विसृज्य सूक्ष्मावस्थाप्राप्तिरेव हि सर्वत्र विनाशो नाम। मरणं तावत् पञ्चताशब्देन व्यवह्रियते। पृथिव्यादीनां पञ्चानां भूतानामेकीभावो जननम् पार्थक्येन विशकलितानां तेषां पञ्चतैव मरणम्। तथा च अवस्थाविशेषादवस्थान्तरापत्तिरेव सर्वत्र उत्पत्तिविनाशव्यपदेशबीजमिति सिद्धम्।

ननु नैतच्छोभनं नाम। वन्ध्यासुतो नास्ति, गगनारविन्दम् नास्ति, शशशृङ्गं नास्तीत्युक्ते किं वन्ध्यासुतादीनां स्थलविशेषे कालविशेषे च सत्ता सिध्येत् ? सर्वथाऽपि असन्ति खल्वेतानि वस्तूनि। तथा च सर्वथाऽप्यसतां वस्तूनां व्यपदेश एव न स्यादिति दुरुक्तं खलु—इति वक्ष्यसि। अवधेहि भोः ! लोके किं सुतो नास्ति ? किमहो गगनं नास्ति ? अरविन्दं नास्ति ? किं च भोः ! शशो नास्ति? शृङ्गं नास्ति ? सर्वमप्यस्त्येव। परं तु किं नास्तीति विविङ्क्तां भवान्। वन्ध्यायाः सुतस्य च संबन्धो नास्ति, अरविन्दे गगनीयत्वं नास्ति, शृङ्गे शशीयत्वं नास्ति, इत्येव कथ्येत विविञ्चानेन पुंसा। एतावता असद्वस्तु नैव सिध्येत् खलु। अरविन्दे गगनीयत्वं नास्तीत्युक्ते तस्य सारसत्वमस्ति, शृङ्गे शशीयत्वं नास्तीत्युक्ते तस्य महिषी यत्वं च अस्तीति सेत्स्यति। वस्तुनोरुभयोः परस्परसंबन्धाभावसाधनेन किं नाम फलं पश्यसि भोः ! चैत्रस्य मैत्रस्य च न कोऽपि सम्बन्धः, कुडचस्य कुसूलस्य च न कोऽपि सम्बन्धः, इत्यादीन् व्यवहारान् न खलु कोऽपि रुणद्धि, निह्नुते वा। यं कमपि पदार्थं प्रत्येकशब्दाभिलाप्यं नास्तीति व्यवहरसि यदि तस्य एकेन प्रकारेण अभावः, प्रकारान्तरेण सद्भावश्च अवश्यं सिध्येदेवेति वेदितव्यम्। तथा च भगवान् नास्तीति व्यवहारेण भगवतस्सद्भाव एव सिद्धः।

ननु, घटो नास्तीत्युक्ते, अत्र नास्ति इदानीं नास्तीति कथितं भवतीत्युच्यते। तदङ्गीकुर्मः। एवं भगवान् नास्तीत्युक्ते सोऽत्र नास्ति, अथवा इदानीं नास्तीत्युक्तं भवतीति भवता वक्तव्यमापतितम्। एवं च सति सर्वदा सर्वत्र सोऽस्तीति वादिनो भवतो भङ्ग एव खलु सिद्धः इति वक्ष्यसि। येन केनापि च प्रकारेण भगवतस्सद्भावनिह्नवस्त्वया कर्तुं न शक्य इत्येतावन्मात्रमुद्देश्यं नः। भगवति सिद्धे तु तस्य प्रामाणिकास्सर्वेऽपि प्रकाराः स्वत एव सेत्स्यन्ति। कश्चन बालकः कूपे पतित इति गृह्यताम्। हन्त ! मृत एव स इत्यवधार्य सर्वेऽपि विलपन्ति। तदानीं कश्चन धीरः सरभसं कूपे निपत्य जीवन्तमेव तमानयति। आनीतं तमधिकृत्य शिरः अस्ति वा तस्य ? उरः अस्ति वा ? मुखं विद्यते वा ? पाणिपादं वर्तते वा ? इति न खलु कोऽपि प्रक्ष्यति। तस्मिन्नष्टे शिरोमुखपाणिपादादिकं सर्वं प्रनष्टमेव। जीवति सति तस्मिन् तदीयं सर्वमपि स्वत एव निराबाधं जीवति। एवं कुदृष्टिकुहनामुखे निपतत् परं ब्रह्म प्राणिति चेत् तदीयास्सर्वेऽपि विशेषाः स्वत एव प्राणन्तीति वेदितव्यम्।

# कपिलप्रणीतं षष्टितन्त्रम्

उदयवीरशास्त्री

आधुनिकाः प्रायशः सर्वेऽपि विद्वांसः समुपलभ्यमानेषु सांख्यग्रन्थेषु सांख्यकारिका-मीश्वरकृष्णरचितां सांख्यसप्ततिरित्यपराभिधां सर्वापेक्षया प्राचीनां मन्यन्ते। केचनापरे तत्त्वसमाससूत्राणि द्वाविंशतिसंख्यापरिमितान्यपि प्राचीनानीति स्वीकुर्वते। व्यास-भाष्ये पातञ्जलयोगदर्शनव्याख्यानभूते ततोऽन्यत्र च समुद्धृताः केचन सन्दर्भाः पञ्चशिख-प्रणीतत्वेन तत्त्ववैशारद्यां व्यासभाष्यटीकायां वाचस्पतिमिश्रेण वर्णिता इति तेषामपि प्राचीनत्वं दुर्वारमिति त्रय एव सूत्रकारिकानिबद्धाः प्राचीनाः सांख्यग्रन्थाः—

१—तत्त्वसमाससूत्राणि,

२—पञ्चशिखसूत्राणि,

३—सांख्यसप्ततिश्चेति।

सांख्यदर्शनं न प्राचीनग्रन्थः—उक्तग्रन्थेभ्योऽन्योऽप्येको ग्रन्थः षडध्यायात्मकः 'सांख्यदर्शनम्' इति नाम्ना प्रसिद्धः साम्प्रतमुपलभ्यते। भारतीयविद्वज्जनपरम्परायां भारतीयवाङ्मये च सांख्यदर्शनस्यास्य कपिलप्रणीतत्वं प्राचीनत्वञ्च स्वीक्रियमाणमप्या-धुनिकाः केचन न सहन्ते। प्रवदन्ति च—सायणाचार्यकालादपरकाले केनापि विदुषा सांख्यकारिकाः समुपजीव्य सूत्राण्येतान्युपनिबद्धानि। कपिलनाम्ना च कथंचित् प्रसिद्धिं गतानि। नैतत् सांख्यदर्शनं षडध्यायात्मकं कपिलप्रणीतमित्यत्र हेतूंश्चैतान् समुपस्थाप-यन्ति—

(क)—सांख्यदर्शनेऽस्मिन् सूत्रात्मकेऽनेकानि सूत्राणि कारिकारूपाणि। सूत्र-रचनायां पद्यात्मिका रचना असंगतेव प्रतिभाति। अतः कारिकोपजीव्यत्वं सूत्राणामेषां स्पष्टं भवति।

(ख)—शङ्कर-सायण-वाचस्पतिप्रभृतिभिराचार्यैः सांख्यसिद्धान्तविवेचनावसरेषु नैतानि सूत्राणि क्वचिदपि समुद्धृतानि। अतो विपरीतं कारिकाः समुद्धृताः समवलो-क्यन्ते शङ्कराद्याचार्यकृतिषु।

(ग)—सूत्रेषु चैतेषु न्यायवैशेषिकादीनां नामोल्लेखः, तदुपज्ञपारिभाषिक-पदनिर्देशपूर्वकं तद्विवेचनम्, बौद्धार्हतादिमतप्रत्याख्यानञ्च यत्र तत्र समुपलभ्यते।

तदेतत्सर्वं परकालिकमतनामादिनिर्देशनं कपिलेनादिविदुषा कृतं कथमिव संभाव्येत? तस्मादेतानि सूत्राणि सांख्यदर्शननाम्ना प्रसिद्धानि षडध्यायात्मकानि न कपिलप्रणीतानि नापि प्राचीनानीत्येव सुवचम्।

एवं प्राप्ते पूर्वपक्षे यथार्थं किञ्चिदुपपादयामः—यद्यपीदं पूर्वोक्तमापाततः समुचितमिव मनोविनोदकरमाभाति; तथापि गभीरदृशा विषयपर्यालोचनं प्रत्यग्दिक्प्रचलितपवनप्रवाहवेगोऽभ्रदलमिव विचारझञ्झावातमिममामूलं सहसा विलोपयति, असारताञ्चास्य विचारस्य प्रत्याययति।

तथाहि—

(क)—सूत्राणां कारिकाणाञ्च मिथः सन्तुलनेन कारिकासु सर्वासु प्रतिपादितो यावान् विषयस्तावान्त्सर्वोऽपि सांख्यदर्शनस्याद्येऽध्यायत्रये परिसमाप्यते—इति स्पष्टं ज्ञायते।

यदि कारिकोपजीव्यानि सूत्राणि, तदाऽवशिष्टस्याध्यायत्रयात्मकस्य सूत्रभागस्य किमुपजीव्यं कल्प्येत? एवं यथान्तिमभागस्याध्यायत्रयस्य रचना न कमप्यन्यं ग्रन्थविशेषं निजोपजीव्यत्वेनापेक्षते, तथादिमस्यापि भागस्याध्यायत्रयात्मकस्य स्वतन्त्रैव रचना कुतो न स्वीक्रियेत?

तत्राद्येऽध्यायत्रये त्रीणि सूत्राणि यद्यपि कारिकारूपाणि साम्प्रतं मूलसूत्रपाठे मुद्रिते सूत्रव्याख्यानग्रन्थेषु च केषुचित् समुपलभ्यन्ते, परं तेषामपि सूत्राणां प्राचीनः पाठः सूत्रात्मक एवासीन्न कारिकात्मक इति सुनिश्चितैः प्रमाणैर्ज्ञायते। तानि त्रीणि सूत्राणि साम्प्रतमेवं पठ्यन्ते—

१—हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
[सूत्रम् १।१२४।। कारिका १०, पूर्वार्द्धे]

२—सात्त्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्कारात्।
[सू० २।१८।। का० २५, पूर्वार्द्धे]

३—सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च।
[सू० २।३१।। का० २९, उत्तार्द्धे]

प्रथमाङ्कनिर्दिष्टसूत्रस्य प्राचीने पाठेऽनिरुद्धवृत्तिपठिते[1] 'अव्यापि' इति पदं नासीत्। कारिकाऽभ्यासपरवशतयाऽध्ययनाध्यापनप्रसङ्गेन सूत्रेऽपि किमप्यौन्यं कल्पयता केनचित् पदस्यास्य प्रवेशोऽर्वाक्कालेऽकारि। अनिरुद्धवृत्तौ 'सक्रियम्' इति पदस्थाने 'सक्रियकम्' इति पाठः। 'अव्यापि'पदस्य व्याख्यापि तत्र नास्ति। एवमनिरुद्धकालं यावत् सूत्रेऽस्मिन् 'अव्यापि'पदप्रवेशो नासीत्; तस्मान्मूलतः सूत्रपाठस्य कारिकात्मकता नश्यति।

द्वितीयाङ्कनिर्दिष्टसूत्रस्य पाठस्त्वयमेव; परमाद्ययोः पदयोर्लिङ्गविपर्यासः कारिकायामवलोक्यते। तत्रानयोः पदयोः पुंल्लिङ्गः पाठः—'सात्त्विक एकादशकः' इत्येवंरूपः। सूत्रे पुनः क्रमागतयोरिन्द्रियकरणपदयोरनुवृत्तत्वेन तदनुरोधान्नपुंसक-

१. द्रष्टव्यं—डॉ० रिचर्डगार्बे [Richard Garbe] सम्पादितं J. W. Thomas, Baptist Mission Press, Calcutta, 1888. द्वारा प्रकाशितम् अनिरुद्धवृत्तिसंस्करणम्।

पाठः, यथाऽत्र सूत्रे निर्दिष्टः । कारिकायां तु छन्दोभङ्गभिया इन्द्रियकरणपदयोरार्याया-मसमावेशात् कारिकाकृता 'सर्गः', 'गणः' इति पुंल्लिङ्गपदे सन्निवेशिते । तदनुरोधात् आर्यायां 'सात्त्विक एकादशकः' इति पुँल्लिङ्गपाठोऽङ्गीकृतः । एतेन सुस्पष्टमार्यासु सूत्राऽनुकारिताऽनुमीयते, न तु सूत्रेषु कारिकाऽनुकारिता । तथा सति सूत्रे सर्वथापि कारिकानुरूपपाठस्वीकारे सूत्ररचनायां न कापि क्षतिः स्यात् । केवलं लिङ्गविपर्यासेन को लाभः; येन सूत्रं कारिकात्मकतामपि नाजह्यात् ।

तृतीयाङ्कनिर्दिष्टसूत्रस्यापि प्राचीनोऽच्छन्दोरूपः सूत्रात्मकः पाठः शङ्कराचार्येण 'न वायुक्रिये पृथगुपदेशात्' [२।४।६] इतिब्रह्मसूत्रव्याख्यानावसरे 'एवं हि तन्त्रान्तरीया आचक्षते—' इत्युल्लिख्य समुद्धृतः । तत्राद्ययोः पदयोः शाङ्करभाष्ये असमस्तः 'सामान्या करणवृत्तिः' इत्यात्मकः पाठः । अस्मिन् पाठे कारिकात्मकता सूत्रस्य विलीयते । कारिकाकृता तु पदयोराद्ययोः समासं विधाय सूत्रपाठः कारिकारूपतां नीतः ।

साम्प्रतं प्रकाशितेषु ब्रह्मसूत्रशाङ्करभाष्यभाषासंस्करणेषु प्राचीनपाठस्या-समस्तस्य महत्त्वमजानद्भिः प्रकाशकैरयमपि पाठः कारिकारूपत्वेन मुद्रापयित्वा भ्रष्टतां प्रापितः । प्रामाणिकेषु ब्रह्मसूत्रशाङ्करभाष्यसंस्करणेषु विभिन्नस्थानेभ्यः प्रकाशितेषु सर्वत्र प्राचीनोऽसमस्त एव पाठ उपलभ्यते ।

एवं प्रतिवादिभिः समुपस्थापितेषु त्रिषु कारिकारूपेषु सूत्रेषु केवलमेकं सूत्रं द्वितीयाङ्कनिर्दिष्टं कारिकारूपमत्रशिष्यते, यदतिरिक्तं विवेचनमपेक्षते ; यद्यपि तत्र सूत्रार्यापाठयोर्लिङ्गविपर्यासस्तथापि सूत्रस्य कारिकात्मकताऽवतिष्ठत एव ।

तत्रेदं विचारणीयम्—सूत्राणां कारिकाऽनुकारिता षडध्याय्यास्तृतीयाऽध्या-यपर्यन्तमेव वक्तुं शक्या; कारिकाप्रतिपादितस्य समस्तस्य विषयस्य सूत्राणां त्रिष्वध्या-येषु समाप्तेः । यद्यन्तिमेष्वपि त्रिष्वध्यायेषु केषाञ्चित् सूत्राणां च्छन्दोरूपता स्यात्, तदा किं तस्यापि सूत्रभागस्य च्छन्दोरूपः कश्चिदुपजीव्यग्रन्थः कल्पनीयो भवेत् ? मन्ये, एवंभूता कल्पना सर्वथाऽप्यसंगता निराधारा च भवेत् । अन्तिमेष्वप्यध्यायेषु षडध्याय्याः सन्त्येव कानिचित्सूत्राणि च्छन्दोरूपाणि ।

तथाहि:—

क—'तद्विस्मरणेऽपि भेकीवत्' [४।१६], आर्यायास्तुरीयः पादः ।

ख—सक्रियत्वाद् गतिश्रुतेः' [५।७०], अनुष्टुप्छन्दस एकतमः पादः ।

ग—'निजधर्माभिव्यक्तेर्वा वैशिष्ट्यात् तदुपलब्धेः' [५।९५], आर्याया द्वितीयो-ऽर्द्धभागः ।

घ—'ध्यानं निर्विषयं मनः' [६।२५], पद्यस्यैकतमः पादः ।

ङ—'पुरुषबहुत्वं व्यवस्थातः' [६।४५], आर्याच्छन्दसश्चतुर्थः पादः ।

एभिर्निर्देशैर्ज्ञायते, गद्यग्रन्थेष्वपि सूत्रात्मकेषु पद्यगन्धिरचना ग्रन्थकर्त्तुः सूत्र-कारस्य रचनाशैलीं तथाविधरचनायां तदिच्छां तदुत्सुकतां वा केवलमभिव्यक्ती-करोति । नैतावता प्रस्तुतग्रन्थस्य तन्मूलभूतपद्यात्मकग्रन्थान्वेषणे प्रवृत्तिरपेक्षिता भवति। ग्रन्थान्तरेष्वपि सूत्रात्मकेष्वेवंविधा रचना दृश्यते ।

पाणिनीयाऽष्टकेऽपि—

क—'पक्षिमत्स्यमृगान् हन्ति, परिपन्थञ्च तिष्ठति' [४।४।३५-३६], (पद्यार्द्धभागः)।

ख—'अन्तश्च तवै युगपत, क्षयो निवासे, जयः करणम्' [६।१।२००-२०२], (आर्याऽर्द्धभागः)।

ग—'पृषोदरादीनि यथोपदिष्टम्' [६।३।१०९), (उपेन्द्रवज्राचरणः)।

सा एषा रचना च्छन्दोरूपैव। नैतावता पाणिनीयाष्टकस्य च्छन्दोग्रन्थोपजीव्यत्वं शक्यं कल्पयितुम्। सांख्यषडध्याय्या अपि समानैव स्थितिः। तस्मादस्याः प्राचीनत्वे कपिलप्रणीतत्वे च येयं बाधा प्रथमाङ्किता सूत्राणां कारिकानुकारितारूपा समुपस्थापिता, सा सर्वथापि निराधारा असंगता चेति बोध्यम्।

२—शङ्कर-वाचस्पति-सायणप्रभृतिभिराचार्यैर्नोद्धृतानीमानि सूत्राणि स्वग्रन्थेष्विति द्वितीयसंख्याङ्किता बाधापि नाधारमालम्बते।

शङ्कराचार्येण भगवता ब्रह्मसूत्रभाष्ये [२।४।९] सांख्यसूत्रोद्धारः कृत इति गतपङ्क्तिषु स्पष्टीकृतम्। अन्यैरपि न केवलं सायणवाचस्पतिप्रभृतिभिराचार्यैः, अपि तु साङ्ख्यकारिकाकारादीश्वरकृष्णात् प्राचीनैरप्याचार्यैर्वात्स्यायनपतञ्जलिदेवलप्रभृतिभिः स्वग्रन्थेष्वनेकानि सांख्यसूत्राणि समुद्धृतानि समुपलभ्यन्ते। 'देवलप्रभृतिभिर्धर्मसूत्रकारैः स्वग्रन्थेष्वाश्रितः' इत्युपपादयन् शङ्कराचार्योऽपि ब्रह्मसूत्र [१।४।२८] व्याख्यानावसरेऽमुमर्थं स्वीचकार।

तत्र तत्रोद्धृतसूत्राणि तु लेखकलेवरवृद्धिभिया नात्र संदर्शितानि। जिज्ञासुभिः 'सांख्यदर्शन का इतिहास' इत्यभिधायामस्मद्रचनायां तानि शक्यन्तेऽवलोकयितुम्, तत्र पञ्चविंशतितोऽप्यधिकानि सूत्राणि वाङ्मयेऽनेकत्र समुद्धरणरूपेण विकीर्णानि संकलय्य प्रदर्शितानि सन्ति। उक्तग्रन्थस्यात्र विषये विशेषतस्तुरीयोऽध्यायोऽवलोकनीयः।

३—तृतीयबाधापनोदनाय विशेषः प्रयत्नोऽपेक्ष्यते, परं दैवोपहता सापि बाधा अनायासं दूरापेतेव भाति। तथाहि—सांख्यषडध्याय्या यस्मिन् प्रकरणे बौद्धार्हतादिमतप्रत्याख्यानं न्यायवैशेषिकादिपदविशेषोपन्यासो वा दृश्यते, तत्र पञ्चत्रिंशत्संख्यापरिमितानि सूत्राणि केनचिद् विदुषा शुङ्गराज्यकाले प्राचीनसूत्रपाठान्तराले प्रक्षिप्तानीति तत्प्रकरणस्थितसूत्रपदैरेव स्पष्टं ज्ञायते। तत्र हि एकोनविंशतितमं सूत्रम्—

'न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते।'

अस्यायमर्थः—नित्यशुद्धादिस्वभावस्य चेतनस्यात्मनः, तद्योगः बन्धयोगः, तद्योगात् प्रकृतियोगात्, ऋते विना न भवति। नित्यशुद्धादिस्वभावस्यात्मनो बन्धयोगः प्रकृतियोगाद् भवतीति भावः। यदा प्रकृत्या सह युक्तो भवति पुरुषस्तदैव बद्ध इत्युच्यते।

प्रतिपादितेऽस्मिन्नर्थे निसर्गत एष प्रश्नः समुदेति—नित्यशुद्धादिस्वभावस्यात्मनः प्रकृतियोगोऽपि कस्मात् कारणाद् भवति? अस्य प्रश्नस्योत्तरम्—एकोन-

विंशतितमसूत्रानन्तरमेव पठनीयम् । परं समुपलभ्यमाने सूत्रपाठे तदुत्तरं चतुष्पञ्चाशत्तमे सूत्रे दृश्यते । अत्र प्रथमसूत्रस्यान्तिमो भागः 'तद्योगस्तद्योगादृते' इति वर्त्तते । प्रश्नस्योत्तरं वदतः सूत्रस्य साम्प्रतं चतुष्पञ्चाशत्तमसंख्यायां पठितस्य खल्वयं पाठः— 'तद्योगोऽप्यविवेकात्' । अनयोः सूत्रयोः पदानुक्रमः परस्परमव्यवहितानन्तर्यकृते नान्यत् प्रमाणमपेक्षते । पदकृतमर्थकृतं च सामञ्जस्यमपेक्ष्य प्रथमसूत्रस्याव्यवहितमनन्तरं द्वितीयसूत्रं पठनीयम् । मूलतः किलानयोः सूत्रयोरेष एवानुक्रम आसीत् । बौद्धार्हताद्यभिमतात्मतन्त्रधकारणानि प्रत्याचक्षाणः कश्चित् पञ्चत्रिंशत्संख्याकानि सूत्राण्येतान्यत्र प्रचिक्षेप ।

एषां सूत्राणां प्रक्षेपकालः—अष्टाविंशतितमे सूत्रे स्रुघ्नपाटलिपुत्रनगरनामनिर्देशात् अनुमातुं शक्यते । अयं नामनिर्देशस्तदानीं नगरयोरनयोरुन्नतावस्थां द्योतयति । एवंभूता नगरयोरनयोरवस्थितिः शुङ्गकाले तत्समीपकाले वा संभाव्यत इति पुरावृत्तविदः । अतः स एव कालः सूत्रप्रक्षेपस्येत्यनुमीयते ।

एवं पूर्वोक्तास्तिस्रोऽपि बाधाः परिहृत्य सांख्यषडध्यायीसूत्राणां सांख्यकारिकातोऽपि प्राचीनत्वं सुस्फुटं भवति ।

वर्त्तमानसांख्यषडध्याय्या एव 'षष्टितन्त्रम्' इत्यपरमभिधानम् । षष्टितन्त्रं किंरूपं किमाकारकं किमानुपूर्वीकं वा विषयदृष्ट्या आसीदिति निर्धारणाय सप्तत्याः सर्वान्तिमा आर्या एव प्रमाणम् । तत्र—षष्टितन्त्रस्य कियान् भागः सप्तत्यां संक्षिप्तः कियान् वा परित्यक्तः, इति स्पष्टमुक्तं वर्त्तते । सा चेयमार्या—

> "सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
> आख्यायिकाविरहिताः परवादविवर्जिताश्चेति ॥"

एतदार्यापरिबोधिता षष्टितन्त्रस्यैवंभूता विषयानुपूर्वी षडध्यायात्मके सांख्यदर्शने समुपलभ्यते । आतृतीयाध्यायं ये शास्त्रीया अर्थाः समुपपादिताः, त एवार्थाः सप्तत्यां संक्षिप्ताः । षडध्याय्याश्चतुर्थेऽध्याये काश्चनाख्यायिकाः शास्त्रीयार्थविवरणसहायभूताः सन्निवेशिताः सूत्रकारेण । सप्तत्यां तासां परिवर्जनम् । परवादाश्चापि सप्तत्यां विवर्जिताः समुपेक्षिताः । ते च चतुर्थाध्यायानन्तरं पञ्चमषष्ठाध्याययोर्वर्त्तन्ते । एवं षष्टितन्त्रस्य यदानुपूर्वीकं वर्णनमस्यामार्यायां समुपापादयदीश्वरकृष्णः तत्तथैव षडध्यायात्मकं षडध्याय्यां साकल्येन वर्तते इति निश्चितम् । तदेवं सांख्यदर्शनमेव 'षष्टितन्त्रम्' इत्यपराभिधानं सांख्यसप्तत्याश्चोपजीव्यभूतमिति निर्बाधं शक्यते वक्तुम् । तदेव कपिलप्रणीतमिति चतसृभिरार्याभिरुपसंहारभूताभिरीश्वरकृष्णेनैव स्पष्टीकृतमिति नाधिकमुच्यते ॥

# निर्विकल्पकज्ञानविचारः

एन्. एस्. रामानुजताताचार्यः

बौद्धाः सर्वमपि प्रत्यक्षं निर्विकल्पकमेवेति ब्रुवते । जैनाः सर्वं प्रत्यक्षं सविकल्पकमेवेत्यातिष्ठन्ते । 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति वदन् भर्तृहरिरपि सर्वं प्रत्यक्षं शब्दावच्छिन्नार्थविषयकत्वात् सविकल्पकमेव इत्यभिप्रैति । निर्विकल्पकं सविकल्पकं चेति प्रत्यक्षद्वयं नैयायिकादयोऽङ्गीकुर्वन्ति । एतत्तत्त्वमधुना विवेचयामः ।

न्यायसूत्रे न क्वापि निर्विकल्पकसविकल्पकशब्दाभ्यां प्रत्यक्षविभागः प्रदर्शितः । 'इन्द्रियार्थसंनिकर्षोत्पन्नम्' इति प्रत्यक्षलक्षणसूत्रस्थाभ्यां 'अव्यपदेश्यम्' 'व्यवसायात्मकम्' इति पदाभ्यां निर्विकल्पकसविकल्पके विवक्षिते इति तात्पर्यटीकाकारा निरूपयन्ति । परं तु भाष्ये वार्तिके वा नैवंविधं निरूपणमुपलभ्यते ।

वस्तुतस्तु 'पृथिव्यादिगुणास्तदर्थाः' (न्या० सू० १-१-१४) इति न्यायसूत्रे पृथिव्यादिनिष्ठानां गन्धादिगुणानामिन्द्रियजन्यप्रत्यक्षविषयत्वमुक्तम् । अनेन च प्रत्यक्षविषयस्य घटादेः गुणनिष्ठप्रकारतानिरूपितविशेष्यत्वं सूचितम् । तथा च गुणविशिष्टद्रव्यविषयकप्रत्यक्षं सविकल्पकात्मकं सूत्रसंमतमेव । तदुक्तं न्यायभूषणे—

'सविकल्पकमपि प्रत्यक्षं 'पृथिव्यादिगुणास्तदर्थाः' इत्यनेन लेशतः सूचितम् ।'[१] इति । अव्यपदेश्यशब्देन च निर्विकल्पकं सूचितम् । परं तु निर्विकल्पकसविकल्पकशब्दौ सूत्रे भाष्ये च न क्वापि दृश्येते ।

### टीकाकारमतम्[२]

सूत्रस्थेन अव्यपदेश्यशब्देन निर्विकल्पकं ज्ञानमुच्यते । तत्र व्यपदेशो विशेषणमुपलक्षणं वा नामजात्यादि, तत्कर्म व्यपदेश्यम्, विशेष्यमिति यावत् । अविद्यमानं व्यपदेश्यं यस्मिंस्तत् अव्यपदेश्यम् । यत् प्रत्यक्षं जात्यादिस्वरूपमात्रं विषयीकरोति, न तु जातिव्यक्त्यादीनां मिथो विशेषणविशेष्यभावं तत् निर्विकल्पकपदवाच्यं प्रत्यक्षमव्यपदेश्यपदेन व्यपदिश्यते । व्यवसायात्मकपदेन च सविकल्पकं प्रत्यक्षमुच्यत इति टीकाकाराः । यद्यप्येवंव्याख्यानं भाष्यवार्तिकयोर्न विद्यते, तथापि स्वगुरुणा त्रिलोचनाचार्येण उन्नीतं मार्गमवलम्ब्य ईदृशं व्याख्यानं कृतमिति ते प्रोचुः ।

१. न्या० सा० पृ० ९९-१०० ।
२. ता० टी० पृ० २२० ।

न्यायमञ्जर्यां[1] न्यायसारे[2] च निर्विकल्पकं सविकल्पकं चेति प्रत्यक्षद्वयं यद्यपि सयुक्तिकं प्रसाधितम्, तथापि सूत्रात्ताहशविभागस्य लाभप्रकारस्तत्र न प्रदर्शितः। न्यायभूषणे तु अव्यपदेश्यपदेन निर्विकल्पकस्य व्यवसायात्मकपदेन सविकल्पकस्य च ग्रहणमिति सयुक्तिकं प्रत्यपादि।

प्रशस्तपादभाष्ये—

'द्रव्ये तावद्द्विविधे महत्यनेकद्रव्यवत्त्वोद्भूतरूपप्रकाशचतुष्टयसंनिकर्षाद्धर्मादिसामग्र्ये च स्वरूपालोचनमात्रम्'[3] इति ग्रन्थेन निर्विकल्पकप्रत्यक्षं प्रदर्शितम्। स्वरूपालोचनमात्रमित्यस्य स्वरूपमात्रस्य ग्रहणमित्यर्थः। मात्रशब्देन जात्यादिसंबन्धविषयकत्वव्यवच्छेदः। ततः—

'सामान्यविशेषद्रव्यगुणकर्मविशेषणापेक्षात् आत्ममनस्संनिकर्षात् प्रत्यक्षमुत्पद्यते सद् द्रव्यं पृथिवी विषाणी शुक्लो गौर्गच्छतीति'[4] इति ग्रन्थेन सविकल्पकप्रत्यक्षं सोदाहरणमुपदर्शितम्। कुमारिलभट्टा अपि—

'अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥[5]

इति श्लोकेन निर्विकल्पकम्,

'ततः परं वस्तु धर्मैर्जात्यादिभिर्यया।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता॥'

इति श्लोकेन सविकल्पकं च प्रत्यक्षमङ्गीकुर्वन्ति। प्रभाकरमतानुसारिणः शालिकनाथमिश्रा अपि प्रकरणपञ्चिकायाम्—

'सविकल्पाविकल्पा च द्विविधा बुद्धिरिष्यते।
आद्या विशिष्टविषया स्वरूपविषयेतरा॥'[6]

इति ग्रन्थेन प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदेन द्वैविध्यं प्रादर्शयन्।

अद्वैतपरिभाषायामपि[7] अयं विभागः प्रतिपादितः। परं तु विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वे मानाभावात् इन्द्रियजन्यं प्रत्यक्षं सर्वमपि सविकल्पकमेव। तत्त्वमसि इत्याद्यखण्डार्थपरवाक्यजन्यं प्रत्यक्षमेव निर्विकल्पकमिति परिभाषाकारा आशेरते।

१. न्या० म० पृ० ८६।
२. न्या० सा० पृ० १७३।
३. प्र० भा० पृ० १८६।
४. प्र० पृ० १८६।
५. श्लो० वा पृ० १४७, १५०।
६. प्र० पञ्चिका० पृ० १६०।
७. वे० प० पृ० ७६।

विशिष्टाद्वैतवेदान्तिनस्तु—सर्वमपि प्रत्यक्षं सप्रकारकमेव । अथापि निर्विकल्पक-सविकल्पकभेदोऽस्त्येव । उभयोरपि जातिविशिष्टविषयकत्वेऽपि जातेरनुवृत्ताकारता सविकल्पके प्रतीयते, न तु निर्विकल्पक इत्यनयोर्भेद इति निरूपयन्ति । विवेचयिष्यते चैतत्तत्त्वमुपरिष्टात् ।

## निर्विकल्पकलक्षणम्

एवं स्थिते अधुना निर्विकल्पकलक्षणं तत्तद्ग्रन्थोक्तं परामृशामः । नामजाति-गुणद्रव्यक्रियाविशिष्टविषयकं प्रत्यक्षं सविकल्पकम् । जात्यादीनां व्यक्त्या सह विशेषण-विशेष्यभावावगाहि प्रत्यक्षं सविकल्पकमिति यावत् । यत्र तु ज्ञाने जात्यादिकं तदाधार-व्यक्तिश्च भासते, परं तु तयोर्विशेषणविशेष्यभावो न भासते, तन्निर्विकल्पकं प्रत्यक्ष-मिति तात्पर्यटीकातोऽवगम्यते ।[1]

न्यायसारे—

'तत्र संज्ञादिसंबन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकम्, यथा देवदत्तोऽयं दण्डीत्यादि'[2] इति ग्रन्थेन नामद्रव्यादिवैशिष्ट्यविषयकं प्रत्यक्षं सविकल्पकमिति सोदाहरणं सविकल्पकलक्षणमभिधाय, 'वस्तुमात्रावभासकं निर्विकल्पकम्, यथा प्रथमाक्षसंनिपातजं ज्ञानम्, युक्तावस्थायां योगिज्ञानं च' इति ग्रन्थेन निर्विकल्पकज्ञानं लक्षितम् ।

तत्त्वसंग्रहे धर्मकीर्तिः—

'प्रत्यक्षं कल्पनापोढमभ्रान्तमभिलापिनी ।
प्रतीतिः कल्पनाक्लृप्तिहेतुत्वाद्यात्मिका न तु ।।'[3]

इति निर्विकल्पकलक्षणमाह । कल्पनाया अपोढं कल्पनापोढम् । कल्पना नामजात्यादि-योजना, नामादिसंसर्ग इत्यर्थः । तत्र देवदत्त इत्यादिर्नामयोजना, गौरित्यादिर्जाति-योजना, गच्छतीत्यादिः क्रियायोजना, शुक्ल इत्यादिर्गुणयोजना, दण्डीत्यादिर्द्रव्य-योजना इत्येषा पञ्चविधा कल्पना, एतच्छून्यं ज्ञानं निर्विकल्पकमिति तदर्थः ।

तत्त्वचिन्तामणौ तु—

'नामजात्यादियोजनारहितं वैशिष्ट्यानवगाहि निष्प्रकारकं निर्विकल्पकम् ।'[4] इति निर्विकल्पकलक्षणं प्रादर्शि । वैशिष्ट्यानवगाहीत्यस्यैव विवरणं निष्प्रकारकमिति । निर्विकल्पके प्रकारताख्यविषयताशून्यत्वमिव विशेष्यताख्यविषयताशून्यत्वमपि वर्तते । यथा च निर्विशेष्यकं ज्ञानं निर्विकल्पकमित्यपि शक्यते वक्तुम् । तथा अनुक्त्वा निष्प्रकारकमिति वदतां मणिकाराणामयमाशयः—यथा सविकल्पकस्य विशिष्टज्ञान-त्वात् ततः पूर्वं विशेषणज्ञानं कल्प्यते, तथा निर्विकल्पकस्य हेतुतया ज्ञानान्तरं नापे-क्षितमिति ।

१. ता० टी० पृ० २२० ।
२. न्या० सा० पृ० १७३ ।
३. त० सं० का० १२१४ ।
४. त० चि० प्र० ।

तर्कसङ्ग्रहेऽपि—'निष्प्रकारकं ज्ञानं निर्विकल्पकम्'[1] इति लक्षणं प्रोक्तम्। प्रकारताशून्यं ज्ञानमिति तदर्थः। व्याख्यातृभिः प्रकारताशून्यं संसर्गताशून्यं विशेष्यताशून्यं च ज्ञानं निर्विकल्पकमित्युपपादितम्।

अस्य च निर्विकल्पकज्ञानस्य आकारो नास्ति। यद्यपि 'इदं किंचित्' इति ज्ञानं निर्विकल्पकमिति क्वचित्तर्कसंग्रहे पाठो दृश्यते, तथापि नामजात्याद्यविषयकं ज्ञानं इत्यत्रैव तस्य ग्रन्थस्य तात्पर्यं वक्तव्यम्, न तु स ग्रन्थो निर्विकल्पकाकारप्रदर्शनपरः। तथा सति किंचित्त्वप्रकारकत्वेन तस्यापि सविकल्पकत्वापत्तेः।

## निर्विकल्पके प्रमाणम्।

एतादृशनिर्विकल्पकसद्भावे किं प्रमाणमिति जिज्ञासायां प्राचीनग्रन्थेषु स्पष्टतया समाधानं न लभ्यते। मणिकारा एवात्र विषये स्वकीयां दृष्टिं प्राक्षिपन्। अतो गहने मणिग्रन्थे उक्ता युक्तयोऽत्र संगृह्यन्ते। तदुपरि शास्त्रान्तरकारैः प्रदर्शितानां दूषणानामपि परामर्शं करिष्यामः। तत्र यद्यपि—

(१) वैशिष्ट्यानवगाहिनि निर्विकल्पकात्मके ज्ञाने न प्रत्यक्षं प्रमाणम्। निर्विकल्पकज्ञानस्यातीन्द्रियत्वाङ्गीकारात्।

(२) नापि 'अयं गौः' इत्यादिशब्दप्रयोगात्मको व्यवहारो निर्विकल्पके प्रमाणम्। शब्दप्रयोगं प्रति सविकल्पकज्ञानस्यैव कारणत्वेन व्यवहारः सविकल्पकसद्भावे एव प्रमाणं भवेन्न निर्विकल्पकसत्त्व इति।

(३) 'इदं पूर्वं मया संमुग्धतया ज्ञातम्, अधुना तु सम्यग्जानामि' इत्याकारकोऽनुभवस्तत्र प्रमाणम्। पूर्वम् अल्पविशेषणवत्तया ज्ञातम्, अधुना बहुविशेषणवत्तया जानामीत्येवं तदर्थात् निष्प्रकारकज्ञानस्य तेनानुभवेनासिद्धेः।

(४) नापि 'अयं गौः' इति ज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् 'दण्डी पुरुषः' इति ज्ञानवदित्यनुमानेन गोत्वमात्रविषयकं निर्विकल्पकज्ञानं सिध्यतीति शङ्कनीयम्। दृष्टान्तस्य साध्यविकलत्वात्। दण्डपुरुषयोरुभयोरपि युगपदिन्द्रियसंनिकर्षे सति दण्डज्ञानं विनैव युगपदेव दण्डीति ज्ञानस्यानुभवात्। तथापि—

एतज्जन्मनि प्राथमिकं गौरिति प्रत्यक्षं जन्यविशेषणज्ञानजन्यम् जन्यविशिष्टज्ञानत्वात् अनुमितिवत् इत्यनुमानं तत्र प्रमाणम्। यथा 'पर्वतो वह्निमान्' इत्यनुमितिः वह्निविशिष्टपर्वतविषयिणी वह्निरूपविशेषणज्ञानात्मकमाध्यप्रसिद्धिजन्या तथा प्राथमिकं गौरिति विशिष्टप्रत्यक्षमपि गोत्वात्मकविशेषणज्ञानादेवोदयमासादयतीति वक्तव्यम्। तदेव गोत्वज्ञानं वैशिष्ट्याविषयकं निर्विकल्पकमित्यर्थात्सिध्यति।

न च तत्र प्राथमिकविशिष्टप्रत्यक्षं प्रति गोत्वरूपविशेषणस्मरणमेव हेतुः, तथा च न निर्विकल्पकप्रत्यक्षं सिध्यतीति वाच्यम्। एतज्जन्मनि पूर्वं गोत्वस्याननुभवेन तत्स्मरणासंभवात्।

१. तर्कसं० पृ० ४२

न च आद्यस्तन्यपानादौ अदृष्टेनोद्वोधितः जन्मान्तरीयानुभवजनितः संस्कारः यथा इष्टसाधनतां स्मारयति, तथा अदृष्टविशेषोद्वोधितः जन्मान्तरीयसंस्कारः गोत्वस्मृतिमुत्पादयनि, तद्बलाच्च आद्यं विशिष्टप्रत्यक्षं भवितुमर्हतीति न निर्विकल्पकसिद्धिरिति वाच्यम् । आद्यस्तन्यपानादौ गत्यन्तराभावेन जन्मान्तरीयसंस्कारोद्वोधकल्पनेऽपि प्रकृते इन्द्रियसंनिकृष्टगोत्वविषयकनिर्विकल्पकेनापि स्वीकृतेन विशिष्टज्ञानस्योपपत्त्या जन्मान्तरीयानुभवजनितसंस्कारोद्वोधकादृष्टस्य कल्पनाया अन्याय्यत्वात् । अन्यथा जन्मान्तरानुभूतानाम् एतज्जन्मनि इन्द्रियसंनिकृष्टानामर्थानां स्मरणमेव भवेन्न त्वनुभवः ।

न च गोत्वरूपविशेषणानुभवः सविकल्पक एव 'अयं गौः' इति विशिष्टप्रत्यक्षं जनयतु, तथा च गतं निर्विकल्पकेनेति वाच्यम् । तथात्वे तस्यापि विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वं, तस्यापि तथेत्यनवस्थाप्रसङ्गात् । तथा च गोत्वविषयकं निर्विकल्पकमर्थतः सिध्यति ।

न च उक्तानुमाने विशिष्टज्ञानत्वमस्तु विशेषणज्ञानजन्यत्वं मास्तु इत्यप्रयोजकशङ्कायां तद्वारकतर्काभावात् नोक्तानुमानं साधकमिति वाच्यम् । अनुमित्यादिकं प्रति साध्यप्रसिद्ध्याद्यात्मकविशेषणज्ञानस्य कारणत्वात् 'यद्विशेषयोः कार्यकारणभावः स तत्सामान्ययोः' इति न्यायेन विशिष्टज्ञानत्वावच्छिन्नं प्रति विशेषणज्ञानत्वावच्छिन्नं कारणमिति कार्यकारणभावस्य स्वीकर्तव्यतया तद्भङ्गप्रसङ्गलक्षणस्यानुकूलतर्कस्योक्तानुमाने सद्भावादिति मणिग्रन्थे निर्विकल्पकसाधनप्रकारस्य सारांशः ।

अथात्र विषये मतान्तराणि पर्यालोचयामः ।

## भाट्टमतम्

श्लोकवार्तिके—

'अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥'[१]

इत्यभिहितम् । अनेन च बालमूकादीनां केनचिद्वस्तुना इन्द्रियसंनिकर्षानन्तरम् 'इदमित्थम्' इति नामजात्यादिप्रकारानवगाहि संमुग्धाकारं किंचिज्ज्ञानं जायते तदेव निर्विकल्पकमिति भण्यते । अत्र 'शुद्धवस्तुजम्' इत्यस्य जात्यादिवैशिष्ट्यानापन्नवस्तुमात्रविषयकमित्यर्थः । तदुक्तं शास्त्रदीपिकायामपि—

'प्रतीमो हि वयमक्षसंनिपातानन्तरमविविक्तसामान्यविशेषविभागं संमुग्धवस्तुमात्रगोचरमालोचनज्ञानम्'[२] इति । एतादृशनिर्विकल्पकसद्भावे प्रमाणं विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वमिति मणिकारोक्तमेव मीमांसकानामपि संमतम् । अत एव शास्त्रदीपिकायां[३] पूर्वनिर्दशितवाक्यानन्तरम्—

१. श्लो० वा० पृ० १४७ ।
२. शा० दी० पृ० ४० ।
३. शा० दी० पृ० ४० ।

'तदभावे तु विकल्प एव न जायेत। विकल्पयता हि पूर्वानुभूतं जातिविशेषं संज्ञाविशेषं चानुस्मृत्य तेन पुरः स्थितं वस्तु विकल्पयितव्यम्। न चार्थमदृष्टवतस्तत्स्मरणमाकस्मिकमेवोत्पद्यते। तस्मादस्ति निर्विकल्पकमपि ज्ञानम्' इति निरूपणं संघटते। यद्यपि—

'न विशेषो न सामान्यं तदानीमनुभूयते।
तयोराधारभूता तु व्यक्तिरेवावगम्यते॥'[1]

इति श्लोकवार्तिकेन निर्विकल्पके जात्यादिकं न भासते, अपि तु जात्याद्याधारभूतव्यक्तिरेव भासत इति प्रतीयते। तथापि पूर्वोदाहृतशास्त्रदीपिकानुरोधात् जात्यादिकं विशेषणतया न भासते, व्यक्तिश्च जात्यादिविशेष्यतया न भासते, अपि तु जात्यादिकं व्यक्तिश्च स्वरूपतः विशेष्यविशेषणभावमन्तरा भासेते इत्येवंरूपार्थे श्लोकवार्तिकस्य तात्पर्यं द्रष्टव्यम्।

## अद्वैतिसिद्धान्तः

परिभाषाकारास्तु—प्रत्यक्षं निर्विकल्पकसविकल्पकभेदेन द्वेधा विभज्य, वैशिष्ट्यावगाहि ज्ञानं सविकल्पकम्, संसर्गानवगाहि ज्ञानं निर्विकल्पकम् इति लक्षयित्वा 'सोऽयं देवदत्तः' 'तत्त्वमसि' इत्यादिवाक्यजन्यं ज्ञानं निर्विकल्पकस्योदाहरणतया प्रदर्शयांबभूवुः।[2] अत्राखण्डार्थवाक्यजन्यज्ञानस्य उदाहरणतया प्रदर्शनात् नैयायिकोदाहृतं घटत्वादिनिर्विकल्पकं स्वानभ्युपगतमिति सूचयन्ति। विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वे हि घटत्वादिनिर्विकल्पकं सिध्येत्। वस्तुतस्तादृशकार्यकारणभावोऽप्रामाणिक इति परिभाषाकृतामाशयः। अत एव तद्व्याख्यायां शिखामणौ—

'सविकल्पकं वैशिष्ट्यावगाहीति। न तु विशेषणज्ञानजन्यम्, तज्जन्यत्वस्य प्रमाणाभावेन अनभ्युपगमादित्यर्थः'[3] इत्युक्तम्। तथा शाङ्करभाष्यवार्तिके—

'घ्राणचक्षुर्भ्यां संयुक्ते सुरभिचन्दने सुरभि चन्दनमिति चाक्षुषविज्ञाने सौरभांशे ज्ञानप्रत्यासत्तिर्नाङ्गीक्रियते, उभयेन्द्रियसंनिकर्षाभ्यां विशिष्टैकज्ञानसंभवात्।'[4]

इति प्रत्यपादि। अत्र भिन्नसामग्रीवेद्ययोरपि सौरभचन्दनयोर्विशिष्टैकज्ञानं संभवतीति वदन्तो वार्तिककारा एकसामग्रीवेद्ययोः घटघटत्वयोरेकविशिष्टज्ञानसंभवं कैमुत्यन्यायेन सूचयन्ति। तथा च विशेषणज्ञानस्य हेतुत्वे मानाभावात् लौकिकप्रत्यक्षात्मकं सर्वमपि ज्ञानं विशिष्टविषयकमेवेति सविकल्पकमेव। केवलमखण्डार्थवाक्यजन्यं प्रत्यक्षमेव निर्विकल्पकम् इत्यद्वैतिनामाशयः। अत एत शाङ्करभाष्यवार्तिकेऽन्यत्र—

१. श्लो० वा० पृ० १४८।
२. वे० प० पृ० ७७।
३. वे० प० व्या० शि० पृ० ७७।
४. शांकर० वार्तिक० पृ० १०७।

'विशेषणज्ञानस्य विशिष्टव्यवहाराहेतुत्वात्, उभयभानसामग्रीत एव तत्सिद्धेः इत्युपपादितम् ।

## रामानुजमतम्

रामानुजमतानुयायिनस्तु सर्वमपि ज्ञानं सप्रकारकमेवेत्यातिष्ठन्ते । इह जन्मनि प्रथमोत्पन्ने 'अयं गौः' इति विशिष्टज्ञाने गोत्वस्यानेकवस्तुवृत्तित्वात्मकमनुवृत्ताकारत्वं न भासते । द्वितीयादिज्ञाने तु 'अयमपि गौः' इत्येवं गोत्वस्यानुवृत्ताकारत्वं प्रतीयते । तत्र च प्रथमोत्पन्नज्ञानजन्यः संस्कारः सहकारि कारणम् । तथा च इह जन्मनि प्रथमोत्पन्नं ज्ञानं निर्विकल्पकम्, द्वितीयादिज्ञानं सविकल्पकम् । निर्विकल्पकशब्दस्य प्रकारसामान्य-शून्यमिति नार्थः । तत्र विकल्पशब्दः अनुवृत्ताकारत्वविशिष्टप्रकारपरः । तथा च निर्वि-कल्पकमित्यस्य अनुवृत्ताकारत्वविशिष्टप्रकारशून्यमित्यर्थः । यथा अल्पधनेऽपि पुरुषे घनाभाववद्वाची दरिद्रशब्दः प्रयुज्यमानः विवक्षितबहुघनाभावे पर्यवस्यति तद्वत् । तथा च संस्कारासहकृतेन्द्रियजन्यं ज्ञानं निर्विकल्पकम्, संस्कारसहकृतेन्द्रियजन्यं ज्ञानं सविकल्पकम् इति निर्विकल्पकसविकल्पकयोः लक्षणे पर्यवस्यतः । तदुक्तं तत्त्वमुक्ता-कलापे श्रीमद्वेदान्तदेशिकैः[1]—

'तस्मात्संस्कारशून्येन्द्रियजनितमतिर्निर्विकल्पेति वाच्या' इति । 'कथं तस्य निर्विकल्पकशब्दवाच्यत्वम् ? विवक्षितविकल्पाभावमात्रात्, अल्पधने दरिद्रव्यवहारवत् इति च तत्त्वमुक्ताकलापव्याख्यां सर्वार्थसिद्धौ[2] प्राहुः । एवंरीत्या स्वसिद्धान्तं प्रदर्श्य निर्विकल्पकसंज्ञकनिष्प्रकारकज्ञानवादिनां मतमित्थं खण्डयन्ति श्रीमद्वेदान्तदेशिकाः— यदुक्तं कुमारिलपादैः—

> 'अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
> बालमूकादि विज्ञानसदृशं शुद्धवस्तुजम् ॥'[3]

इति । तत्र दृष्टान्तः असिद्धः । बालमूकादिविज्ञानस्यापि विशिष्टविषयकत्वात् । अन्यथा तत्र तत्र तेषां प्रवृत्तेरसंभवात् । बालमूकादीनां संकेतज्ञानाभावेन अस्यार्थस्येदं नाम-धेयमिति ज्ञानाभावात् संज्ञासंबद्धतया यद्यपि वस्तुज्ञानं न भवति तथापि यत्किंचिद्वि-शिष्टविषयकमेव ज्ञानं तेषामुत्पद्यते । इतरथा हेयोपादेयविभागपूर्वकं प्रवृत्तिविशेषस्तेषां नोपपद्येत । प्रवृत्तिं प्रति सप्रकारकज्ञानस्य हेतुत्वात् । अतः कुमारिलोक्तः बालमूकादि-दृष्टान्तः असिद्धः । यच्चोक्तं शुद्धवस्तुजं निर्विकल्पकमिति, तदपि वस्तुजत्वमात्रं असहितवस्तुजत्वं वा अनारोपितवस्तुजत्वं वा निर्विशेषवस्तुजत्वं वा, सर्वेष्वपि पक्षेषु दोषसद्भावान्न युक्तमिति देशिकचरणा आहुः ।

१. त० मु० क० श्लो० ३२ (बुद्धिसर) ।
२. तत्रैव
३. श्लो० वा० पृ० १४७ ।

### तत्समाधानम्

परं तु शुद्धवस्तुजमित्यस्य वस्तुनिष्ठा या किंचिन्निष्ठप्रकारतानिरूपिता-विशेष्यता तदनिरूपकमिति तात्पर्यार्थः। तथा च देशिकैर्विकल्प्योक्ता दोषा अत्र न प्रसजन्तीत्यवधेयम्।

### देशिककृतं मणिदूषणम्

यदुक्तं विशिष्टबुद्धेर्विशेषणज्ञानपूर्वकत्वात् निर्विकल्पकं सिध्यतीति। तन्न। गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् इति भवदुक्तानुमाने भिन्न-सामग्रीवेद्यत्वस्योपाधित्वात्। यत्र विशेषणं विशेष्यं च भिन्नसामग्रीवेद्यं तत्रैव विशिष्टज्ञानं विशेषणज्ञानपूर्वकं दृष्टम्, यथा 'सुरभि चन्दनम्' इति विशिष्टप्रत्यक्षम्। तत्र हि विशेषणं सौरभं घ्राणेन्द्रियवेद्यं विशेष्यं चन्दनं चक्षुर्वेद्यमिति भिन्नसामग्रीवेद्य-त्वात् आदौ सौरभरूपविशेषणज्ञानम्, तेन च सुरभि चन्दनमिति विशिष्टप्रत्यक्षं भवति। एकेन्द्रिययोग्ययोर्गोगोत्वयोरेककाले विशिष्टज्ञानसंभवात् आदौ गोत्वज्ञानं ततः गोत्वविशिष्टव्यक्तिज्ञानमिति कल्पनं न युज्यते।

ननु एकचक्षुर्वेद्ययोरपि दण्डतद्वतोर्विषये आदौ दण्डरूपविशेषणज्ञानम्, ततो दण्डी पुरुषः' इति विशिष्टज्ञानं चोत्पद्यत इति दृष्टम्। तद्वत् गौरिति विशिष्ट-प्रत्यक्षमप्यस्तु इति चेत्—न। तत्रापि सामग्रीप्रवाहवशात् प्रथमं प्रत्येकग्रहणसामग्री-प्रवृत्तिः, ततः विशिष्टग्रहणं स्वसामग्रीवशात् इति विशेषणज्ञानस्याकारणत्वात्। विशेषणज्ञानानन्तर्यमात्रस्य कारणतानिश्चायकत्वाभावात्। युगपत् योग्यैकेन्द्रिय-संबद्धानां विशेष्यविशेषणतत्संबन्धानां युगपद्विशिष्टप्रत्ययस्य विशेषणज्ञानं विनाप्युत्पत्त्या व्यतिरेकव्यभिचारेण विशिष्टबुद्धिं प्रति कारणत्वाभावात्। सर्वमिदं मनसिकृत्योक्तं तत्त्वमुक्ताकलापे—

> 'ईदृक्त्वात्यन्तशून्ये न हि मिषति मतिर्नापि युक्तिस्तथात्वे।
> सामग्रीभेदवेद्ये पृथगवगतिरस्त्वत्र नैषान्यथात्वात्॥'[1] इति।

ननु विशेषणविशेष्ययोः गोत्वगोव्यक्त्योरेकेन्द्रिययोग्यत्वेन एकज्ञानविषय-त्वेऽपि तयोः सम्बन्धस्यातथात्वात् प्रथमज्ञाने तयोः संबन्धो न भासते। तथा च निर्विकल्पकमनाबाधं सिध्यति। संबन्धानवगाहिनो विशेषणविशेष्यमात्रविषयकज्ञान-स्यैव अस्माभिर्निर्विकल्पकशब्दवाच्यत्वाभ्युपगमादिति चेत्—न। संबन्धपदेन किं स्वरूपं विवक्षितम्? उत समवायः? आद्ये विशेषणविशेष्यस्वरूपग्रहणे संबन्धोऽपि गृहीत एवेति क्व निर्विकल्पकम्। द्वितीयेऽपि चक्षुषा संयुक्तविशेषणतासंबन्धेन समवायो गृह्यत इति भवत्सिद्धान्तात् गोगोत्वसमवायानाम् एकेन्द्रिययोग्यत्वात् एककाल एव त्रयाणां ग्रहणं भवितुमर्हति। अन्यथा योग्यस्यापि समवायस्य प्रथमम-ग्रहणे पश्चादपि ग्रहणं न संभवेत्। तथा च संसर्गानवगाहि निर्विकल्पकज्ञानं न युक्ति-

१. त० मु० क० श्लो० ३२ (बुद्धिसर)।

सहम् । तदुक्तं देशिकचरणैरेव न्यायपरिशुद्धौ—

'निर्विकल्पके धर्मधर्मिवत् तत्सम्बन्धस्याप्यैन्द्रियकत्वाविशेषेण ग्रहणसंभवात्'[१]
इति ।

### देशिकोक्तदूषणपरामर्शः

अत्रेदं विचार्यते । निर्विकल्पकज्ञाने जात्यादिरूपं विशेषणं व्यक्तिरूपं विशेष्यं च भासते । संबन्धस्तु न भासते । संबन्धज्ञानं प्रति सम्बन्धिज्ञानस्य कारणतया पूर्वं तदभावात् । तथा च पूर्वं विशेषणविशेष्यरूपसंबन्धिनोर्ज्ञानं निर्विकल्पात्मकं जायते ततस्तयोः सम्बन्धस्य समवायस्यावगाहि सविकल्पकात्मकं ज्ञानं जायत इति प्राचीननैयायिकाः । तथा चोक्तमुदयनाचार्यैः—

'सहकारिवैकल्यात्तु निर्विकल्पके समवायाग्रहणम्' इति ।

तथा च समवायोऽपि कुतो निर्विकल्पके न भासत इति चोद्यस्य नावसरः ।

यदपि भिन्नसामग्रीवेद्यत्वमुपाधिरित्युक्तम् । तत्रेदं वक्तव्यम् । अनुमितिशाब्दादौ साध्यप्रसिद्ध्यादेः कारणतया 'यद्विशेषयोः' इति न्यायेन विशिष्टज्ञानत्वावच्छिन्नं प्रति विशेषणज्ञानत्वावच्छिन्नं कारणमिति सामान्यकार्यकारणभावस्य सिद्धौ एकसामग्रीवेद्येष्वपि विशेषणज्ञानकल्पनेन तज्जन्यैव विशिष्टबुद्धिः । तथा च भिन्नसामग्रीवेद्यत्वस्य साध्यव्यापकत्वभङ्गात् उपाधित्वं न संभवतीति मणिकृतामाशयः इति ।

### निर्विकल्पके योगदर्शनसंमतिः

योगदर्शनेऽपि समाधिर्निर्विकल्पकसविकल्पकभेदेन द्विविध इति निरूपणात् निर्विकल्पकज्ञानमङ्गीकृतम् ।

यत्तु भर्तृहरिणा—

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥'[२]

इति सर्वं विज्ञानं शब्दानुविद्धार्थविषयकमिति वदता निर्विकल्पकमप्रामाणिकमित्युक्तम् । तन्न । न हि सर्वत्र ज्ञाने शब्दानुविद्धत्वमर्थस्य भासत इति समर्थयितुं शक्यम् । बालमूकादि विज्ञानेषु तदसम्भवात् । अन्यथा व्युत्पत्तिमन्तरेणापि तेषां तत्तद्वाचकपरिज्ञानप्रसङ्गात् । अयं च विषयो विस्तरेण परामृष्टः सर्वार्थसिद्धौ ।

### निर्विकल्पकविषयविवेचनम्

अत्रेदं तत्त्वम् । विशेषणज्ञानत्वेन सिध्यदपि निर्विकल्पकं न विशेषणभूतघटत्वादिमात्रं विषयीकरोति । अपि तु विशेष्यं घटादिकं समवायरूपं संबन्धं च विषयीकरोति । तथा च निर्विकल्पके घटः घटत्वं समवायश्चेति त्रितयं विषयः । त्रिष्वपि

१. न्या० प० पृ० ९६ ।
२. वाक्यपदीये पृ० १।१११ ॥

इन्द्रियसंनिकर्षस्य सद्भावेन घटत्वमात्रं विषय इत्यत्र नियामकाभावात्। परं तु त्रितयमपि विशकलिततया भासते। प्रकारविशेष्यभावो नास्ति। अतस्तत्र प्रकारताशून्यत्वं विशेष्यताशून्यत्वं संसर्गताशून्यत्वं च निर्विकल्पकस्य लक्षणं ब्रुवते नवीनतमा नैयायिकाः।

## तर्कताण्डवप्रदर्शितानि निर्विकल्पकदूषणानि[1]

मणिकारानन्तरकालिकाः द्वैताचार्याः व्यासतीर्थश्रीचरणाः मणिग्रन्थं तत्र तत्र दूषयन्ति तर्कताण्डवग्रन्थे। निर्विकल्पकविषयेऽपि मणिग्रन्थस्य परामर्शं कृतवन्तः। विशिष्टाद्वैतिन इव द्वैतिनोऽपि सर्वमपि ज्ञानं सविकल्पकम् इत्युररीकुर्वन्ति। अतो निर्विकल्पकदूषणे बद्धपरिकरा भवन्ति। निर्विकल्पकसिद्धौ तेन निर्विशेषं ब्रह्म सिध्येदिति बिभ्यतः द्वैतिनो विशिष्टाद्वैतिनश्च निर्विकल्पकदूषणे आदरं बिभ्रतीति तु तत्त्वम्। तत्राधुना तर्कताण्डवोक्तानि निर्विकल्पकदूषणानि विमृशामः। यथाशक्ति दूषणानां समाधानं च प्रदर्शयामः।

### प्रथमं दूषणम्

यदुक्तं मणौ साध्यात्मकविशेषणज्ञानरूपायाः साध्यप्रसिद्धेः अनुमितिं प्रति हेतुतया यद्विशेषयोरिति न्यायेन विशिष्टज्ञानसामान्यं प्रति विशेषणज्ञानं हेतुरिति कार्यकारणभावमवलम्ब्य निर्विकल्पकं साध्यत इति तन्न। सति व्याप्तिज्ञाने साध्यप्रसिद्धिं विनाप्यनुमित्युदयेन साध्यज्ञानस्यानुमितिं प्रति हेतुत्वाभावेन यद्विशेषयोरिति न्यायानवकाशात्। न च साध्यज्ञानाभावे व्याप्तिज्ञानमेव नोदियादिति वाच्यम्। तर्हि अनुमितिहेतुव्याप्तिज्ञानहेतुः साध्यप्रसिद्धिरित्यायाति। तथा च व्याप्तिज्ञानादिना अन्यथासिद्धायाः साध्यप्रसिद्धेरनुमितिहेतुत्वाभावादिति प्रथमं दूषणम्।

### तत्समाधानम्

नेदमपूर्वं दूषणम्। तत्त्वचिन्तामणिप्रकाशकारैः रुचिदत्तमिश्रैरस्य दोषस्य सूचितत्वात्। अत एवास्त्वारस्यान्मणौ पदार्थोपस्थितिवाच्यज्ञानतत्तानुभवानां विशिष्टज्ञानहेतुत्वं निदर्शितम्। तथा च तद्दृष्टान्तेन विशेषणज्ञानस्य हेतुत्वसिद्धेः को निवारयिता?

### द्वितीयदूषणम्

अस्तु वा साध्यप्रसिद्धिरनुमितिहेतुः। तथापि वह्निमानित्यनुमितिं प्रति वह्निज्ञानस्य न विशेषणज्ञानत्वेन हेतुता। द्रव्यत्वेन वह्न्यवगाहिनि द्रव्यमित्याकारकज्ञानेऽपि विशेषणज्ञानत्वसत्त्वेन तस्य वह्निमानित्यनुमितिं प्रति हेतुत्वाभावात्। अतो वह्निज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव अनुमितिं प्रति हेतुता वाच्या। तथा च साध्यप्रसिद्धिदृष्टान्तेन सप्रकारकज्ञानमेव सिध्येत् न निर्विकल्पकमिति द्वितीयं दूषणम्।

१. त० ता० पृ० ४८७।

### तत्परिहारः

अयं दोषो मणावेवोत्थाप्य विशिष्टवैशिष्ट्यावगाहिज्ञाने विशेषणतावच्छेदक-प्रकारकज्ञानं हेतुः, विशिष्टज्ञानं प्रति तु विशेषणज्ञानमेव हेतुः । प्रत्यभिज्ञारूपे तत्ता-विशिष्टज्ञाने तत्तानुभवस्य कारणत्वानुरोधात् इति पर्यहारि ।

### तृतीयदूषणम्

किं च यद्विशेषयोः कार्यकारणभावः स तत्सामान्ययोरपीति न्यायेन निर्विक-ल्पकसाधनं न युक्तम् । तथा सति करणविशेषरूपलिङ्गज्ञानस्यानुमितिरूपज्ञानविशेषं प्रति हेतुत्वात् यद्विशेषयोरिति न्यायेन जन्यज्ञानसामान्यं प्रति करणसामान्यज्ञानं हेतुः स्यात् । तथा च प्रत्यक्षं प्रत्यपि चक्षुरादिकरणविषयकं ज्ञानमेव कारणं स्यादिति तृतीयं दूषणमभ्यधायि ताण्डवकारैः ।

### तत्समाधानम्

अत्राभिदध्महे । यतश्चक्षुरादिज्ञानमन्तरेणापि स्वरूपसता चक्षुरादिना प्रत्यक्षं जायते अत एव व्यतिरेकव्यभिचारात् जन्यज्ञानसामान्यं प्रति करणज्ञानं कारणमिति कार्यकारणभावो न संभवति । तथा च असति बाधके यद्विशेषयोः कार्यकारणभावः स तत्सामान्ययोः इत्येव न्यायः । उक्तस्थले च व्यतिरेकव्यभिचाररूपबाधकसद्भावान्न भवदुक्तकार्यकारणभावः कल्प्यते । अतो नोक्तापत्तिः संभवति । विशिष्टबुद्धौ विशेषण-ज्ञानस्य कारणत्वे तु न किमपि व्यभिचारादिरूपं बाधकं दरीदृश्यते । अतो न दोष इति ।

अन्यानि दूषणान्यपि मणौ प्रकाशे च कानिचित् स्वयमेवोद्भाव्य परिहृतानि, अन्यानि च मणिदीधित्यादिग्रन्थाभ्यासजनितवासनावासितान्तःकरणानां सुलभसमाधे-यानि चेति एतावतायं विषयः समाप्यते ॥

# भारतीयदर्शने ईश्वरस्वरूपम्

रामर्मूत्तिशर्मा

आऋग्वेदाद् ब्रह्मसूत्रं यावद् भारतीयदर्शनशास्त्रे यत्र तत्र यदीश्वरशब्दस्योल्लेखो दृश्यते तत्र कथमीश्वरस्य कर्तृत्वं कथमन्तर्यामित्वं कथमुपास्यत्वं कथञ्च मायावित्वमिति स्पष्टं सिद्धान्तयुक्तञ्च नहि कुत्रचित् प्रतिपादितम् । शङ्कराचार्यस्य गुरुवर्यैर्गौडपादाचार्यैरपि ईश्वरशब्दस्योल्लेखस्तु कृतः परमपर्याप्त एव । नहि तत्र सैद्धान्तिकं समन्वितञ्च विवेचनं प्राप्यते । अद्वैतिभिः शङ्कराचार्यैस्तु ईश्वरविषयकविचारस्य सैद्धान्तिकं समन्वितञ्च व्याख्यानं विहितमित्यत्राचार्यदृशाऽस्य सिद्धान्तस्य प्रामुख्येनोल्लेख्यानि विचारबीजानि निरूप्यन्ते—

**अपरब्रह्मरूपेणेश्वरविवेचनम्—**

शङ्कराचार्येण परापरब्रह्मरूपेण ब्रह्मवादस्य यन्निरूपणं कृतं तदीश्वरवादस्यैव प्रतिष्ठां करोति । न परापरब्रह्मणी भिन्ने, स्थितिभेदेनैव द्वैतत्वं तयोरिति शाङ्करो विचारोऽद्वैतवादस्य सिद्धान्तभूमिं द्रढयति । परं ब्रह्म निर्गुणमपरञ्च ब्रह्म सगुणरूप ईश्वर इत्येव शाङ्करः सिद्धान्तः ।

**ईश्वरस्यान्तर्यामित्वं शासकत्वञ्च—**

ईश्वरः सर्वलोकान्तर्यामी शासकश्चेति सुविख्यातमद्वैतशास्त्रे । सर्वभूतानां हृद्देशस्थोऽपीश्वरो जीवकृतसदसत्कर्मभिर्निर्लिप्त इति मायाविनोऽपीश्वरस्य मायाविरहितत्वम् । ईश्वरस्यान्तर्यामित्वं तदा साक्षात्करणीयं यदाऽन्याय्यं कर्म कुर्वञ्जीवः कयाचिदान्तरिकशक्त्या तस्मात् कर्मणो निवारयितुं प्रेर्यते । ईश्वरशक्तिरेवैषा प्रेरणा शक्तिः । परमेतज्जीवस्य जीवत्वं यत्स्वाज्ञानबलाज्जीवस्तामान्तरिकीं प्रेरणामुल्लंघ्य सर्वं स्वेच्छानुरूपमेव सम्पादयति ।

**ईश्वरस्य मायावित्वम्—**

मायाशक्तिसम्पन्न एवेश्वरो जगन्नियन्ता, लोकरक्षकः संहारकश्च वेदान्तशास्त्र उच्यते । मायावीश्वरो यद्यप्यन्येषां कृते स्वयमेव मायां प्रसारयति परं न तया मायया स्पृष्टो भवति । एतच्चेश्वरस्य मायावित्वं शङ्कराचार्येण ऐन्द्रजालिकस्वरूपमिव वर्णितम् । यथैन्द्रजालिकः स्वयं प्रसारितया इन्द्रजालमायया न स्पृश्यते तथैवेश्वरोऽपि अस्पृष्ट एव स्वकीयया मायया[1] ।

१. शा० भा० गीतायाम्, ५।१४, १५ ।

**ईश्वरस्य लीलासृष्टिः—**

परमेश्वरो जगतः स्रष्टेति भगवती श्रुतिः। श्रुतौ च 'एकोऽहं बहु स्याम्' 'सोऽकामयत बहु स्यां प्रजायेय' इत्यादिवचोभिः परमात्मनः कर्तृत्वं सम्पादितम्। परमाप्तकामे परमात्मनि कथं सृष्टेः काम इत्याशङ्कनं प्रायः सम्भवति। तत्रेदं समाधानमद्वैतिनां यज्जगत्सृष्टिरीश्वरस्य लीलाया एव फलम्। लीला तु ईश्वरस्य स्वभाव एव। यथा लोके कश्चित् पूर्णाभिलाषो नृपो निष्प्रयोजनमेव स्वभाववशात् स्वकर्माणि विधत्ते राज्यानुकूलकर्तव्यपरायणतां च पालयति तथैव परमेश्वरो निष्कामतयैव संसारसृष्टि-मुत्पादयति। यदीश्वरो निष्काम आप्तकामश्च तदा कथं विषमां सृष्टिं निर्मिमीत इत्यपरा शङ्का। तत्रेश्वरो जीवानां पूर्वकृतकर्माण्याधृत्यैव सृष्टिवैषम्यमानयति, इति नाऽत्रेश्वरस्याप्तकामत्वे दोषो न वा निष्पक्षकर्तृत्वे। निरपेक्षोऽपीश्वरो धर्माधर्मौ अपेक्ष्यैव सृष्टिक्रियासंलग्नः सञ्जायते। सृज्यमानप्राणिनां सदसत्कर्माण्याश्रित्यैव लोकानामुत्तम-मध्यमाधमभावाश्च बोध्याः। अतो यदि लोके उत्तममध्यमादिस्थिति-भेदा दृश्यन्ते तदा नाऽत्रेश्वरस्य पक्षपातपूर्णता मन्तव्या। ईश्वरस्य पर्जन्यवद् एव व्यवहारो द्रष्टव्यः। यथा पर्जन्यो व्रीहियवादीनामुत्पादने साधारणो हेतुर्व्रीहियवादिषु च वर्तमानं वैषम्यं तत्तद्वैषम्ये विशिष्टो हेतुस्तथैवेश्वरोऽपि देवमनुष्यादीनां सृष्टौ साधारणो हेतुर्विशिष्टस्तु वैषम्यहेतुस्तत्तज्जीवानां सदसत्कर्मसम्भार एव। अत ईश्वर-विषये सृष्टिवैषम्यदोषो नैर्घृण्यदोषश्च निर्मूल एव।[1] वस्तुतस्तु परमेश्वरस्य नहि कश्चित् प्रियो न वाऽप्रियो यं प्रति तस्याकारणमेवानुग्रहोऽननुग्रहो वा स्यात्। कथयतु चेद् यदीश्वरस्य नहि कोऽपि प्रियोऽप्रियो वा तदा कथं लोके कस्यचित् श्रेयांसि अपरस्य चाश्रेयांसि दृश्यन्ते। कथं समदृष्टिरीश्वर एकस्य श्रेयस्कर्ताऽपरस्य चामङ्गल-विधायी। तत्र त्विदमेव वक्तव्यं यल्लोकस्य श्रेयसोऽश्रेयसश्च हेतुर्जीवस्य कर्मोद्वह एव। समदृष्टिरीश्वरस्तु निष्पक्षफलदातृत्वेन जीवानां प्रियाप्रिये करोति, न तु स्वकीयया निरंकुशेच्छया। अतो लोके नेश्वरो लोकानामुन्नत्यवनत्योः स्थितिभेदस्य वा हेतुः।

यदुपरि चर्चितं तेनेदं सर्वथा स्पष्टं यदीश्वरो लोककर्माण्यनुसृत्यैव सृष्टिवैषम्यं लोकस्थितिवैषम्यञ्च सम्पादयति। अत्रेयं विचारणा स्वाभाविकी यद् यदीश्वरो लोक-कर्माण्याश्रित्यैव लोकव्यवस्थां सम्पादयति तर्हि का नामोपयोगिता ईश्वरानुग्रहस्य ईश्वरप्रसादप्राप्त्यर्थं प्रार्थनस्य वा। यदीश्वरो न्यायप्रियस्तदा सत्कर्मणां सत्फल-मसत्कर्मणां चाऽसत्फलं दास्यत्येव, अतश्चेश्वरवन्दनं निरर्थकमेव प्रतीयते। निरर्थक-त्वाच्चेश्वरप्रार्थनायाः सर्वमपि वैदिकं, पौराणिकं, शाक्तं भाक्तञ्चोपासनासाहित्यं व्यर्थमेव सिध्यति। अत्रेदं विचारणीयं यदीश्वरानुग्रहप्राप्तिः प्रार्थना वा न हि कदाऽपि व्यर्था वक्तुं शक्या। उपासनाया इदमेव साक्षात् फलं यत्तया जीवस्य चित्तं पवित्रतां याति। सगुणोपासकश्च स्वदुर्गुणैर्दुर्मनायते प्रार्थयते चेश्वरं यदहं दुष्कर्मकर्ता न स्याम्। अन्यच्चेश्वरप्रसादप्राप्तेः फलमीश्वरसान्निध्यलाभः।

१. ब्र० सू० शा० भा० २।१।३४।

यदुक्तं कौषीतक्युपनिषदि "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते" (कौ० उ० ३।८) तदीश्वरस्योन्नतावनतकर्मकारकत्वे कथमौचित्यम् । तत्रैतत् प्रतिपाद्यं यज्जीवः पूर्वकृतकर्मानुसारमेव संस्कारवशात् सदसत्कर्मसु प्रवृत्तो भवति । ईश्वरस्तु साधारणप्रेरक एव । अतो नाऽत्रेश्वरदोष उद्घाटनीयः ।

**जीवेश्वरयोर्भेदः—**

शाङ्करवेदान्ते जीव ईश्वरश्च द्वावपि मायिकौ । ईश्वरो यदि समष्टिमूलकोऽज्ञानावच्छिन्नस्तदा जीवो व्यष्टिमूलकोऽज्ञानावच्छिन्नश्च । पञ्चदशीकृता विद्यारण्येनापि "मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ" इत्यभिधाय द्वयोरपि मायोपहितत्वं साधितम् । सर्वतन्त्रस्वतन्त्रेण वाचस्पतिमिश्रेणाविद्या जीवाधिकरणरूपेण व्याख्याता । जीवस्थिता चाविद्या निमित्ततया विषयतयाश्च हेतोरीश्वराश्रितत्वादीश्वराश्रयोच्यते । प्रकटार्थविवरणकृता सर्वभूतप्रकृतिरूपिण्यां चिन्मात्रसम्बन्धिन्यामनाद्यनिर्वचनीयायां मायायाञ्चैतन्यप्रतिबिम्ब ईश्वरः, तस्या एव च मायाया अविद्याभिधेषु आवरणविक्षेपशक्तियुक्तेषु परिच्छिन्नानन्तप्रदेशेषु चैतन्यप्रतिबिम्बो जीव इत्युक्तम् । संक्षेपशारीरककृता सर्वज्ञात्ममुनिना मायायां चैतन्यप्रतिबिम्ब ईश्वरोऽन्तःकरणप्रतिबिम्बितश्च चैतन्यप्रतिबिम्बो जीव इत्युदीरितम् । परं जीवेश्वरावुभावपि यद्यज्ञानोपहितौ तदा कथमेकः शासको ऽपरश्च शासितः ? तत्रेश्वरस्य शासकत्वं निरतिशयोपाधिसम्पन्नत्वाज्जीवस्य च शास्यत्वं हीनोपाधिकारणाद् बोध्यम् । यद्यपि जीव ईश्वरस्यांशमिव प्रतीयते परं नांशो निरवयवस्येश्वरस्यांशासम्भवात् । जीवेश्वरयोरयमपि विशिष्टो भेदो यज्जीव आत्मन्यध्यासकारणात् ममत्वपरत्वेतिमिथ्याभिमानवशादहं सुखी, अहं दुःखीत्यादिकमनुभवति परं नेश्वरः सुखदुःखादिकस्य भोक्ता, ईश्वरस्तु साक्ष्येव । साक्षित्वाच्चेश्वरो यथा "द्वा सुपर्णा" इत्यत्र वर्णितं न कर्ता, न भोक्ता न वा भोग्यः । साक्षीश्वरस्तु जीवस्य समस्तमेव क्रियाकलापं पश्यति, परं तस्य न केनाऽपि कर्मणा स्पृष्टो जायते ।

**ब्रह्मेश्वरयोर्भेदः—**

ईश्वरो ऽपरब्रह्म ब्रह्म च परम् । ब्रह्म यदि निष्कलं मायोपाधिरहितं तदा ईश्वरो मायावी, सर्वलोकनियन्ता तटस्थश्च । सत्यसङ्कल्पवांश्चेश्वर एव न तु ब्रह्म । ईश्वरस्तु "सम्भवामि युगे युगे", इति गीतोक्त्या लोकश्रेयसे नामरूपादिकमपि धारयति न तु ब्रह्म । ज्ञातृत्वादिकमपीश्वर एव न तु ब्रह्मणि । ब्रह्म तु ज्ञानस्वरूपमेव । अन्यच्चोपास्य ईश्वर एव न तु ब्रह्म । अत एवेश्वरं प्रति गमनमुपासनं वा संभाव्यते न तु ब्रह्म गम्यमुपास्यं वा वर्तते । ईश्वर एव च शुभाशुभफलानां दाता, न तु ब्रह्म । ब्रह्मेश्वरयोर्विद्यापि द्विविधा प्रकीर्तिता । तत्र ब्रह्मविद्या परा विद्या, ईश्वरविद्या चाऽपरा । अपरा विद्यैव सगुणविद्याऽपि कथ्यते ।

उपर्युक्तविवेचनेन ब्रह्मेश्वरयोर्भेदस्तु स्पष्टः सञ्जातः परं भेदोऽयं वास्तविकश्चेत्तदा तु द्वैतमेव सिध्यति कथमद्वैतम् । उत्तरयति अत्र शङ्करः—यद् वास्तविकं

पारमार्थिकं तु सत्यमेकमेव ब्रह्म, न च ब्रह्मणः खण्डत्वसिद्धिः, परमज्ञानोपाधिकारणादेव द्वयोर्भेदः। अपरञ्च येऽज्ञानिनस्तेषां कृत एव ब्रह्मेश्वरभेदः। ज्ञानिनां तु "सर्वं खल्विदं ब्रह्म" इत्येव भावना। अतोऽविद्यैव मूलं द्वयोर्भेदस्य। अनेन तु अनीश्वरवादस्यैव पुष्टिः सम्भवति, इति विप्रतिपत्तिश्चेत्, न, व्यावहारिकजगतः स्रष्टुः शून्यत्वासिद्धत्वात् तस्य सत्यत्वापेक्षितत्वाच्च। अतो नेश्वरः प्रातिभासिकः शून्यरूपो वा। एवञ्च वेदान्ते नानीश्वरवादस्य प्रथनमिति बोध्यम्। यद्यपीश्वरवादस्य विशिष्टं व्याख्यानं वेदान्तशास्त्र एव समुपलभ्यते परं भारतीयदर्शनस्यान्यास्वपि दर्शनपद्धतिषु ईश्वरविषयिका विचारधारा येन केनाऽपि रूपेण प्राप्यत एव। तत्र सृष्टिप्रलयावीश्वरेच्छाधीनौ, इति न्यायवैशेषिकमतम्। न्यायवैशेषिकमते ईश्वरापेक्षा नितान्तमावश्यिकी। ईश्वरापेक्षामाश्रित्यैव तत्र सृष्टिसम्भावना। वैशेषिकदर्शनस्य "तद्वचनादाम्नायस्य प्रामाण्यम्" (१।१।३) "संज्ञा कर्म त्वस्मद्विशिष्टानां लिङ्गम्" (२।१।१८) इति सूत्रद्वयेऽपि ईश्वरस्य संकेतः प्राप्यते। साङ्ख्यसूत्रस्य—"ईदृशेश्वरसिद्धिः सिद्धिः" (३।५७) इति सूत्रे ईश्वरस्योल्लेखः प्रतिभाति। यद्यपि सांख्यदर्शनशास्त्रे कर्तृत्वयुक्तस्येश्वरस्य वर्णनं नहि प्राप्यते परं तत्रापि जगत्साक्षित्वेनेश्वरवर्णनं प्राप्यत एव। सांख्यदर्शनमनुसृत्य प्रकृतिरीश्वरसान्निध्यात् स्वव्यापारे लीना जायते। एतच्च तथैव ज्ञेयं यथाऽयस्कान्तसान्निध्याल्लौहे क्रियाशीलता दृश्यते। अत एव सांख्याचर्येण विज्ञानभिक्षुणा सांख्यदर्शनस्य सेश्वरत्वमङ्गीकृतम्। योगदर्शने च "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"[२] इत्युक्त्वा ईश्वरतत्त्वं परिभाषितम्। अयमीश्वरोऽविद्यास्मितारागद्वेषाभिनिवेशेति पञ्चक्लेशैः पुण्यपापकर्मभिश्चासंस्पृष्टः पुरुषविशेष एव। पातञ्जलम्—ईश्वरप्रणिधानाद्वा,[३] इति सूत्रमपि ईश्वरस्य सगुणत्वमेव प्रतिपादयति। योगदर्शनशास्त्रिणाञ्चेश्वरः सदैश्वर्यसम्पन्नो मुक्तश्चास्ते। ईश्वरश्चायं योगसम्मतात् केवलीपुरुषाद् भिन्नः प्राकृतिक-वैकारिकदाक्षिणिकबन्धनेभ्यो मुक्तः 'केवली पुरुषः' सञ्जायते परमीश्वरस्तु सर्वदैव मुक्तः। ईश्वरो योगदर्शने प्रणवसंज्ञयाऽप्युदीर्यते। पूर्वमीमांसाया लौगाक्षिभास्करादिभिराचार्यै—"ईश्वरार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः"[४] इत्युक्त्वा ईश्वरविषयिका धारणा स्पष्टीकृता। जैमिनिमतानुसारं तु धर्म एव विविधफलदायको न त्वीश्वर इति प्रतिपादितम्।

यदत्र विवेचितं तेनेदं स्पस्टं यद्भारतीयासु षड्दर्शनपद्धतिष्वपि ईश्वरविषयकः सङ्केतोल्लेखः प्राप्यते परं वैशिष्ट्येन शाङ्करवेदान्त एवेश्वरविवेचनं समुपलभ्यते नान्यत्रेति निर्विवादम्।

वस्तुतस्तु परमेश्वरं विना लोकव्यवस्थैव नहि सम्भवति। ईश्वरास्थां विना मानवस्य मानसस्थितिः कीदृशी स्यादित्यपि नाऽहं जाने। किमिदं कथनं मृषा

१. तत्सन्निधानादधिष्ठातृत्वं मणिवत्। सां० सू०, १।९६।
२. यो० सू०, १।१४।
३. यो० सू०, १।२३।
४. अर्थसङ्ग्रहे, पृ० १९६ तमे।

यद्बहवोऽपि अनीश्वरवादिनो घोरविपदि परमेश्वरं स्मरन्तः प्रार्थयन्तश्च दृश्यन्ते। ईश्वरविषयकविचारणस्य न्यूनाधिक्ये ऽविचारणे वाऽस्य विचारस्यापेक्षाऽनपेक्षा वा हेतुः। यथापेक्षितं तथैवेश्वरविषये न्यायादिषु विवेचितम्। एवञ्चेश्वराविचार-कारणान्नास्तिका अपि न नास्तिकाः। न्यायकुसुमाञ्जलिप्रणेतृभिरुदयनाचार्यैरीश्वर-विषयकस्य सन्देहस्य यन्निराकरणं कृतं तत् समुचितमेव ज्ञेयम्। किंमत्राऽनर्गलं यदुपनिषद्विद्याविलासिनो यं शुद्ध-बुद्ध-मुक्तस्वभावम् कपिलानुयायिनो यं सिद्धस्वरूपम्, पातञ्जलशास्त्रानुयायिनो यमदृष्टरहितम्,' पाशुपता यं निर्लेपस्वतन्त्रस्वरूपम्, शैवाः शिवरूपम्, वैष्णवाः पुरुषोत्तमस्वरूपम्, पौराणिकाः पितामहस्वरूपम्, याज्ञिका यज्ञ-पुरुषस्वरूपम्, सौगताः सर्वज्ञस्वरूपम्, दिगम्बरा आवरणरहितम्, मीमांसका उपास्य-रूपम्, नैयायिकाः सर्वगुणसम्पन्नपुरुषस्वरूपम्, चार्वाका लोकव्यवहारसिद्धस्वरूपमन्ये च विश्वकर्मादिस्वरूपमवगत्य संपूजयन्ति स ईश्वर[1] एवेति श्रेयसे पन्थाः।

१. न्यायकुसुमाञ्जली, १।१।

# ब्रह्मप्रतिपादकश्रुतीनां प्रामाण्यविचारः

**बेचन झा**

ब्रह्मणः यथावत्स्वरूपाधिगमे श्रुतिमेव प्रबलं प्रमाणं विद्वांसः स्वीकुर्वन्ति। शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्म अवगतं भवति। अथ "सत्यं ज्ञानमनन्तं ब्रह्म", "एकमेवाद्वितीयं ब्रह्म", "आत्मा वा इदमेक एवाग्र आसीत्", इत्यादिब्रह्मस्वरूपविषयाणां श्रुतीनां प्रामाण्यसिद्धावेव ब्रह्मविचारस्य औचित्यं स्थापयितुं शक्यम्, किन्तु ब्रह्मणः परिनिष्ठितवस्तुत्वात् सिद्धार्थकानामुक्तवाक्यानां प्रामाण्यं सन्दिग्धमिव प्रतिभाति। यस्मिन्नर्थे यस्य शब्दस्य शक्तिग्रहः, तत्रैव तस्य प्रामाण्यमूरीकुर्वन्ति विपश्चितः।

> शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
> वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

इति शक्तिग्रहे बहुषु कारणेषु सत्स्वपि व्यवहारस्य प्राबल्यात् प्रधानतः शक्तिग्रहो हि वृद्धव्यवहारात् भवति। वृद्धव्यवहारश्च "देवदत्त गामानय" इत्याद्युत्तमवृद्धवाक्यप्रयोगाद् देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति एव भवति। तस्य च गवानयनादिः विधिप्रत्ययश्रवणेन कर्त्तव्यतया बुद्ध्युपारूढत्वात् यत्कर्त्तव्यं बुद्धिविषयीभूतं तत्कार्यम् अतएव कार्यरूपे अर्थ एव शक्तिग्रहः इति वाक्यविदः आमनन्ति। यत्पुनः भूतार्थकं वाक्यं "रामो वनं जगाम" इत्याकारकं तत्तु न किञ्चिद् व्यवहारप्रयोजकमिति न तत्र बालस्य शक्तिग्रहः संभवति। तथा च "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यानां भूतब्रह्मबोधकानां सिद्धेऽर्थे शक्तिग्रहाभावेन आगमस्य ब्रह्मणि प्रामाण्यकथापि नितरामसंभवा प्रतिभाति।

यत्तु "चैत्र पुत्रस्ते जात" इति सिद्धार्थप्रतिपादकमपि वाक्यं संदेशहरेणोच्चार्यंते तदा चैत्रस्य मुखप्रसादाद्रिलिङ्गेन हर्षहेतुभूतं पुत्रजन्मरूपमर्थमनुमाय तत्र शब्द-शक्तिग्रहो भवति। तत्रापि पुत्रजन्मरूपार्थज्ञानकारणकः एव प्रसादः इति निश्चीयते, तर्हि वक्तृतात्पर्यानुरोधेन "त्वं जानीही" ति विधिबोधकशब्दाध्याहारेण एव तथा बोध इति कल्प्यते। यथा द्वारमित्युक्ते पिधेहि इति विधिबोधकक्रियायाः अध्याहारस्य सर्वानुमतत्वात् तथा च "पुत्रस्ते जात" इत्यादिवाक्यानामपि कार्याध्याहारवशात् कार्यवाक्यत्वस्वीकारेण शक्तिग्रहः संभवति। किन्तु केवलसिद्धरूपे ब्रह्मणि श्रुतिवाक्यानां प्रामाण्यं न संभवति।

अत्र ब्रूमः—पुत्रपदचिह्नितं पटमुपस्थापयन् सन्देशहरः चैत्रमुद्दिश्य "पुत्रस्ते जातः" इति अभिदधाति। सन्देशहरवचनश्रवणात् चैत्रः नितरां प्रसीदति। तत्र पुत्रजन्मन एव प्रसादहेतुत्वं सर्वैः निर्णीयते। अन्येपि हेतवः सुखप्रसवादयः तस्य प्रतीतिपथमवतरन्तः प्रथमप्रतीतं पुत्रजन्मरूपकारणं परित्यज्य न स्वीक्रियन्ते। एवं च परिशेषानुमानेन हर्षकारणं पुत्रजन्म एव प्रतीतं भवति। पुत्रस्ते जात इति सिद्धार्थकादपि वाक्यादर्थ-

प्रतीतिः संभवति। न तदर्थम् अन्या कल्पना युक्ता मन्यते। पुत्रजन्मनश्च सर्वतः आनन्दहेतुत्वं के नाम न स्वीकुर्वन्ति।

"पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः।"

तथा च चित्सुखाचार्याः अपि समामनन्ति—

"दृष्टचैत्रसुतोत्पत्तेस्तत्पदाङ्कितवाससा।

वार्त्ताहरेण जातस्य परिशेषविनिश्चितेः॥" इति।

तथा च पुत्रस्ते जात इति वाक्यात् यथा शक्तिग्रहः तथैव वेदान्तवाक्यानामपि सिद्धे ब्रह्मणि प्रामाण्यं संभवति। एवञ्च श्रुतिवाक्यानां प्रामाण्ये साधिते तैर्बोधितस्य आत्मविज्ञानाभ्यासविषयीकृतस्य आत्मतत्त्वस्य साक्षात्कारेण संसारहेत्वविद्याविध्वंसोपलक्षितः ब्रह्मात्मैकतारूपपरमपुरुषार्थः सिद्ध्यतीति॥

"यतो वाचो निवर्तन्ते" इति श्रुतिरेव ब्रह्मणः वाचोऽगोचरत्वं प्रतिपादयति ब्रह्मणश्च आगमगम्यत्वस्य प्रतिषेधे सति कथं श्रुतिः ब्रह्मबोधे प्रमाणं स्वीक्रियते। ततश्च "तन्त्वौपनिषदं पुरुषं पृच्छामी" त्यपरा श्रुतिवाक् ब्रह्मणः उपनिषत्प्रतिपाद्यतां वक्तीति द्वयोः श्रुतिवाक्ययोः परस्परं विरोधे तदेकवाक्यतोपपादनप्रकारोऽवश्यं द्रष्टव्यः। द्वयोरपि वाक्ययोः प्रामाण्यं मन्तव्यमेव। ततश्च यानि वाक्यानि ब्रह्मणः वागगोचरत्वबोधकानि तानि वाक्यजन्यवृत्तिव्यक्तस्फुरणरूपफलासंभवविवक्षयैव प्रवृत्तानि यानि च उपनिषत्प्रतिपाद्यत्वं ब्रह्मणः साधयन्ति तानि वाक्यजन्यवृत्तिजन्यावरणभङ्गफलसंभवविवक्षया प्रवृत्तानीति तयोः समन्वयो विधेयः। तथा हि घटादिकज्ञाने बुद्धिरूपस्यान्तःकरणस्य घटादिविषयदेशे गमनं भवति। तत्र गत्वा अन्तःकरणं घटादिविषयं व्याप्नोति ततश्च व्यापनरूपया अन्तः करणवृत्त्या विषयचैतन्यगताज्ञानरूपस्य आवरणस्य भङ्गः संजायते। चिदाभासेन च जडः अप्रकाशस्वभावोऽपि घटः स्फुरति। तथा च पञ्चदशीकारः—

बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्।

तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्॥ इति।

एवञ्च आवरणं स्फुरणञ्चेति वृत्तेः फलद्वयं स्वीक्रियते। तत्त्वमसि इत्यादिवाक्यैः जायमानस्य ब्रह्मात्मैक्यज्ञानस्य काले बुद्धिवृत्तिव्याप्त्या आवरणभङ्गरूपं फलमुत्पद्यते। आवरणभङ्गे जाते स्वयंप्रकाशरूप आत्मा ज्ञातो भवति। एवमेव ब्रह्मणो वाग्जन्यज्ञानफलभूतस्फुरणाभावात् यतो वाचो निवर्तन्त इति श्रुतिः समीचीना प्रतिभाति। आवरणभङ्गरूपफलसंभवात्तु तन्त्वौपनिषदं पुरुषं पृच्छामीति श्रुतिरपि उपपन्ना भवति। तथा च उक्तम्—

"अनाधेयफलत्वेन श्रुतेर्ब्रह्म न गोचरः।

प्रमेयप्रमितौ तु स्यादात्माकारसमर्पणात्॥

न प्रकाश्यं प्रमाणेन प्रकाशो ब्रह्मणः स्वयम्।

तज्जन्यावृत्तिभङ्गत्वात्प्रमेयमिति गीयते॥" इति च।

अतो ब्रह्मणि आगमप्रमाणस्य सिद्धतया ब्रह्मज्ञाने भवन्ति श्रुतयः प्रमाणमिति वेदान्तिनो मन्यन्ते॥

# प्रमाणभेद-तत्साध्यचर्चा

रामप्रसादत्रिपाठी

अथ प्रमाणभेदानुद्दिश्य ईषच्चर्चा विधीयते ।

तत्र 'तद्वति तत्प्रकारकोऽनुभवः प्रमा, तत्करणं प्रमाणम्' इति न्यायदर्शनसम्मतं प्रमाणसामान्यलक्षणम् । 'अनधिगताबाधितार्थविषयकं ज्ञानं प्रमा, तत्करणं प्रमाणम्' इति मीमांसादर्शनसम्मतिस्तत्र ।

'अनिर्ज्ञातार्थविषयकं सम्भावितसकलधर्मप्रकारकं ज्ञानं प्रमा, तत्करणं प्रमाणम्' इति व्याकरणदर्शनविदामभिमतिः ।

अथ सामान्यपरिचयानन्तरं प्रमाणभेदविषये नानामतानि दर्श्यन्ते ।

(१) तत्र प्रत्यक्षमेवैकं प्रमाणम्, अनुमानं तु प्रमाणपदवीं नाधिरोढुमर्हति; यतश्चानुमानं व्याप्तिज्ञानम् । तच्च 'यत्र यत्र धूमस्तत्र तत्राग्निः' इति सार्वदेशिकं धूममग्निं च विषयीकरोति । तादृशस्य धूमादेश्च ज्ञानं प्रत्यक्षात्मकमसम्भवमेव । आनुमानिकं चेत्, तर्हि अनवस्थादोषः । आप्तवाक्यमपि प्रमाणकोटौ प्रवेष्टुं नार्हति । श्रवणेन्द्रियेण गृह्यमाणं तद्वाक्यं वस्तुभूतं भवतु नाम । परन्तु तेनोपस्थापितोऽर्थो न श्रद्धास्पदम् । एवमेवार्थापत्त्यादिप्रमाणेनाप्युपस्थापितोऽर्थोऽश्रद्धेय एव । ततः प्रवृत्तौ सत्यामर्थोपलब्धिस्तु काकतालीयन्यायेनैवेति सिद्धान्तयन्ति चार्वाकमतानुयायिनः ।

(२) मा भूत् सकलधूमाग्न्योः प्रत्यक्षादिकम्, भूयोदर्शनेनैव व्याप्तिज्ञानं सुकरम् । न च व्यभिचारसंशयः, धूमाग्न्योः कार्यकारणभावस्य प्रत्यक्षेण तदुच्छेदस्य सुसाधत्वात् । अतश्चानुमानमपि स्वतन्त्रं प्रमाणम् । शब्दस्तु प्रत्यक्षानुमानसिद्धार्थबोधक इति न स्वतन्त्रं प्रमाणम्, अपितु अनुमानविधयैव । आप्तोच्चारित एव शब्दः तद्रूपतयापि प्रमाणम्, न तून्मत्ताद्युच्चारितः ।

वक्तृप्रामाण्येन तदुक्तस्य शब्दस्य प्रामाण्यमनुमेयमित्यनुमानाधीनत्वं शब्दस्येति सिद्धान्तयन्ति बौद्धवैशेषिकदर्शनाचार्याः ।

(३) प्रत्यक्षानुमानगोचरधर्माधर्मादिनिर्णयार्थं मन्त्रब्राह्मणात्मकवेदानामाप्तोक्तानां समेषां शब्दानां चापि स्वतन्त्रमेव प्रामाण्यमिति प्रत्यक्षानुमानशब्दाख्यप्रमाणत्रितयवादिनः सांख्ययोगदर्शनाचार्याः ।

(४) गोसादृश्यज्ञानेन गवयपदार्थे गवयपदीयशक्तिग्रहार्थमुपमानमपि प्रमाणमिति प्रत्यक्षानुमानोपमानशब्दाख्यानि चत्वारि प्रमाणानीति प्रमाणपटवो न्यायदर्शनाचार्याः ।

(५) दिवाऽभुञ्जानं देवदत्तं स्थूलं दृष्ट्वा 'रात्रिभोजनवानयमवश्यमस्ति' इत्युपपाद्यस्थौल्यज्ञानेनोपपादकं रात्रिभोजनं कल्पयन्तोऽर्थापत्तिमपि पञ्चमं प्रमाणमुपस्थापयन्ति मीमांसकविशेषाः प्राभाकराः ।

(६) प्रत्यक्षादिना अभावस्य ज्ञानं भवितुं नार्हति । अपितु 'यथा यक्षस्तथा बलिः' इति न्यायेन तज्ज्ञानार्थमनुपलब्धिरपि षष्ठं प्रमाणमिति मीमांसकधौरेयाः भट्टपादानुयायिनः अद्वैतवेदान्तिनोऽध्यात्मवित्तमाश्च ।

(७) प्रत्यक्षं परोक्षमिति द्विविधं प्रमाणम् । तत्र स्मृतिप्रत्यभिज्ञानोहानुमानागमभेदात् पञ्चविधं परोक्षमिति जैनदर्शनविशारदाः ।

(८) प्रत्यक्षमनुमानमुपमानं शब्दोऽर्थापत्तिरनुपलब्धिः सम्भव ऐतिह्यं चेत्यष्टौ प्रमाणानि इति पुराणविद्यावित्तमाः । चेष्टासहितान्येतानि नव इति तान्त्रिकसत्तमाः ।

(९) प्रत्यक्षमनुमानमर्थापत्तिः शब्दश्चेति चत्वारि प्रमाणानि इति व्याकरणदर्शनविदः पाणिनीयाः ।

प्रमाणेषूपजीव्योपजीवकभावः—

यस्य प्रमाणस्य प्रामाण्यं प्रमाणान्तराधीनं तत्तस्योपजीवकम्, प्रमाणान्तरं तूपजीव्यम् । यथा न्यायदर्शने वेदस्य प्रामाण्यमनुमानप्रमाणाधीनम् । सर्वज्ञेन परमेश्वरेण प्रणीततया वेदाः प्रमाणम् । तादृशः परमेश्वरस्तु पूर्वमनुमानैकगम्यः, पश्चात्तु वेदैरपि इति अनुमानमुपजीव्यम्, वेदास्तूपजीवकाः । एवमेव स्मृतीनां प्रामाण्यं श्रुतिप्रमाणाधीनमिति स्मृतीनामुपजीवकत्वम्, तदपेक्षया श्रुतीनामुपजीव्यत्वम् ।

वेदान्तदर्शने 'अचिन्त्याः खलु ये भावाः न तांस्तर्केण योजयेत्' इति सिद्धान्तेन परमेश्वरादिविषये न पूर्वमनुमानस्य प्रवृत्तिः, अपि तु वेदेन प्रमिते सत्येवानुमानस्योत्पत्तिः · अतस्तत्र नये वेदानामुपजीव्यता, अनुमानस्योपजीवकता ।

एवमेव अग्न्यनुमाने धूमस्य ज्ञानं यत्र चक्षुरादिप्रत्यक्षप्रमाणाधीनम्, तत्र शब्दस्योपजीव्यता । यत्र चानुमानाधीनम्, तत्रानुमानस्योपजीव्यता । 'घटोऽस्ति' इति वाक्यजन्यबोधे शब्दस्य ज्ञानं तु श्रवणेन्द्रियप्रत्यक्षमानायत्तमिति प्रत्यक्षशब्दयोरप्युपजीव्योपजीवकभावो बोध्यः ।

प्रमाणभेदेषु बाध्यबाधकभावः—

अथैकत्र प्रमेये एकदा प्रमाणद्वयसामग्रीसन्निपाते केन प्रमाणेन तत्र प्रमा जायते ? अर्थात् कस्य किं बाधकं स्यादिति विचारः प्रस्तूयते । तत्रैतत् प्रमाणमस्य बाधकमेवेति नियमो नास्ति । सदोषसामग्रीकं हि बाध्यं भवति । निर्दोषसामग्रीकं तु बाधकं भवति । यथा क्वचन स्थले सदोषचक्षुषा रजतस्य प्रत्यक्षं क्रियते 'इदं रजत'मिति । तच्च 'नेदं रजत'मिति आप्तवचनेन बाध्यते । क्वचन स्थले वक्ता उन्मत्तो वर्तते, 'नेदं रजतम्', इति निर्दोषचक्षुषा जायमानेन 'इदं रजतम्' इति प्रत्यक्षेण बाध्यते, द्वयोरपि दोषजन्यत्वे समानैव स्थितिः । यत्र पक्षे दोषः स्फुरेत् तस्य बाध्यत्वम्, अन्यत्र बाधकत्वम् । तत्रापि दोषस्फुरणे तस्यापि हेयत्वेन बाध्यत्वमेवोपनतं भवति ।

प्रमाणसंख्याविषये मतभेदे सत्यपि प्रत्यक्षानुमानशब्दरूपाणि त्रीण्येव प्रमाणानि प्रमुखाणि सन्ति । अन्येषामुपमानार्थापत्त्यनुपलब्धिरूपाणामेष्वेवान्तर्भावो भवितुमर्हति । तत्र यस्यान्तर्भावः तस्य तदपेक्षं दौर्बल्यं मन्तव्यम्; तद्वदेव तस्य प्राबल्यं दौर्बल्यं वा स्वीकरणीयम् ।

यथा यत्र अग्न्यादिरूपे समानविषये प्रत्यक्षप्रमाणापेक्षया गुरुसामग्रीकमनुमानं दुर्बलम्, तत्रानुमानान्तर्गतस्यार्थापत्तिप्रमाणस्यापि तदपेक्षया दौर्बल्यं भवति । यत्र च समाने एव विषयेऽन्यतरस्य सदोषसामग्रीकत्वम्, तत्र तस्य दौर्बल्यम् । यथा पर्वते धूलीपटले बाष्पे वा धूमभ्रमेण अग्नेरनुमितिः क्रियमाणाऽस्ति, अग्न्यभावश्च चक्षुषा गृह्यमाणोऽस्ति, तत्र सर्वथा प्रत्यक्षस्य प्राबल्यम् ।

यत्र च रक्तशीशकशकले गुञ्जादौ वा सादृश्यादग्नेः प्रत्यक्षात्मको भ्रमः, औष्ण्याभावादिना चाग्निभिन्नत्वस्य तत्रानुमितिः प्रसजति, तत्रानुमानस्यैव प्राबल्यम्, निर्दोषसामग्रीकत्वात् । एवमेव शैत्यातिशयवति पर्वते निवसतां जनानां स्थौल्यं दृष्ट्वा तदन्यथानुपपत्तिरूपार्थापत्तिप्रमाणेन तत्राग्निः साध्यते । तदा सदोषमर्थापत्तिप्रमाणमपि प्रत्यक्षापेक्षया दुर्बलं भवति । दोषश्च शैत्यातिशयस्थले स्थौल्यस्य न कश्चनाग्निभिन्नो हेतुरित्याकारको भ्रमः ।

अथ प्रमाणभेदानां साधनीयानि चर्च्यन्ते—

अथ केन प्रमाणेन किं साध्यते इति विमृश्यते । तत्र प्रमाणेन न हि कश्चन प्रमातिरिक्तः पदार्थ उत्पाद्यते, अपितु पूर्वसिद्ध एवार्थस्तेन ज्ञाप्यते । स चार्थः प्रमाणसाध्यः प्रमेय इति बोध्यते । तत्र चेतनाचेतनभेदेन द्विविधेष्वर्थेषु अचेतनस्य चेतनाधीनतया चेतनं प्रधानमिति प्रथमतस्तदेव साधनीयम् । तच्चापि जीवब्रह्मभेदेन द्विविधमस्ति । तत्र ज्ञानादिजनने जीवश्चित्तादिसापेक्षः, ब्रह्म तु तन्निरपेक्षमिति जीवस्याप्राधान्यम्, ब्रह्मणः प्राधान्यम् । एवं च प्रथमतो जिज्ञास्ये ब्रह्मणि प्रमाणानां प्रवृत्तिः कया विधया सम्भवतीति समीक्ष्यते । ब्रह्म वस्तुतः प्रमाणातीतं प्रमाणोपजीव्यं चेति तत्सत्तयैव हि सत्तावन्ति प्रमाणानि स्वोपजीव्ये ब्रह्मणि कथं प्रवर्तेरन् ? न ह्यग्निर्दहनकर्मापि स्वोपजीव्यं वायुं दग्धुं शक्नोति । ननु ब्रह्मणः प्रमाणागम्यत्वेनासत्त्वमेव स्यादिति चेत् उच्यते—प्रमाणोपजीव्यतयैव तस्य सिद्धत्वेनोक्तशङ्कायाः निरास इति । तथा च पदार्थानां प्रामाणिकत्वं द्विविधम्—प्रमाणोपजीव्यतया प्रमाणविषयतया चेति। निर्गुणस्य ब्रह्मणः प्रथमम्, तदितरस्य प्रपञ्चजातस्य द्वितीयम् । सर्वं प्रमाणमपि प्रपञ्चान्तःपातितया प्रमेयमेव । तत्र कस्यचन प्रमाणस्य प्रमाणान्तराविषयतया स्वतःप्रमाणत्वमवश्यं वाच्यम्, अन्यथा तस्य सिद्धौ प्रमाणान्तरापेक्षा, तस्यापि प्रमाणान्तरस्यान्यप्रमाणापेक्षा—पुनस्तस्यान्यप्रमाणापेक्षा—इत्येवमनवस्थादोषः सुदृढमापतेत् । अतएव सर्वेष्वपि दर्शनेषु प्रत्यक्षं स्वतःप्रमाणमङ्गीकृतमस्ति । ननु तस्य प्रामाण्यमनुमानादिना साध्यते । अनुमानस्य प्रामाण्यं तु प्रत्यक्षेण सिद्धं भवति । यतः पर्वतेऽग्निमनुमानेन निश्चित्य पर्वतं गतः पुरुषोऽग्निं प्रत्यक्षीकरोति । एवमनेन दृष्टान्तेन सर्वत्रानुमानस्य प्रामाण्यमनुमानेनैव ज्ञातुं शक्यते ।

अनुमानाकारश्च—'अनुमानं प्रमाणं प्रमितिजनकतावच्छेदकधर्मवत्त्वात्, यथेन्द्रियम्' इत्येवं बोध्यः।

एवमेव शब्दस्यापि प्रामाण्यं बहुत्र प्रत्यक्षमूलकमेव ऋतेऽदृष्टार्थविषयकात्। एवं च प्रमाणस्य प्रामाण्यं प्रमाणान्तरेण ज्ञायते, न तूत्पाद्यते। तस्योत्पत्तिस्तु यथासम्भवं स्वतः परतो वा इत्यन्यत्। एवं च शब्दाद्वैतवादिनां वैयाकरणानां मते शब्दब्रह्मणो न कथमपि विषयत्वम्। मातृमेयभावस्तु द्वैतहेतुक इति शब्दब्रह्मणः साक्षात्कारे न प्रमातुः प्रमातृत्वम्, न वा ब्रह्मणः प्रमेयत्वम्।

अथैतन्मते शब्दब्रह्मणः साक्षात्कारः कथं सम्भवेत्? तस्य प्रमात्रधीनत्वात्, कथं वा उपनिषदां तत्र प्रवृत्तिरिति चेत्—उच्यते—शब्दाद्वैतसाक्षात्कारो नाम द्वैतसाक्षात्काराभावः। द्वैतभावनायाः समूलनिवृत्तिरिति यावत्। उक्तसाक्षात्काराव्यवहितपूर्वक्षणपर्यन्तं प्रमाणानां प्रवृत्तिरप्यव्याहतैवास्ति। तादृशावस्थासम्पादनार्थतयैवोपनिषदां चारितार्थ्यम्। ईदृशी एव ब्रह्मणि प्रमाणानां प्रवृत्तिरिति दिक्।

प्रमाणभेदचर्चैषा साध्यचिन्तनिका कृता।
प्रीयतामनया देवी परा वाक् सच्चितिः शिवा॥

शुभम् भूयात्।

# श्रीकरभाष्यं तत्कृतान्ताश्च ।

## हरिदत्तशास्त्री

इदमुपश्रुत्य प्रमोमुदीति चेतः यद्गुणज्ञाः केऽप्यभिनवपतञ्जलेः श्रील-श्रीपण्डितपारीन्द्रस्य विपश्चिद्वर श्रीचारुदेवशास्त्रिणोऽभिनन्दनग्रन्थग्रथनायोद्युञ्जते । वृत्तमदः कर्णाकर्णिकया समाकर्ण्य ममापि मनस्तमभितुष्टूषु लेखमिषेण तमर्चयितु-मीहते । महानत्यक्रामदनेहा यदाऽहं हरिवृत्तिसहितं वाक्यपदीयप्रकाशनमदसीयमद्रा-क्षम् । ततश्च शब्दापशब्दविवेकोऽपि प्रवेकस्य दृष्टिपथमुपाढौकिष्ट । यद्विवेचनममुष्य दोषज्ञतल्लजत्वं महावैयाकरणत्वञ्चानक्षरमाचष्ट । ततश्च कुत्रचिदमीषां महाभाष्य-विवरणमपि लोचनगोचरतामटीकत । तदेषां श्लाघाऽघं लेशतोऽप्यस्पृशतामभिनन्दनं नितरां

"वागजन्मवैफल्यमसह्यशल्यं गुणाधिके वस्तुनि मौनिता चेत्"

इति कवितार्किकश्रीहर्षमहाकवेर्वचनमनुसृत्य स्वहृच्छल्यवैकल्यविधानमेवेति मन्ये । मन्मनीषायां सुतरां नितरामतितराञ्चाभिनन्दनीया एवेमे । भवतु । प्रकृतमनुसरामः ।

नास्त्येतत्तिरोहितमन्तर्वाणीनां यद् वैयासिकसूत्राश्रितवैष्णवभाष्याणामालो-चना कैश्चिद् विपश्चिद्भिर्व्यधायि, परं तदाऽऽश्रितशैवभाष्यालोचनमद्याप्युपेक्षा-कुक्षिकक्षानिक्षिप्तमेवाऽऽस्ते । भाष्याण्येतानि प्रमुखतया शिवमेव प्रमुखं देवं मत्वा प्रवृत्तानि । तत्र औपनिषदं ब्रह्मैव विवेक्तुमेते भाष्यकाराः प्रावर्तन्त, तत्र "शैवं विशिष्टाद्वैतं" विद्वदग्रणीः श्रीमान् श्रीकण्ठोऽतिष्ठिपत्, ततश्च 'शिवाद्वैतं श्रीमान् विपश्चिद्वरोऽप्पयदीक्षितः प्रत्यपीपदत् । अथ च वीरशैवमतसंस्थापकः पण्डितपतिः श्रीपतिः भेदाभेदात्मकं विशिष्टाद्वैतं ब्रह्मसूत्रसाररूपं न्यरूपयत् । कथमुपनिषदां ब्रह्म-सूत्राणां च लक्ष्यो वाच्यो वा भेदाभेद इनि विवेक्तव्यपदवीमध्यास्ते ।

### पण्डितपतिः श्रीपतिः

श्रीकरभाष्यकर्ता पण्डिताराध्यः श्रीपतिः शङ्कर-रामानुज-मध्वाचार्याणां मतमयौक्तिकमित्याह स्म, एवं चास्य १३०० ईशाब्दतः १४०० ईशाब्दमध्यवर्ती जन्मसमयः । अयं च वीरशैवमतसमर्थकात् श्रीवासवात्परस्ताज्जन्माग्रहीष्ट, मत-मिदं श्रीरामकृष्णगोपालभाण्डारकरः "वैष्णविज्म एण्ड शैविज्म" नामके ग्रन्थेऽले-खीत् । अयं भगवत्पादाचार्य-देशिक (अध्यात्मगुरु) पदवीभ्यां शुशुभे । अस्य श्रीकर-

भाष्यं ब्रह्मसूत्राणामगस्त्यवृत्तिमाश्रित्य व्यलिख्यत। यथा शाङ्करभाष्यं वराहसहोदर-वृत्तिं, श्रीरामानुजकृतं श्रीभाष्यं च बोधायनवृत्तिमाश्रयते, तथैवेदमगस्त्यवृत्त्याश्रितम्। अगस्त्यवृत्तिरियमगस्त्यसूत्रेभ्यो नितरां भिन्ना। लिङ्गायतसम्प्रदाय इति वीरशैवमत-स्यैव नामान्तरम्। श्रीश्रीपतिपण्डितानां वासवेशविजये माहात्म्यमित्थमुपवर्णितम्—

प्रसादः पावन इति प्रतिज्ञायाग्निमंशुके।
बद्ध्वा बबन्ध यः शम्पां जीयाच्छ्रीपतिपण्डितः॥

शिवो जगदुत्पादकः, उत्पादकत्वं च पुव्यञ्जनेन व्यज्यते तस्मादिमे लिङ्गायताः तदेव धारयन्ति। अस्मिन् पुंव्यञ्जने भवतु नामान्येषामन्यथा वासना भावना, वीरशैवानां तु श्रद्धा, ध्यान-भक्तिप्रतीकात्मकत्वादस्य, भवत्यस्मिन् धर्मवासना न लौकिकवासना-लेशोऽप्यत्रोदञ्चति। ते मन्यन्ते यद् ऋग्वेदेऽपि लिङ्गार्चनं प्रतिपादितं किन्तु कुत्र मन्त्रे इत्यत्र मेक्डानलभाण्डारकरौ द्वावपि मौनमालम्बेते। महाभारतस्य १०म पर्वणि ७ सप्तमाध्याये उत्तमे पद्ये लिङ्गार्चनमित्यपि प्राहुः।

विकटाऽऽकाललम्बोष्ठ बृहच्छेपाण्डपिण्डक।
शेफसे ते रेतः पातु नान्तरम्—॥

इति च वाक्यं तैत्तिरीयब्राह्मण ३।३३ स्थले प्रतिपादितमुदाहरन्ति। महाभारतोक्तं कृष्णोपमन्युसंवादमप्यत्र प्रमाणयन्ति। भाण्डारकरमतानुसारेणोपाख्यानमिदं दस्युभि-न्नोच्चजातिष्वार्येषु वा लिङ्गार्चास्वीकरणं पुष्णातीति च प्राहुः। भवतु श्रीपतिरयं कृष्णागोदावर्योर्मध्यवर्तिनि बीजावर्ते विद्यावर्ते वा (बैंजवाडाऽभिधाने) स्थाने जन्म लेभे कालधारिनामकेऽग्रहारे। बैंजवाडाग्रामश्च गुण्टूरप्रान्ते वर्तते। आराध्यब्राह्मण-श्चायम्।

अयं स्वभाष्येऽनेकान् न्यायानुदाहार्षीत्तेषु कतिचिदिमे :—

१. आग्नीध्रशालान्यायः। २. निषादस्थपतिन्यायः।
३. अयस्कान्तसूचीन्यायः। ४. अन्धसन्ध्यान्यायः।
५. अर्थिसार्थो विवादे नाधिक्रियते इतिन्यायः। ६. गोबलीवर्दन्यायः।
७. छागपशुन्यायः। ८. नदीसमुद्रन्यायः।
९. बीजाङ्कुरन्यायः। १०. भ्रमरकीटन्यायः।
११. शाखाचन्द्रन्यायः। १२. सौधसोपानन्यायः (भामतीकार-मते सोपानारोहणन्यायः)
१३. रात्रिसत्रन्यायः। १४. समक्षप्रवातन्यायः, इत्येवमादयः।

तत्र भ्रमरकीटन्यायमयम् अष्टादशवारान् प्रयुङ्क्ते। स्थूलारुन्धतीन्यायं च द्वादशधा। इति।

एतन्मते ब्रह्मविष्ण्वादयः पशवः, पशुपतिश्च शिवः। लिङ्गरूपेण शिवधारण-मेव देवधारणम्। अयमेव छन्दसामृषभः। "लिङ्गमध्ये जगत्सर्वम्" 'लिङ्गं ब्रह्मैव

केवलम्' इत्यादिवाक्यानि हंससंहितारुद्रसंहिताकठवल्ल्यादिषु प्रयुज्यमानानि शिवस्यैव जगत्कारणतामामनन्ति । एतदेव मोहेञ्जोदारो-स्थानोपलब्धलिङ्गपूजायाचिन्हैरपि विशदीक्रियते । येनेदं सिद्धयति यत् शिवपूजेयं कालप्रभावात्परीवर्तमुपेता । शैवमत-मिदं नकुलीशपाशुपतमतप्रभावितमिति केचिदाहुः, तथा चेदं प्रतिभात्यंशतः, यतो वैष्णवमतं दासतायुक्तं परतन्त्रम् । इदन्तु—मुक्तात्मानः परमेश्वरगुणसम्बन्धिनः पुरुषत्वे सति समस्तदुःखबीजविधुरत्वात्, परमेश्वरवदित्यनुमित्सापरं पञ्चार्थप्रपञ्चनपरं पाशुपतशास्त्रमाश्रयते, पाशुपतसूत्रेषु सूत्रमिदं प्रथते—अनुस्नाननिर्माल्यलिङ्गधारीति । अत्र च पावित्र्यहेतुषु लिङ्गधारणमप्युक्तं तदेव च वीरशैवैः स्वीक्रियते तस्माद् व्यक्तः प्रभावः ।

## शिवो ब्रह्मेत्यनर्थान्तरम्

श्रीपतिमते ये गुणाः परे ब्रह्मणि ते सर्वे परे शिवे सदाशिवे वा सन्ति । ये चान्ये ते सर्वे शिव एवं, तन्मते 'आत्मन आकाशः सम्भूतः' इत्यादिश्रुतिरौपनिषदी साक्षादभिधावृत्तिमाश्रयते । स च—

> अष्टादशानामेतासां विद्यानां ब्रह्मवर्तिनाम् (?) ।
> अधिकर्ता शिवः साक्षात् शूलपाणिरिति श्रुतिः ॥१॥
> साद्योजातेन ऋग्वेदं वामदेवेन याजुषम् ।
> अघोरेण तथा साम पुरुषेणास्त्वथर्वण१ (?) ॥२॥
> ईशानेन मुखेनैव कामिकाद्यागमं तथा ।
> जनयामास विश्वेशः सर्वसिद्धिप्रदायकः ॥३॥
> विमर्शरूपिणी शक्तिः शिवस्य परमात्मनः ।
> निगमागमरूपा स्यात् सर्वतत्त्वप्रकाशिनी ॥४॥
> तस्माद्वेदागमार्थेषु यः कुर्याद् भेदभावनाम् ।
> स सहस्रकुलं घोरे नरके पतति ध्रुवम् ॥५॥

शिवात्मका एव वेदाः शब्दज्ञानादिरूपत्वेऽपि नित्याः । ते वेदानां चतुर्मुखप्रभवत्वं अग्निवायुरविप्रभवत्वं वा नोरीकुर्वते, वदन्ति च यद् अग्निवायूत्पत्तेरपि ब्रह्मणश्चापि प्राग् वेदाः 'यो ब्रह्माणं विदधाति पूर्वम्' इत्यादिवचनेभ्योऽवस्थिता आसन् शिवे, अतः शिव एव वेदस्य जगतश्च प्रभवः ।

## भेदाभेदसिद्धान्तः

श्रीपतिभाष्यं वीरशैवेभ्यः, रामानुजभाष्यं श्रीवैष्णवेभ्यः आनन्दतीर्थ-भाष्यं सद्वैष्णवेभ्यो माध्ववैष्णवेभ्यो वा, शाङ्करभाष्यं स्मार्तेभ्यो निरमीयत । श्रीमान् श्रीकण्ठः शुद्धशैवधर्मं श्रीपतिश्च वीरशैवमतं प्राचीचरत्, श्रीकण्ठभाष्यं श्री-मद्भिरप्पयदीक्षितैर्व्याख्यातं टीकितं वा, श्रीकण्ठः स्वमतं विशिष्टाद्वैतशब्देनापि निर्वक्ति । श्रीपतिश्रीकण्ठौ यद्यपि शैवौ तथापि श्रीपतिः शैवविशिष्टाद्वैतं शाङ्कराद्वैत-सम्पृक्तं नतरां स्वीकरोति । रामानुजमते सूत्रकारः सप्तभङ्गीनयं भेदाभेदञ्चैकपद

एव निरास्थत्, "नैकस्मिन्नसम्भवादि' ति सूत्रयन्। श्रीपतिस्तु एकस्मिन्नसम्भवाधिकरणे—अनन्तरोक्तसूत्रादग्रे स्वमतसिद्धचर्थमेवं च चात्मानित्यत्वम् (१) शरीराणाञ्चानवस्थितपरिमाणत्वात् (२) न च पर्यायादप्यविशेषो विकारादिभ्यः (३) अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः (४) इति चत्वारि सूत्राणि भेदाभेदसाधकानि वदति। यतः शङ्कर, भास्कर, रामानुज, श्रीकण्ठ आनन्दतीर्थ, निम्बार्क, वल्लभ, विज्ञानभिक्षवो द्वितीयं शरीराणामित्यादि सूत्रं स्वभाष्येषु न प्रस्तुवन्ति। वादरायणसूत्राणि न पाणिनिसूत्राणीव प्रक्षेपविक्षेपशून्यानि। सूत्रैकभागं कश्चित् पूर्वसूत्रेण युनक्ति कश्चित् परसूत्रभागेन। प्रतिज्ञाविरोधादिति सूत्रं (१।१।६) श्रीपतिरामानुजौ स्वीकुरुतः, परम् अतएव च स ब्रह्म (१।२।१६) इतिसूत्रं रामानुजोऽनुजज्ञौ, शङ्करानन्दतीर्थश्रीपतयश्चेदं निरास्थुः। प्रतिज्ञाऽनुपरोधाच्चे (२।४।३) ति सूत्रस्यापीयमेव स्थितिः। मुक्तेश्च (२।३।१९) यथेतदनेवं च (३।१।६) इमे सूत्रे आनन्दतीर्थभाष्यमेवालं कुर्वाते। पूर्ववृत्तेश्चे (२।२।२) ति सूत्रं शङ्करानन्दतीर्थभाष्ययोरुपलभ्यते न श्रीपतिरामानुजयोः। भवतु। जीवब्रह्मणोर्भेदं दहरमेवान्तरं श्रीपतिरुपस्कुरुते। नदीसमुद्रवत् भ्रमरकीटवत्, छायाऽऽतपवत्, तमः प्रकाशवच्च साधनीयम्। द्वादशाहवदुभयविधम् (४।४।१२) इतिसूत्रं वादरायणस्य प्रमाणयति। अतएव दुर्वासीयनामकग्रन्थे लिखितम्:—

> अनाद्यविद्यया बद्धं ब्रह्म तत्कालकारणम्।
> स्वाविद्यया संसरति मुक्तिः कल्पितवाक्यतः॥
> एवं प्रतारणं शास्त्रं सर्वमाहात्म्यनाशकम्।
> उपेक्ष्यं शिवभक्तैस्तु श्रुतिस्मृतिविरोधतः॥ इत्यादि।

श्रीपतिः षट्स्थलाभिधानं ग्रन्थमेकमलिखत्, यत्र ध्यानादीनि षट् स्थलानि प्रतिपादितानि। तान्येव मुक्तिसाधनानि, तदुक्तम्:—

"जीव एव भवेच्छम्भुः क्रिमिवत् कीटचिन्तनात्" इति श्रीपतिः रामानुजवद् द्वैतमङ्गीकुरुते। तदीयमद्वैतं केवलं नित्यं शिवसारूप्यं तत्सामीप्यं तद् भोगमात्रं वा। मुक्तौ सारूप्ययुक्तिमात्रं न तु जीवस्याऽपूर्णत्वं, अशक्तत्वं, अस्वातन्त्र्यञ्चापैति। माध्वास्तु पञ्चभेदवादिनः—तथाहि—१—जीवानां परस्परभेदः। २—जीवेश्वरभेदः। ३—जडानामचेतनानां वा परस्परभेदः। ४—ब्रह्मजडयोर्भेदः। ५—जीवजडयोर्भेद इति। इमे पञ्च भेदा अनपायिनः। श्रीपतिस्तु ४।४।२२ सूत्रे ब्रूते "जीवेश्वरयोः संसारदशायां स्वाभाविकं भिन्नत्वं, मोक्षदशायां तद्वदभिन्नत्वं ब्रह्मणो मूर्तामूर्तत्वात्। श्रीपतिर्जगन्मिथ्यात्वं शङ्करवन्न मनुते। रामानुजवदयं चेतनाचेतने नेश्वररूपे मन्यते। आनन्दतीर्थवन्मोक्षेऽपि जीवस्य भिन्नत्वमेवास्तीति न स्वीकरोति यद्यपि स्वीकरोतितद्वत् जीवेश्वरप्रवृत्तीनामनादित्वम्। श्रीकण्ठस्य विशिष्टाद्वैतमपि तिरस्करोति। किन्तु चेतनाचेतनजगति कर्तृत्वं ब्रह्मण्येव मनुते। एतच्च २।३।१ सूत्रव्याख्यायां स्पष्टीकृतम्। अत्रैव च स श्रुतिवाक्यानि कानिचित् पूर्वपक्षरूपेण कानिचिच्चोत्तरपक्षरूपेणेति

रामानुजशङ्करोक्तमपि भिनत्ति, तन्मते सर्वाणि वाक्यानि सिद्धान्तरूपाण्येव। तेषां समन्वय एव भेदाभेदात्मकविशेषाद्वैते। शिवस्य परोत्कृष्टत्वं तस्यैव च परब्रह्मत्वमसावातिष्ठते। देवराजस्य (द्वितीयस्य) राज्ये (१४२३-१४४६) ईशाब्दे विजयनगरीयराजानां वंशजाः वीरशैवविदुषां ग्रन्थाननेकान् प्राकाश्यमापिपन्—यथा श्रीमहालिङ्गदेवस्य एकोत्तरषट्स्थलम्, षट्स्थलविवेकश्च। श्रीलक्ष्मणदण्डेशस्य शिवतत्त्वचिन्तामणिः। श्रीकुमारवङ्कनाथस्य षट्स्थलोपदेशः। श्रीचामरसस्य प्रभुलिङ्गलीलेत्यादयः। अस्य भेदाभेदे सगुणनिर्गुणयोः यथार्थवादादर्शवादयोः सामञ्जस्यं स्थाप्यते—भेदः संसारदशायामभेदो मोक्षे, अतश्च भेदाभेदात्मको विशेषाद्वैतपक्षोऽस्य लोकेभ्यो वीरशैवानुयायिभ्यो रोचते। शिवत्वं भ्रमरकीटन्यायेन-उपासनाध्यानधारणाभिः, दर्शनेन (सत्यविवेकेन) श्रवणेन (गुरूपदेशेन) निदिध्यासनेन (समाधिना) चेतिषट् स्थलेन लभ्यते। षट् स्थलानि सामरस्यं शिवाभिन्नत्वमुपपादयन्ति। इमानि षट् सोपानानि (stages) १—भक्ति २—महेश (महेशदर्शनोत्कण्ठा) ३—प्रसाद, ४—प्राणलिङ्ग, ५—सारण ६—ऐक्यरूपाणि षट् स्थलानि परिभाष्यन्ते। प्राणलिङ्गपदे लिङ्गं दृश्यशरीरं (gross or visible body)। मोक्षेऽपि मुख्यत्वं परमशिवे ब्रह्मण्येव, मुक्तास्तु मोक्षेऽपि तदाराधनतद्दर्शनपरा एव सन्तिष्ठन्ते। एतादृशोऽयं भेदाभेदः श्रीश्रीपतिमते। एतद्विषये साधकबाधकयुक्तिप्रमाणादि परस्ताद् वक्ष्यामः। तथापि—श्री० सी० हयवदनरावमहोदयेन यदुक्तमत्र विषये तदपि तद् भाषयैव श्रोतुमर्हन्ति सन्तः। तथा हि :—

1.3 "It may be urged that Śrīpati is unable to distinguish between philosophy and religion. But the answer should be that if the perfectly real can alone be perfectly known, and if to know Brahman, the perfectly real Being, is eternal life, the goal of philosophy is the same as the goal of religion—perfect knowledge of the perfect. Nor can a man's philosophy be completely separated from his religion. Sripati's realism, shows us the way to bridge the dilemma of idealism and realism, a dilemma which still confronted the philosophical controversies of his time. In declaring all realism to be ideality, idealism does not, according to him, imply that objectivity is a subjective illusion or that the framework and contact of the universe is such stuff as dreams are made of; on the contrary, it affirms in his view that the real is the ideal because only the ideal is concrete, and every attempt to set up the object as reality in complete independence of the subject of experience is vain. Success could only be, as has been well put, the hypostatization of an abstraction. Abstractions are not unreal in the absolute sense, but it is in their claim to independent reality that the antinomies of ordinary thought arise. Srīpati thus makes the

great historical development of philosophical speculation known as the Bhedābheda, which, as we have seem, has its roots deepdrawn in the Sūtras themselves. In him we recognize the wonderful philosophical abilities of the mediaeval Indian theologian combined with the abilities of a philosopher who tries to harmonise Realism with Idealism. He endeavours to exhibit truth and reality, as he sees them, in the light of the criterion which is the positive non-contradictory whole. His philosophy must have taken its form and colour from what he must have most deeply made his own in life; or rather what he most deeply made his own in life was selectively determined by the same leanings and impulses which his philosophy has expressed in no uncertain fashion. The position which Bheda in his conception holds is of interest in determining the range that Abheda holds in it. Abheda, as we have seen, is criticized at great length by him, its various constituent parts being attacked by him in no uncertain voice. But the basic principle of Abheda—the oneness, the unity of the whole universe, the maker and the made—is never lost sight of by him. Like Plato, he not only confirms the dualism of "this" world and "the other", but also possionately strives to demonstrate the unity of things, the unity of the universe. इति ।

## काश्मीरिकस्पन्दप्रत्यभिज्ञादर्शनयोर्भेदाभेदः ।

स्पन्ददर्शनं श्री वसुगुप्तो नाम विद्वान् A.D. नवमशतकोद्भवः प्रातिष्ठिपत् । श्रीमदभिनवगुप्तपादाश्च प्रत्यभिज्ञादर्शनमदर्शन् । अभिनवगुप्तश्च A. D. १० मशतकमलंचकार । द्वयोरप्यनयोर्दर्शनयोर्जगदुत्पत्तिः शिवस्य महेश्वरस्य सिसृक्षावशादेव भवति । न हि स भगवान् जगन्निर्माणाय कर्म वा प्राणिविहितं प्रधानं वा कापिलमपेक्षते । अनल्पविकल्पनामूलं मायामपि सदसद्भ्यामनिर्वाच्यां न कोऽप्यनयोः स्वीकुरुते । श्रीपतिवदिमावपि मायायै द्रुह्यतः। माति प्रलये जगदस्यामिति व्युत्पत्त्या मायाशब्दो शिवपर्याय एव । रामानुजवदचेतनजगदात्मकत्वमपि भगवतस्तौ नोरीकुरुतः । भगवान् संकल्पमात्रेण स्वस्मिन् जगदाभासयति । जनाश्च जगत् ततोऽभिन्नमपि भिन्नमिव प्रतियन्ति । तेन जगता भगवान्न स्पृश्यतेऽण्वपि । यथा दर्पणे प्रतिबिम्बानि न दर्पणं विकुर्वन्ति तथैव शिवोऽपि प्रतीतिमात्ररूपेण जगता न संसृज्यते । जीवोऽयं शिवप्रतिरूपः । स्पन्दनादेव भजते शिवरूपताम् । स्पन्दनमिदं गुरुप्रतिच्छन्दनापेक्षं शिवानुग्रहाधीनं वा । मलापचयोऽयमनादिरात्मनि यदा स्पन्दते क्षरति तदैव जीवः शिवरूपतामात्मनः संजानीते । मलापाकरणं च स्पन्दशास्त्रोक्तध्यानपरिकर्मादिना साध्यम्, समाधिसाधिम्ना वा । समाधिना निश्चलध्यानेन

निः स्पन्दो जीवः भगवद् रूपदर्शनात्मकतां स्वात्मनो ज्ञातुं स्पन्दते प्रभवति । मलोच्छेदोऽपि भगवदनुग्रहात्तस्मिन्नात्मार्पणादेव । यथा गीतासु गीतवान् शिवाभिन्नो 'हरिः'—क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति । यदा मलैर्विरहितो जीवो भवति तदा निर्मलः केवली शिवः सम्पद्यते । कर्माशयवासनाश्च न तं स्पृशन्ति ।' ईदृशमिदं स्पन्दकृतस्य शास्त्रस्यामन्दनिष्पन्दजातम् इति । प्रत्यभिज्ञादर्शने तु संभवतीदमैक्यं प्रत्यभिज्ञाया (Recognition) वलेनैव । सांसारिकदशायां वर्तमानो जीवः स्वस्वरूपमनुभवितुं न शक्नोति । सत्यपि शक्तिर्जीवस्य सिंहाजसंवर्धनन्यायेन तिरोभूता तिष्ठति । गुरुकृपापीयूषविन्दुरसास्वाद एव तस्मै विमुद्रयति शिवात्मकताम् । भवति च शूलपाणिपदपाथोजप्रसृमरामन्दमाध्वीकधारासम्पातायातप्रभावलिसमालिङ्गताङ्गो धरणौ । नास्ति काचित् क्रिया प्रत्यभिज्ञासाध्येति न शङ्क्यम् । याह्यर्थक्रिया वाह्यरूपभिन्ना, केवलं प्रीत्यादिरूपा सा प्रत्यभिज्ञानमपेक्षते एव । यथा नायकमपरिचिन्वती काऽपि नायिका दूतीवचनात्तं परिचिनोति—न तु जनसार्थवर्तिनं पार्श्वे परिचरन्तमपि वेत्ति, तथैव स्वात्मनि विश्वेश्वरात्मना भासमानेऽपि तन्निर्भासनं तदीयगुणपरामर्शविरहसमये गुणाधिकरणाऽज्ञानात् नासादयति पूर्णभावम् । यदा तु गुरुकृपाऽपारवृष्टिसृष्ट्या विध्वस्तस्वात्ममलतिरस्करणीकः सर्वज्ञत्वसर्वकर्तृत्वलक्षणं परामर्शं शिष्यः स्वस्मिन् तनुते तदा पूर्णात्मतालाभो भवति । तदुक्तमभियुक्तैः—

> तैस्तैरप्युपयाचितैरुपनतस्तस्याः स्थितोऽप्यन्तिके,
> कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा ।
> लोकस्यैष तथाऽनपेक्षितगुणः स्वात्मापि विश्वेश्वरो
> नैवायं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता ॥

इद च शास्त्रं श्रीसोमनाथानन्दपादैः उदयाकरसुनु—उत्पलाचार्यप्रभृतिभिः समुपबृंहितं प्रचारातिशयमलब्ध । ते चात्र प्रवृत्तिं तस्यैवमाचक्षतेः—

> योऽधीती निखिलागमेषु पदविद्यो योगशास्त्रश्रमी,
> यो वाक्यार्थसमन्वये कृतरतिः श्रीप्रत्यभिज्ञामृते ।
> यस्तर्कान्तरविश्रुतश्रुततया द्वैताद्वयज्ञानवित्,
> सोऽस्मिन् स्यादधिकारवान् कलकलप्रायः परेषां रवः ॥ इति ।

एवञ्च शैवानुसारिणोरनयोरपि मतयोः सारूप्यलाभः तद्रूपताऽऽपत्तिर्वा नैकान्ताद्वैतं सिद्धान्तयति, किन्तु श्रीपतिप्रोक्तभेदाभेदमेव श्रयते । नहि प्रत्यभिज्ञानस्पन्दयोः क्रिया जीववर्तिनी जीवं तत्क्रियाविरहितं कदापि सम्पादयतीति सर्वं विशदम् ।

## पाश्चात्यदार्शनिकेषु भेदाभेदवादः

ईशवीये द्वादशे शतके श्रीवासवाचार्यैर्वसवाचार्यैर्वा यो भेदाभेदक्षुपः प्रत्यारोपितः स एव श्रीपतिना संवर्धितः सन् पुष्पितः पल्लवितः फलितश्चाभवत् । हिब्रू-

लेखकैराध्यात्मिकविचारा ये भारतीयविचारप्रभावितैरुदलिख्यन्त, यांश्च डेस्कार्टिस (Descartes) प्राकाशयत् त एव दार्शनिकजगतः पाश्चात्येषु पितृपदवीमादधता स्पिनोजा (Spinoza) विदुषा प्राचार्यन्त। स एव जगति एकात्मकतां (Unity) सिद्धान्तयामास। इदञ्च ऐक्यम् ईश्वररूपेण वास्तविकपदार्थरूपेण वा शक्यमनुभवितुम्। ये गुणाः यानि वा रूपाणि जगति लक्ष्यन्ते, ते तानि वा भेदवन्ति सन्त्यपि वस्तुतो न भिद्यन्ते। वयं वस्तुनो वृद्धिं पश्यामः, विचारांश्चोहापोहरूपान् विमृशामः। द्वयमिदं (Extension and thought) न प्रत्यक्षम्। हेगलः (Hegel) (१७७०-१८३१) यद्यपि समालोचयति स्पिनोजां तथापि तमेवानुसरति। अत एव स आधुनिकपाश्चात्यदार्शनिकानां जनकपदं बिभर्ति। द्वावपीमौ यत् सादृश्यं (identity) परस्परं भिन्नेषु पदार्थेषु पश्यतः—सोऽयं भेदाभेदः। अयं प्रतिवस्तु पाश्चात्यदार्शनिकप्रतिपाद्यमानेषु वस्तुषु प्रतीयते। स्पिनोजामते कीदृश आत्मा ? कीदृशी प्रकृतिः ? कीदृशानीन्द्रियाणि ? किमात्मकं वपुः ? इत्यादि सर्वं न साम्प्रतकालम्। (Bruno) (ब्रूनो) बेकन (Bacon) प्लेटो मतानुयायिनश्च—स्पिनोजासिद्धान्तमनुसरन्ति। श्री (Pollock) पोलकमहोदयः स्पष्टं व्यलिखत्—"The East has a considerable share in the portion of Spinoza's materials" इति। श्री मैलमीड (Melamed) नामको विद्वान् 'स्पिनोजा तथा बुद्धः" इतिपुस्तके तम् उपनिषद्भिः बुद्धस्य भगवतो विचारैश्च प्रभावितं वदति। स स्पिनोजां वर्णयन् "The greatest occidental representative of Eastern mysticism" इत्यादि वचनैः भारतीयतां तस्य ख्यापयति। श्रीमेलमैडमहोदयो बहुत्र प्राशंसीद् भारतीयान्, तत्प्रभावितं स्पिनोजां च। तथाहि—

"Hinduism in its Buddhistic form finally over-whelmed the western world, not because its world-idea was inherently superior to that of the Greeks or the Hebrews, but because being passive and still from the very beginning, it had not spent itself as did the other two world-concepts. With death as its goal it could not die, for nothing is more immortal than the cemetery."

एवं च स्पिनोजां यन्मतमाश्रयते सोऽयं द्वैताद्वैतवादः, न विशिष्टाद्वैतवादः, नापि द्वैतवादः किन्तु श्रीपतिस्थापितो भेदाभेदात्मको विशेषाद्वैतवादः। वल्लभस्य शुद्धाद्वैतवादः पुष्टिमार्गसिद्धान्ताऽऽङ्कोऽपि श्रीपतिमतिकृतिसृतिमनुसरति। नतरामद्वैतमिति तस्मादात्मचिन्तनधर्मैराश्रयणीयोऽयं पन्थाः। यदुक्तं सी. आइ. ई. महामहोपाध्याय श्रीगङ्गाधरशास्त्रिभिर्हंसाष्टकस्य द्वितीये पद्येः—

मृत्पिण्डं नीडमाप्याऽस्थिरचितमनिलान्दोलितं रन्ध्रपूर्णं
हंसाश्रित्य प्रमाद्यंस्त्यजसि यदि सुखावाप्तिहेतुं विचारम्।
वर्षैरल्पैरमुष्मिन् विदलति वितथीभूततत्स्थैर्ययत्नो
विस्मृत्योच्चैर्गतिं स्वां त्वमशरणतयाऽधः पतन् शोचितासि॥

एवं संक्षिप्य प्रदर्शितः श्रीपतेः पन्थाः । यदीममपरिज्ञाय कश्चित् परिहरति तदाऽम्लद्राक्षाश्रृगालन्यायमेवानुहरति—नैतावता प्रतीमः पन्थाः कन्थायते । इत्यलं बहूक्त्वा क्षोदक्षमविषयेऽस्मिन् । अम्लद्राक्षाश्रृगालन्यायश्चेत्थं परिज्ञेयः, तमेवोक्त्वा विरम्यते:—

द्राक्षामनोकहगतां नरबाहुलभ्यां
थूत्कृत्य याति यदलब्धफलः श्रृगालः ।
का हानिरस्ति नरनाथ वनोद्भवायाः
तस्यास्तु साधुजननीतमहार्घतायाः ॥ इति ।

॥इति शिवम्॥

# मध्व-मत में जगत्-तत्त्व की सत्ता

कृष्णकान्त चतुर्वेदी

मध्व-मत अपनी तात्विक मान्यताओं में यथार्थ है। इसीलिये मध्व-पत में स्वीकृत जगत् वास्तव है। जगत् की सत्ता प्रत्यक्ष अनुमान एवं श्रुति के द्वारा स्थापित करने का प्रयास किया गया है। द्वैत में ज्ञान के उपकरण के रूप में साक्षी का भी ग्रहण किया है। सामन्यतः इन्द्रियों से उत्पन्न ज्ञान सत्य एवं प्रामाणिक माना जाता है। वेदान्त में प्रायः सभी मतों में ज्ञान का स्वतः प्रामाण्य है। द्वैत, अद्वैत विशिष्टाद्वैत इसी मत के अनुग्राहक हैं।[1] किन्तु प्रामाण्य, विषय के बाधित होने के बाद नहीं रहता।[2] अतः प्रामाण्य के साथ ही जगत् का सत्यत्व भी सम्बद्ध है।

'जगत्' की सत्ता के प्रश्न पर शंकर और मध्व में गम्भीर मतभेद है। प्रस्तुत प्रकरण में शंकर सम्मत विवेचन प्रस्तुत करके मध्वकृत खण्डन उपस्थित करना अधिक संगत होगा। 'जन्माद्यस्य यतः' सूत्र की व्याख्या में शंकर ने जगत् की प्रकृति का विवेचन किया है।[3] 'जगत्' अविद्याकृत है। इसी के कारण वस्तु में अवस्तु का बोध होता है। 'जगत्' की उक्त प्रतीति, सत्तात्मक तभी तक है जब तक कि ब्रह्म-साक्षात्कार नहीं हो जाता। अन्य अनेक स्थानों पर शंकर ने इसी तथ्य का प्रतिपादन किया है।[4] प्रवाहवती जलधारा अथवा दीप की ज्योति के समान 'जगत्' क्षणिक है। देखा जा रहा हैं, तभी तक है उसके बाद नष्ट है।[5] इस प्रकार के तथा अन्य अनेक विवेचनों के द्वारा अद्वैत-मत में 'जगत्' को अधिकाधिक रूप में भ्रमजन्य प्रमाणित किया गया है। जो मत अद्वय रूप में केवल ब्रह्म की ही सत्ता अत्यन्ततः स्वीकार करता है, स्वभावतः उस मत में जगत् की सत्ता ही न मानी जानी चाहिए। मृत्तिका के अतिरिक्त घटादि वास्तव में सत् नहीं है।[6] जगत् की सत्ता का अबाध्य प्रमाणीकरण, निश्चित रूप से ब्रह्म की अद्वयता का बाधक होगा।[7] यदि 'जगत्' सत्य है तो उसे ब्रह्म से भिन्न दूसरी सत्ता के रूप में मानना होगा।

१. डा० बी० एन० के० शर्मा, फिलासफी आफ श्री माध्वाचार्य, पृ० १३७।
२. व्यासतीर्थ—"न हि विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणं नाम।" न्यायामृत, पृ० १४२।
३. शंकर—ब्रह्मसूत्र भाष्य, पृ० ७।
४. शंकर—कठोपनिषद् भाष्य, २।३।१।
५. शंकर—"न रूपमस्येह यथा वर्णितम् तथा नैवोपलभ्यते। स्वप्नमरीच्युदकमायागन्धर्वनगर-समत्वाद्, दृष्टनष्टस्वरूपो हि सः। अत एव नान्तो न पर्यन्तो निष्ठा समाप्तिर्वा विद्यते। भगवद्गीता भाष्य, १५।४।
६. शंकर—"विवेक चूड़ामणि, श्लोक सं० २३१।
७. वहीं—श्लोक संख्या २३४।

शंकरोत्तर विचारकों ने एतदर्थ कतिपय तर्कों का उपयोग किया है। विषय और विषयी का पारस्परिक सम्बन्ध एवं उनके भेद के आधार पर 'जगत्' का स्वरूप अनिर्वचनीय हो जाता है। अद्वैत मत मे विषय और विषयी का बोध आध्यासिक है, अतः स्वभावतः उनको 'जगत्' का मिथ्यात्व स्वीकार करना होगा।[1]

श्वेताश्वर उपनिषद् के अनुसार ज्ञान का उद्देश्य जगत् की माया की निवृत्ति है।[2] छान्दोग्य में प्रतिपादित है कि एक ज्ञान के प्राप्त कर लेने से सभी कुछ जान लिया जाता है।[3] ज्ञान से किसी वस्तु की निवृत्ति तभी सम्भव है, जब वह वस्तु निर्वचनीय हो। उसी प्रकार से एक के ज्ञान से ही सर्वज्ञान प्राप्त होना भी, अन्य सभी वस्तुओं के एक में विलीन होने की मान्यता के ग्रहण करने पर ही सम्भव है। यदि अनेक विषय वास्तव होंगे, तब उनका ज्ञान सर्वतो-व्याप्त कैसे होगा ?

गौड़पाद की कारिकाओं नें जगत् मिथ्यात्व को स्थापित किया गया है। उन्हीं तर्कों का परवर्ती विचारकों ने भी उपयोग किया है। गौड़पाद का प्रश्न है कि क्या जाग्रत अवस्था में उपलब्ध जागृतिक अनुभूनि सत् है ? तब उसे 'सत्' की इस परिभाषा, कि सत् अविरोध्य होता है, से सिद्ध होना चाहिए। किन्तु जाग्रत, स्वप्न एवं सुषुप्ति इन तीन अवस्थाओं में ग्राह्य विषय बाध्य होते है। केवल तुरीयावस्थागत बोध अबाधित प्रमाणित होता है। इसी अवस्था के आधार पर जाग्रत अवस्था का बोध बाधित प्रमाणित है।[4] जिस प्रकार जाग्रत अवस्था में स्वाप्नबोध मिथ्या प्रतीत होता है, ठीक उसी प्रकार से स्वप्नावस्था में समस्त जाग्रत अवस्थागत बोध मिथ्या हो जाते हैं।[5] इस प्रकार अनुभव का विषयत्व विषय-विषयिगत द्वैत तथा आद्यन्तरूप कालावधि, के आधार पर जगत् सत्यत्व का खण्डन गौड़पाद ने किया है। स्वाप्न एवं जाग्रत प्रतीतियां मायाकृत होने से मिथ्या हैं।

अनुमान के रूप में उक्त तर्क को रखने का प्रयास शंकर ने अपने भाष्य में किया है—

(१) जाग्रत अवस्था के विषय मिथ्या हैं। (प्रतिज्ञा)
(२) क्योंकि वे दृश्य हैं। (हेतु)
(३) स्वाप्न-अनुभव के विषयों के समान। (उदाहरण)
(४) जाग्रत-अवस्थां के विषयों की दृश्यमानता स्वाप्नविषयों की दृश्यता के समान है। और स्वप्नगत विषयों का मिथ्या होना पूर्व प्रमाणित है। (प्रत्यक्षतः)
(५) अतः जाग्रत-अवस्था के विषयों का बोध भी मिथ्या है।[6]

१. डा० ए० के० नारायण—क्रिटीक आफ मध्व रेफूटेशन आफ वेदान्त, पृ० २४१।
२. "भूयश्चान्ते विश्वमायानिवृत्तिः।" श्वेताश्वतरोपनिषद् १।१०।
३. छान्दोग्योपनिषद् १।१।५।
४. गौड़पाद—माण्डूक्यकारिका १।१५।
५. गौड़पाद—२।४६।
६. शंकर—माण्डूक्यकारिका भाष्य २।४।

अनुमान में पक्षधर्मता और व्याप्ति का विचार आवश्यक है। उक्त अनुमान में दृश्यता और मिथ्यात्व की व्याप्ति होनी चाहिए। अन्वयव्याप्ति की दृष्टि से जहां जहां दृश्यता है वहां वहां मिथ्यात्व है, जैसे स्वप्न, शुक्ति रजतादि प्रतीतियां, इन सम्पूर्ण उदाहरणों में दृश्यता और मिथ्यात्व की व्याप्ति का प्रसंग उपलभ्य है। यह केवलान्वयी व्याप्ति का उदाहरण है क्योंकि यहां व्यतिरेक व्याप्ति का उदाहरण प्राप्त नहीं होगा।[1] जो कुछ भी उदाहरण के रूप में उपस्थित किया जायेगा वह सभी मिथ्या होने के कारण साध्य-स्थानीय होगा। अनुमान में साध्य संदिग्धस्थिति में रहता है। अनुमान-क्रिया के उपरान्त ही वह निःसंदिग्ध रूप से साबित होगा। अतः प्रक्रिया के मध्य में साध्य को उदाहरण बनाना उचित नहीं है। साथ ही केवलान्वयी से भी साध्य-सिद्धि सम्भव है। यह आवश्यक नहीं है कि सिद्धि के उपरान्त व्यतिरेक-व्याप्ति का ग्रहण किया ही जाये। अतः जगत् का मिथ्यात्व केवलान्वयी हेतु से ही सिद्ध हो गया। व्यतिरेकव्याप्ति की वहां न तो स्थिति ही है और न उपयोगिता।

मध्व ने उक्त अनुमान का खण्डन तीन आधारों पर किया है। पक्ष, हेतु एवं साध्य-गत दोष।

पक्ष के आधर पर मध्व का कथन है कि अनुमान के प्रस्तुत प्रसंग में आश्रया-सिद्ध नामक दोष है। यदि 'जगत्' की जाग्रत अवस्था के विषय वस्तुतः मिथ्या हैं, तब साध्य के रूप मैं 'मिथ्यात्व' के ग्रहण का उपयोग ही क्या है ? जिस प्रकार से 'गगनकुसुम की सुरभि' के अनुमान के द्वारा प्रमाणित करने में आश्रय गगन कुसुम की असिद्धि के कारण अनुमान का प्रयोग ही नहीं हो पायेगा। उसी प्रकार शंकरमत में भी "विश्व का मिथ्यात्व" अनुमान से प्रमाणित करना सर्वथा निरर्थक है।

अद्वैत मतानुयायियों का इसके विरुद्ध कथन यह है कि अवास्तव और मिथ्या में अन्तर में अन्तर है। 'जगत्' सत्ता और असत्ता के रूप में निर्वचनयोग्य न होने के कारण ही मिथ्या है। मध्व का तर्क, 'जगत्' के 'सत्' को स्थायी या परमार्थिक रूप से सत् मानने के कारण, प्रवृत्त हुआ है; किन्तु यदि अनिर्वचनीयता से युक्त 'जगत' का मिथ्यात्व अनुमानकारी अभीष्ट है, तो यहां अप्रसिद्ध-विशेषणतानामक दोष होगा। साध्य का स्वरूप स्पष्ट रूप से स्थिर होना चाहिए। उसमें किसी प्रकार का तिरोधान अनपेक्षित है।[2]

हेतु 'दृश्यत्व" भी शंकर-मत में अवास्तव होने से असिद्ध है। दृश्यत्व एवं 'मिथ्यात्व' की व्याप्ति के ग्रहण में मध्व ने विरुद्ध, अनैकान्तिक सोपाधिक, अनध्य-वसित कालात्ययापदिष्ट दोष निर्दिष्ट किये है।

१. वेदान्तपरिभाषा, पृ० ८३।
२. जयतीर्थ—मिथ्यात्वानुमानखण्डन टीका, पृ० २।
३. व्यासतीर्थ—न्यायामृत, पृ० ४६-५०।

अनुमान के प्रसंग में सपक्ष के अभाव होने से 'विरुद्ध' नामक हेतु-गत दोष आपतित होता है। अद्वैत-मत में अनिर्वचनीयत्म को मान लेने पर सपक्ष का अभाव प्राप्त होता है।[1] यदि सपक्ष नहीं है, तो हेतु की स्थिति विपक्ष में भी होगी। इस प्रकार अप्रत्यक्ष रूप से सपक्ष का अभाव विरुद्ध हेतु की स्थिति प्रमाणित करता है। अनिर्वचनीयता को मध्व-मत में पूर्णतः अस्वीकार कर दिया गया है। अतः मध्व की दृष्टि में कोई भी सपक्ष प्राप्त नहीं होगा। सन्दर्भित प्रसंग के हेतु में साधारण-अनैकान्तिक नामक दोष है। जब हेतु सपक्ष और विपक्ष दोनों स्थानों पर समान रूप से पाया जाए, तो साधारण-अनैकान्तिक होता है।[2] ऐसे प्रसंगों में व्याप्ति-ग्रहण न हो सकने के कारण अनुमान प्रवृत्त ही नहीं हो पाता। दृश्यत्व, जो जगत् के मिथ्यात्व की सिद्धि के लिए प्रयुक्त हुआ है, उक्त दोष से दुष्ट है। मध्व के अनुसार आत्मा भी दृश्य (ज्ञेय) है, किन्तु यह मिथ्या नहीं है। अतः दृश्यत्व हेतु विपक्ष में भी प्राप्त है। स्मरणीय है कि मध्व आत्मा को दृश्य मानते हैं। किन्तु शंकर ने दृश्य न मानकर स्वयंप्रकाश माना है। मध्व के अनुसार प्रस्तुत प्रयोग में 'सोपाधिक' हेत्वाभास के अन्तर्गत 'व्याप्यत्वासिद्ध' नामक दोष भी है। सभी मिथ्या-प्रतीतियां विपरीत प्रमाण-विषय हैं। इसी प्रमाण-विरोधित्व[3] को आधार बनाकर मध्व ने उक्त दोष निर्देशित किया है: विपरीत-प्रमाणत्व मिथ्यात्व में तो व्याप्त है किन्तु दृश्यत्व में अव्याप्त है। प्रत्येक दृश्य प्रमाण-विरुद्ध नहीं है, इसलिए दृश्यत्व में अव्यापक होने से यह उपाधि है।

जो हेतु साध्य के समान-असमान धर्मों से रहित हो, वह परिणामतः किसी प्रकार के ज्ञान को प्रदान करने में असमर्थ होता है। 'अध्यवसाय' से असमर्थ होने के कारण वह 'अनध्यवसित' नामक हेत्वाभास है।[4] हेतु का साध्य के समान असमान धर्मों से सम्बद्ध होकर पाया जाना आवश्यक है। किन्तु जयतीर्थ आदि आचार्यों ने अनध्यवसित का केवल यही अर्थ लिया है, कि जो साध्य के ज्ञान को प्रदान करने में अयोग्य है।[5] शंकर के मत में सभी कुछ मिथ्या है। अनुमान जो मिथ्यात्व को प्रमाणित करेगा वह भी मिथ्या है। यह तर्क हेतु के द्वारा साध्य की सिद्धि की अक्षमता को प्रमाणित करता है।[6]

१. मध्व—"अनिर्वचनीयसिद्धेरेव सपक्षाभावाद्विरुद्धः।"
मिथ्यात्वानुमानखण्डन, पृ० ४।

२. "यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः।" न्यायमुक्तावलीकारिका, ७३।

३. मध्व—"प्रमाणविरुद्धत्वमुपाधिः।" मिथ्यात्वानुमानखण्डन, पृ० ४।

४. श्रीधर—"यश्चानुमेये विद्यमानस्तत्समानासमानजातीययोरसन्नेव सोऽन्यतरासिद्धो ऽनध्यवसायहेतुत्वात् अनध्यवसितः।" प्रशस्तपादभाष्य-न्यायकंदली, पृ० २३६।

५. जयतीर्थ—"न विद्यतेऽध्यवसितमध्यवसायः साध्यसिद्धिर्यस्मात् स तथोक्त इति।"
मिथ्यात्वानुमानखण्डन टीका, पृ० ५।

६. "यस्य साध्याभावः प्रमाणेन निश्चितः स कालात्ययापदिष्टः।"
प्रमाणचन्द्रिका, पृ० १५५।

कालात्ययापदिष्ट को ही वाधित विषय हेत्वाभास भी कहा गया है। जिस हेतु के साध्य का अभाव किसी अन्य प्रमाण से निश्चित हो गया है, वह कालात्ययापदिष्ट हेत्वाभास है।[1] दृश्यत्व हेतु से जगत्-मिथ्यात्व को प्रमाणित किया गया है। किन्तु जगत्-मिथ्यात्व प्रत्यक्ष तथा अन्य प्रमाणों से वाधित है। अर्थात् जगत्-सत्यत्व प्रमाणित है। अतः उक्त हेतु वाधित-विषय नामक हेत्वाभास से दूषित है।[2]

शंकर के विरुद्ध जितने भी तर्क इस सम्प्रदाय के विचारकों ने दिए हैं उनके मूल में व्यावहारिक एवं प्रातिभासिक सत्ता की विविक्त मान्यता का अभाव है। मध्वमतानुयायी व्यावहारिक-सत्ता एवं पारमार्थिक असत्ता (जगत् की) पर विश्वास नहीं करते। अद्वैतानुगामी विचारक असत्ता को आधारभूत मान्यता के रूप में ग्रहण करते हैं। अतः इस प्रकार सत्ता का स्वरूप ही जव संदिग्ध है, तव मध्व उसे आधार वनाकर खण्डन करें यह भी युक्तिसंगत नहीं है। अपनी मान्यता को तार्किक परिवेश देने की आकांक्षा में, अद्वैत मत के अनुमान से जगत्-मिथ्यात्व प्रमाणित करना वस्तुतः चिन्त्य है।

मध्व विचारक जगत् की सत्ता और उसके अनुभव को सत् मानते हैं। इसके लिए उन्होने प्रत्यक्ष के पांच साधनों के अतिरिक्त साक्षि को भी हेतु माना है। यह 'जगत्' के सत्यत्व को प्रत्यक्षतः प्रमाणित करता है। "व्यावहारिक रूप में ही इसकी सत्ता प्रत्यक्षतः सिद्ध है, ऐसा अद्वैतानुसारी विचार मानने पर तो प्रत्यक्ष-प्रमाण प्रामाणिक ही नहीं रहा। काल की दृष्टि से उसकी प्रामाणिकता वाधित हो गई।[4] यदि प्रमाण का स्वतस्त्व कुछ भी महत्त्व रखता है, तो जगत् की सत्ता ग्रहण करनी ही होगी। उनकी सत्ता के लिए किसी युक्ति की आवश्यकता नहीं है। युक्ति की आवश्यकता तो मिथ्यात्व प्रमाणित करने के लिए है।

मध्व के अनुसार जो भी ज्ञान प्राप्त हो रहा है, उसकी परीक्षा कर लेनी चाहिए। एक वार, यदि परीक्षा करने के उपरान्त उसके 'सत्यत्व' को स्वीकार लिया तो प्रत्येक दशा में उसकी प्रामाणिकता का ग्रहण कर लेना चाहिए। प्रत्यक्ष-प्रमाण की स्थिति एवं प्रामाणिकता को अस्वीकार नहीं किया जा सकता। प्रत्यक्ष को न मानने से तो अद्वैत मत की भी हानि है, क्योंकि शुक्ति-रजत की भ्रान्ति में 'यह रजत नहीं है' यह ज्ञान भी प्रत्यक्षाश्रित है। अन्यथा 'यह रजत है' इसकी अप्रामाणिकता भी सिद्ध नहीं हो पायेगी। परिणामतः लाभ की अभिलाषा में प्रवृत्त होने पर मूल

१. मिथ्यात्वानुमानखण्डन, पृ० ६।
२. मध्व—"प्रामाण्यस्य च मर्यादा कालतो व्याहता भवेत्।
कालान्तरेऽप्यमानं चेदिदानीं मानता कुतः?"
अनुव्याख्यान, पृ० ५५।

व्यासतीर्थ—"नेदं रूप्यमिति प्रत्यक्षप्रामाण्यमावश्यकम्। अन्यथा इदं रूप्यमित्यस्याप्रामाण्यं न स्यादिति वृद्धिमिच्छतो मूलसिद्धान्तहानिः।
न्यायामृत, पृ० १३६।

की ही हानि हो जायेगी।[१] अतः प्रत्यक्ष की अनिवार्यता एवं उपयोगिता को किसी भी तरह हीन नहीं बनाया जा सकता। अनुमान अथवा शब्द के द्वारा प्रत्यक्ष का तिरस्कार अन्योन्याश्रय दोष से दुष्ट होगा। वह अनुमानादि का उपजीव्य है।

जगत् सत्यत्व इसी उपजीव्य प्रत्यक्ष पर पर आश्रित है। यह रजतादि के समान भ्रान्ति-जन्य नहीं है। साक्षी के द्वारा दृढ़ दृष्ट एवं सुपरीक्षित होने के कारण वह यथार्थ है। किसी भी शुद्ध-प्रत्यक्ष को कोई अन्य अधिक सक्षम साधन वाधित कर सकता है, यह विचार अग्राह्य है। साक्षी, मध्व मत में, प्रत्यक्ष का महत्त्वपूर्ण आधार है। एक बार इस आधार को स्वीकार कर लिया, तो फिर जीव ब्रह्मैक्य प्रतिपादन करने वाली श्रुतियों तथा उनके अवान्तर निष्कर्ष जगत-मिथ्यात्व को प्रतिपिद्ध करना सहज हो जाता है। 'तत्त्वमसि' यह सुप्रसिद्ध महावाक्य भी साक्षी के द्वारा ही अपने अर्थप्रत्यायन में समर्थ होगा। जिस प्रकार सुख एवं दुःखानुभूति साक्षी द्वारा प्रमाणित होकर भी अनुभवगम्य बनती है, ठीक उसी प्रकार 'तत्त्वमसि' आदि वाक्य भी साक्षी प्रामाणिकता के उपरान्त अनुभव प्राप्त करा सकेंगे। इस वाक्य प्रयोग में साक्षी-चैतन्य के द्वारा गृहीत अर्थ केवल यही है कि 'जगत्' के मिथ्यात्व में इस वाक्य का तात्पर्य नहीं है। यह एक वाक्य अवश्य है। उसका अर्थ भी है, किन्तु वह अर्थ जगत् मिथ्यात्व नहीं है।[२] इस पर भी जगत्-मिथ्यात्व-परक मान लेने पर उपपत्ति का विरोध, अर्थात् प्रत्यक्ष का विरोध होता है।

अद्वैत मतानुयायी विद्वान् स्वप्न एवं भ्रम आदि के साम्य पर जगत् का मिथ्यात्व प्रमाणित करते हैं। अर्थात् प्रत्यक्ष की सत्ता केवल वर्तमान क्षणों में ही सीमित रहती है। ऐसी दशा में स्मृति आदि सभी का क्षेत्र समाप्त हो जायेगा। केवल अनुमान के आधार पर प्रत्यक्ष को वोधित करना अनुचित है। स्वप्नगत अनुभूतियों को शंकर ने गौड़पाद का अनुसरण करते हुए मिथ्या माना है।[३] स्वप्न में देखे गए विषय कोई भौतिक स्वरूप नहीं रखते। न तो वे स्वप्न-द्रष्टा से भिन्न हैं और न अभिन्न। यदि स्वप्न विषय होते तो वे ही विषय दूसरों को भी दृष्टिगोचर होते। यदि उन्हें अभिन्न माना जाए, तब इतने रूपों में उसकी अभिव्यक्ति कैसे?

स्वप्न के आधार पर ही जगत् का मिथ्यात्व उक्त मत में ग्रहीत किया गया है। इसीलिए मध्व शंकर के इस मत को स्वीकार नहीं करते कि स्वप्न मिथ्या है। स्वप्न में दृष्ट सुख-दुःख की अनुभूति जाग्रत अवस्था में भी होती है। कामिनीसंभोग आदि के स्थूल परिणाम जाग्रत अवस्था में दिखाई देते ही हैं। साथ ही यह प्रश्न कि, स्वप्न द्रष्टा से भिन्न हैं अथवा अभिन्न मध्व मत में महत्त्व नहीं रखता, क्योंकि सम्पूर्ण स्वाप्न-विषय ईश्वर के द्वारा जीव में उत्सृष्ट हैं। उसी सर्वशक्तिसम्पन्न की

१. जयतीर्थ—"न ब्रूमो वयं नास्तीदं वाक्यमिति। नाप्येषां पदानामत्र शक्तिर्नास्तीति। किन्तु अस्य वाक्यस्य प्रपंचमिथ्यात्वे तात्पर्यं नास्ति। उपपत्तिविरोधाभावो हि प्रतीतार्थे तात्पर्यस्य ज्ञापकः। अत्र चास्त्युपपत्तिविरोध इति।" न्यायसुधा, पृ० ६०१।

२. गौड़पादकारिका २।१-७, ब्र० सूत्र शांकरभाष्य ३।२।३।

इच्छा से वे नष्ट भी हो जाते हैं। स्वप्नगत विषयों के वोध के प्रसंग में यह आवश्यक नहीं है, कि कोई द्रष्टा अपने भौतिक शरीर से निकलकर उन विषयों का ज्ञान प्राप्त करे। यह वोध तो मन से ही प्राप्त किया जा सकता है।[1] स्वप्न वासना-जन्य है, यह तो शंकर भी स्वीकार करते हैं।[2] वासना को स्वप्न-विषय के उपादान के रूप में ग्रहण करने से तद्गत यथार्थता के द्वारा अनेक विरोधों का समाधान हो जाता है। यही कारण है कि शंकर यह मानने को वाध्य है कि स्वप्न-गत विषय को मिथ्या कहा जा सकता है, न कि विषय को स्वरूपतः, क्योंकि जाग्रत दशा में तो उसकी उपलब्धि होती है।[3] मध्व और आगे वढ़कर संस्कारजन्य, जीव के मन में रहने वाले, स्वाप्न-विषयों को भी सत् मानते हैं।[4] यह वाह्य कारणों से उत्पन्न नहीं होते केवल वासनात्मक है इसीलिए मध्व ब्रह्मसूत्र में प्रयुक्त 'मायामात्रम्' पद का व्याख्यान करते हुए व्यक्त करते हैं कि वासना इनकी उपादान कारण एवं ईश्वर निमित्तकारण है।[5] जयतीर्थ के अनुसार यदि यहां केवल वासना का मुख्य प्रयोग करते, तो ईश्वर की प्रज्ञा का ग्रहण न हो पाता। दोनों का पृथक्-पृथक् उल्लेख विस्तार का कारण बनता, अतः मुख्य और अमुख्य दोनों की ही विवक्षा की दृष्टि से 'माया मात्रम्' का उल्लेख किया गया है।[6] वासना के कारण के रूप में रहने से इनमें वाह्य-अर्थों के समान अर्थ क्रियाकारित्व नहीं है।[7] किन्तु इसके कारण उनकी यथार्थता के प्रति सन्देह नहीं किया जा सकता। स्वप्नगत विषयों का मिथ्यात्व उन विषयों में नहीं, अपितु उनको जाग्रत पदार्थ के रूप में ग्रहण करने में है। जबकि दोनों स्वरूपतः भिन्न है।

दूसरा उदाहरण जगत् मिथ्यात्व के लिए सर्प के भ्रम को भी लिया है।

१. जयतीर्थ—"यदि बाह्यकारणकाः स्वप्नविषयाः तदा सम्यगभिव्यज्येरन्।
न चैवम्। अतः संस्कारोपादानका एवेति भावः।.........।
वासनामयानां मेरुमन्दरवसन्तानादीनां शरीरादनिर्गत्यैव मनसा दर्शनसम्भवात्।
तत्त्वप्रदीप ३।२।३।

२. शंकर—"जाग्रत्प्रभववासनानिर्मितत्वात्तु स्वप्नस्य।" ब्र० सू० भा० ३।२।६।

३. शंकर—"यद्यपि स्वप्नदर्शनावस्थस्य सर्पदर्शनोदकस्नानादिकार्यजातमनृतम्, तथापि तदवगतिः सत्यमेव।" ब्र० सू० भा० २।२।१४

४. जयतीर्थ—'भावनापरनामकाः संस्काराः। अनाद्यनुभवप्रवाहोत्पन्नाः। संस्कारैरित्युपादान-कीर्तनम्। न च तेषां गुणत्वेनोपादानत्वानुपपत्तिः। मनोवृत्तित्वेन द्रव्यत्वात्। संस्काराणां चातीन्द्रियत्वेन द्व्यणुकजन्मविनाशयोरिव प्रागूर्ध्वं चानुपलम्भो न दोषाय।' न्यायसुधा, पृ० ४६०

५. मध्व—ब्रह्मसूत्र भाष्य ३।२।३।

६. जयतीर्थ—'यदि च वासनामात्रमिति मुख्यप्रयोगः क्रियेत, तदा ईश्वरप्रज्ञा न संगृहीता स्यात् पृथगुभयग्रहणे गौरवं स्यात्। अतो मुख्यामुख्याविरयत्रोभयग्रहणाय मायामात्रमित्युक्तम्।'
न्यायसुधा, पृ० ४६४।

७. वहीं—'तेषां तथा बाह्यवत् क्वचित् स्पष्टता बाह्यार्थक्रियाकारिता नास्ति।
वहीं, पृ० ४६६।

उसमें भी अर्थ-क्रिया-कारित्व होने से, उसकी भी सत्ता माननी होगी।[१] भ्रम को ग्रहण करने का अभिप्राय वस्तु में अवस्तु का आरोप है यदि यह आरोप यहाँ मिथ्या हो तो भी अन्यत्र-सर्पप्रतीति सत् भी है। जिस प्रकार वर्तमानकालीन सर्पप्रतीति से भिन्न वास्तव सर्पप्रतीति की स्थिति है। ऐसी दशा में दो जगतों की सत्ता माननी होगी एक भ्रमात्मक दूसरा वास्तव, जिसके आधार पर भ्रम हुआ। जयतीर्थ के अनुसार ऐसी स्थिति में, जो ज्ञात या सत्य है उसकी ही सत्ता क्यों न मान ली जाय?[२]

मूलतः मध्व साक्षि-चैतन्य के आधार पर ही जगत् का सत्यत्व प्रमाणित करते हैं फिर भी इस मत ने श्रुति के द्वारा भी जगत् का सत्यत्व प्रतिपादित किया है। अनेक श्रुति वाक्य इस सन्दर्भ में उद्धृत किए गए है।[३] डा० दासगुप्त ने भी श्रुति की द्वैतपरकता को स्वीकार किया है।[४]

प्रमाण के रूप में बुद्धि केवल दो ही विकल्पों का ग्रहण करती है। या तो किसी वस्तु का स्वरूप सत् हो अथवा हो ही नहीं। किन्तु सत्वासत्व दोनों को छोड़कर दोनों बुद्धि से भिन्न स्थिति का निर्धारण असम्भव है।[५]

जो किसी वस्तु विशेष से विलक्षण को जान लेता है वह उसके स्वरूप को जान ही लेता है जैसे देवदत्त को घट से विलक्षण पट का ज्ञान हो गया तो, अनुमानतः उसका घट ज्ञानयुक्त होना सिद्ध हो गया।[६] अतः यदि जगत् 'असत्' विलक्षण ज्ञात हो गया तो उसका सत्व तो स्वतः ग्रहीत है। किसी भी वस्तु की सत्ता उसकी अर्थ-क्रिया-कारिता से भी निश्चित होती है। जगत् में अर्थ-क्रियाकारित्व है, अतः वह सत् है।

१. मध्व—'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम्।
तदेवार्थक्रियाकारि तत्सदेवार्थकारकम्॥' अनु० व्या०, पृ० ६७।
२. जयतीर्थ—'सत्यजगद्द्वयांगीकारात् अस्यैव जगतः सत्यत्वांगीकारस्य लघुत्वात्।
वादावली, पृ० ५३।
३. ऋग्वेद—२।१५।१, २।२४।६-७. ७-८ १०।५५।६, बृहदा० उप० ३।७।१३, मुण्डकोप० ३।१।१२, कठोप० २।२।१३, ईशोप० ३।
४. "There are so many passages in the Upaniṣads that are clearly theistic and dualistic in purport that no amount of linguistic trickery could convincingly show that they yield a meaning that would support Śaṅkara's position that the Bramha alone is the ultimate reality and all else is false." A History of Indian Philosophy, Vol. 11. p. 2.
५. जयतीर्थ—सत्वासत्वे विहाय प्रमाणस्वरूपस्य बुद्धौ आरोपयितुमशक्यत्वेनौदासीन्यस्य तत्स्वीकारानुपपत्तेः। न्यायसुधा, पृ० ३४.
६. वही—'यो यद्विलक्षणं प्रत्येति स तत्प्रतीतिमान् यथा घटविलक्षणः पट इति प्रतीतिमान् देवदत्तो घटप्रतीतिमान् इत्यनुमानात्तु। न्यायसुधा, पृ० ५७.

# कुन्तकाचार्यो वक्रोक्तिसम्प्रदायश्च

**गायत्रीप्रसादपाण्डेयः**

संस्कृतवाङ्मयोद्यानोपलालितललितपक्षच्छटाविस्तारितानवद्यभाषाभङ्गीभणितिसमाराधितानल्पहेमन्तवसन्तशकुन्तः कुन्तकाचार्योऽयमनितरसाधारणवचोनैपुणीसमाकृष्टसदयहृदयानवद्यसंस्कृतसाहित्यमकरन्दलोभिमधुव्रतकुलः सानन्दमानन्दसुधासिन्धुमज्जनाकुलविद्वद्वृन्दवन्दनीयपादारविन्दयुगलः कदा स्वीयजनुषा कतममिलातलमलमलञ्चकारेत्यत्र यथामति पूर्वं विमर्ष्टुमुत्सहे। साहित्याम्बुनिधिपारंगमिष्णुरोचिष्णुविविधयुक्तियुक्तयुक्तिसमायूहितचारुवक्रोक्तिसम्प्रदायस्यासावेव संस्थापक इति नाविदितं विपश्चिच्चक्रचूडामणीनाम्। असौ सहृदयानन्दवर्धनानन्दवर्धनानन्तरम्महामहिममण्डितपण्डितराजशेखरसमभिवन्दितराजशेखरान्तहिमसंकाश - यशःशुक्लीकृतपण्डितमहिममहिमभट्टयोरन्तश्चकास्तीति विपश्चिन्मतम्। एतद्धि तदीयलेखनीलताप्रसूतप्रसूनकल्पैस्तल्लेखैरेवाधिगन्तुं पार्यते। स्वीययशःसीमन्तिनीसीमन्तोल्लसितजीविते 'वक्रोक्तिजीविते' 'यस्मादत्र ध्वनिकारेण व्यङ्ग्यव्यञ्जकभावोऽत्र सुतरां समर्थितस्तत् किं पौनरुक्त्येन"[1] एतेन ध्वनिकारमानन्दवर्धनम् "भवभूतिराजशेखरविरचितेषु वन्धसौन्दर्यसुभगेषु मुक्तकेषु परिदृश्यते"[2] इत्येतेन ग्रन्थसन्दर्भेण राजशेखरञ्च स्मारं स्मारन्ततोऽनन्तरजनितां स्वीयामाख्यामाख्यपयदसौ परपक्षनिष्पादनचुञ्चुचारुकुन्तः कुन्तकः। व्यक्तिविवेकविवेकक्रृद्भिश्च "काव्यकाञ्चनकषाश्ममानिना कुन्तकेन निजकाव्यलक्ष्मणि। यस्य सर्वनिरवद्यतोदिता श्लोक एष स निदर्शितो मया।[3] इति दर्शं दर्शमनवद्यं पद्यमदो व्यक्तिविवेककृन्महिमभट्टप्राग्भवत्वमप्यस्य सावधारणं निश्चेचीय्यते। राजशेखरश्च कान्यकुब्जेश्वरमहेन्द्रपालसमसामयिकोऽतोऽसौ दशमशतकस्य चरमे भागे स्वीयकमनीयविग्रहेण भुवस्तलमलञ्चक्रे। एतदुत्तरभवो महिमभट्टो व्यराजतैकादशे शतके यतो हि अलङ्कारसर्वस्वकृता रुय्यकेण महिमभट्टमतमुदलेखि एकादशशतकवास्तव्येनेत्यैतिह्यचणानां विचारणा। काश्मीरानलञ्चकार स्वजन्मनाऽसौ मनीषीति हि ऐतिह्यविदः।

सहृदयहृदयावर्जनक्षमतामादधानस्याभिनवकल्पनाकल्पवल्लीवितानप्रदर्शितात्मवैभवस्य कस्यचिदपि कमनीयकविप्रतिभाभाषावभासितस्य काव्यस्य जीवातुभूतमात्मतत्त्वं

१. वक्रोक्तिजीविते।
२. तत्रैव।
३. व्यक्तिविवेके २।२६।

किमिति जाजायते स्वाभाविकी प्रश्नपद्धतिः। तत्र सत्यपि सकलकलाकेलिकमनीयकान्त-वपुषि, सत्स्वप्यनेकानेकचमत्कृत्याधायकवहिस्साधनभूतगुणगणनिवहेषु, सत्यामपि ज्वलदुत्फुल्लानेकर्तुकुसुमसौरभभूतिभूषितायां रुचिररुचिरायामनल्पकल्पकोमलकल्पनायां विनाऽन्तश्चमत्कृतिकरातिरुचिरचिरानन्दसन्दोहोद्रेकशीलि चितितत्त्वं सर्वमप्यविकलं विकलायते वृथायते चानूनकम्। अस्य च काव्यस्यात्मतत्त्वं किमात्मकमित्याधृत्य विपश्चितां विमतिर्विभाति भूयसी। तत्रालङ्कारध्वनिरसप्रमुखाः तिस्रो धाराः प्रवाहिताः काव्यात्मप्रतिपादनायेत्यत्र न विस्तृतिरपेक्ष्यते विद्वद्भिः। अलङ्कारस्यैव काव्यात्मकतां स्वीकुर्वाणेषु प्रथमो भामहो नामाहो कश्चित् विपश्चित् शब्दार्थयोः साहित्यमेव काव्यमूरीचक्रे आह च—"शब्दार्थौ सहितौ काव्यं,[1].........काव्ये अलङ्कारस्यानिवार्यतां व्याचक्षाणोऽयमाचष्ट दृष्टान्तविधया—यथा कापि कमनीया कान्तानिन्द्यसौन्दर्यशालिनी सत्यप्यलङ्कारालङ्करणरहिता न प्रेक्षकानावर्जयति—

'न कान्तमपि निर्भूषं विभाति वनितामुखम्।
रूपकादिमलंकारं बाह्यमाचक्षते परे॥[2]'

अत्रेदमवधेयम्—केचनाचार्याः काव्यसौन्दर्यमूलमर्थालङ्कारान् समाचचक्षिरे, केचिच्च शब्दालङ्कारान् समूचिरे। पुपोष चाचार्यः कुन्तकोऽपि—

"केषाञ्चिन्मतं कविकौशलकल्पितकमनीयतातिशयः शब्द एव केवलं काव्यम् इति, केषाञ्चित् वाच्यमेव रचनावैचित्र्यचमत्कारीति[3]।"

काव्यचारुत्ववर्धनक्षमाः शब्दालङ्कारार्थालङ्काराश्च यौगपद्येनैकत्र काव्ये स्थातुं क्षमन्त इत्यतस्तदैवास्य काव्यत्वमूरीचकार भामहः—

'शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः[4]।'

दण्डी—

भामहानन्तरमसावन्यतमो मनीषीष्टार्थकोमलमृदुलशब्दसंवलितस्य काव्यत्वमुररीकुर्वाणो व्याचष्टे काव्यशरीरम्—

'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली[5]।'

इष्टार्थव्यवच्छिन्नं पदावलीमात्रं काव्यगात्रमाचक्षाणोऽसौ प्रत्याचचक्षे शब्दार्थयुगलस्य काव्यत्वम्। एतदीयभावनाभावितान्तरङ्गतरङ्गो विपश्चिन्मण्डलाखण्डलो जगन्नाथः "रमणीयार्थप्रतिपादकः शब्दः काव्यमिति"[6] प्रतिष्ठापयाम्बभूव महता

१. काव्यालङ्कारे १।१६।
२. तत्रैव १।१३।
३. वक्रोक्तिजीविते १।१७ वृत्तौ।
४. काव्यालङ्कारे १।१५।
५. काव्यादर्शे १।१०।
६. रसगंगाधरे।

समारम्भेण स्वीयं मतम् । कविताववनितविलासादर्शे काव्यादर्शे शब्दज्योतिषो महिमानमसौ प्रण्यपादयच्चारुश्लोकमुखेन—

इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारान्न दीप्यते ॥[1]

काव्यजगतां रसान्वेषणधिषणोऽसौ दण्डी रससिद्धान्तबीजवपनमिषेण स्वकीयपक्षमुपास्थापयदग्राम्यतागुणगणनसन्दर्भे—

कामं सर्वोप्यलङ्कारो रसमर्थे निषिञ्चति ।[2] इति ।

**वामनः—**

महाकविदण्डिदोर्दण्डप्रचण्डपरिग्रहणप्राप्तप्रशस्तपथपावनः वामनः काव्यात्मानमात्मनोऽतिगभीरविचारसरणिनिघृष्टममन्दकाव्यानन्दास्वादननिपुणानां पुरस्तादुपास्थापयत्—

"रीतिरात्मा काव्यस्ये" ति

विशिष्टपदरचना नामेयं रीतिस्तत्र विशिष्टे वैशिष्ट्यञ्च गुणयुक्तत्वमिति तद्वृत्तिकृता न्यगादि[3] ।

काव्यं ग्राह्यमलङ्कारात् । "सौन्दर्यमलङ्कारः"[4]—इत्यादिना वामनेनाग्रे च "काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते भक्त्या तु शब्दार्थमात्रवचनोऽत्र गृह्यते[5]" इति वृत्तौ प्रण्यपादि अलङ्कारग्राह्यत्वं काव्यस्य । नवोन्मेषशालिभावनाभावनः वामनः काव्यशोभाकर्तॄन् धर्मान् गुणा इति तदुत्कर्षहेतुभूतानलङ्कारा इति समचकथत् । असूत्रि च तेन—"काव्यशोभायाः कर्तारो धर्मा गुणाः[6] तदतिशयहेतवस्त्वलङ्कारा" इति ।

**रुद्रटः—**

काव्यज्ञालङ्कारभूते काव्यालङ्कारे रुद्रटोऽभिदधे शब्दार्थयोः काव्यत्वमेतेनापि काव्येऽलङ्कारस्य प्राधान्यमूरी समकारि। चन्द्रालोक इवातितररमणीये चन्द्रालोके जयदेवोऽपि विनालङ्कारादुष्णनारहितमुषर्बुधमिवाभिदधौ काव्यम्—

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती ।
असौ न मन्यते कस्मादनुष्णमनलङ् कृती[7] ॥

**इतरे चाचार्याः—**

रसमेव काव्यात्मतत्त्वमुद्गिरन्तस्तस्यैव जीवातुभूतां स्थितिमाकलयन्तः रससिद्धान्तपरिपोषमादधानाः भरतप्रमुखाः 'रसो वै सः' इति वचनमनुचिन्तयन्तः प्रतिष्ठा-

१. काव्यादर्शे—१।४ ।
२. काव्यादर्शे—१।६२ ।
३. काव्यालङ्कारसूत्रवृत्तौ—२।६ ।
४. तत्रैव २।६ ।
५. तत्रैव १।१।१।२३ ।
६. तत्रैव ३।१।१ ।
७. चन्द्रालोके ।

पयामासुरभिनवं मतम् । यद्यपि नाट्यशास्त्रसाक्षात्कृत् नटेशो भरतः सर्वप्रथममसूत्रयत् "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति" रिति[१] । तथापि तदीय वर्णनानैपुण्यनुमापितरससिद्धान्तप्राक्तनत्वं कस्य चेतश्चमत्कारन्नाचामति । रससिद्धान्तपितामहभरतप्रदर्शिताष्टविधरसस्य काव्यजीवातुभूतां स्थितिमाचचक्षिरेऽनन्तरभाविनोऽप्याचार्यवर्याः ।

रसस्वरूपमुद्भावयद्भिर्भरतैरेव व्यवेचि रसस्वरूपनिरूपणसरणिः । यथैवानेकानेकान्नादनानन्तरमनेकविधव्यञ्जनसंस्कृतसुमधुररसमास्वादयिता समास्वदते तथैव विविधाङ्गिकवाचिकसात्त्विकाभिनययुतस्थायिभावाभिव्यक्तं रसमास्वादयति सामाजिकः । तदीया रसस्वरूपनिरूपणा च—"तत्र रस[२]: कः पदार्थः ? उच्यते आस्वाद्यत्वात् । कथमास्वाद्यते रसः यथा हि नानाव्यञ्जनसंस्कृतमन्नं भुञ्जाना रसानास्वादयन्ति हर्षादींश्चाधिगच्छन्ति—⋯तथा नानाभावाभिनयव्यञ्जितम् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति हर्षादींश्चाधिगच्छन्ति प्रेक्षकाः⋯⋯। तत्र शृङ्गारस्य रसराजत्वात्तन्निर्वचनपुरस्सरमन्येऽष्टौ सममेव व्याख्याताः रसाः । शृङ्गारनिरूपणञ्च—"तत्र शृङ्गारो[३] नाम रतिस्थायिभावप्रभवः । उज्ज्वलवेषात्मकः⋯⋯तस्य द्वे अधिष्ठाने सम्भोगो विप्रलम्भश्च । तत्र सम्भोगस्तावत् ऋतुमाल्यानुलेपनालङ्कारेष्टजनविषयवरभवनोपभोगोपवनगमनानुभवनश्रवणदर्शनक्रीडालीलादिभिर्विभावैरुत्पद्यते । तस्य चातुर्यभ्रूक्षेपकटाक्षसञ्चारललितमधुराङ्गहारवाक्यानुभावैरभिनयः प्रयोक्तव्यः । विप्रलम्भकृतस्तु निर्वेदग्लानिशङ्कासूयाश्रमचिन्तौत्सुक्यनिद्रास्वप्नविवोधव्याध्युन्मादापस्मारजाड्यमरणादिभिरनुभावैरभिनेतव्यः" । अग्निपुराणप्रदर्शितेन पथाऽपि रसस्यैव काव्यात्मत्वमभ्युपगम्यते—

वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।

रस एवाजायमानोऽविनश्वरो वेदान्तेषु ब्रह्मे ति प्रतिष्ठितः—

अक्षरं परमं ब्रह्म सनातनमजं विभुम् ।
वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम् ॥[४]

अभिनवगुप्तगुरुवर्याचार्यभट्टतोतप्रणीत "काव्यकौतुके" ऽप्यलमासाद्यते रसात्मकत्वविमर्शः । धनिकधनञ्जयावपि रसात्मकत्वमाचक्षाणौ नीरसं काव्यं नैव स्वीकुर्वाते । "निर्भरानन्दसंविदात्मतामानीयमानः स्थायिभावो रसः" इति भरतमुनिप्रवर्तितरससिद्धान्तव्याख्यातृत्वेन भट्टनायक, भट्टलोल्लट, शङ्कुकाभिनवगुप्तप्रभृतयो विपश्चिच्चक्रचन्द्रचूडामणयोऽतितरां प्रसिद्धाः । आचार्यो विश्वनाथोऽपि "वाक्यं रसात्मकं काव्यमिति" काव्यस्वरूपं व्याकुर्वाणो रसमेव काव्यात्मानमूचिवान्—

१. भरतसूत्रम् ।
२. नाट्यशास्त्रे—।
३. अभिनवभारत्याम् ।
४. अग्निपुराणे ३४२।४।६ ।
५. अग्निपुराणे ३३७।४ ।

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः[1] ॥ इति ।
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः ।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः[2] ॥

पण्डितकविकरिकलभमृगेन्द्रः पण्डितराजः 'रसगङ्गाधरे' दार्शनिकीं रसव्याख्यां प्रास्तावीत्—'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती' त्यादिश्रौतवचनकदम्बकमुद्धरन् रसमेव काव्यजीवातुभूतत्वेन प्रतिष्ठापितवान् । यद्यप्यालङ्कारिकाचार्या अपि रसास्तित्वन्नैवाभ्युपगच्छन्तीति न तथापि वाहुल्याद् व्यपदेशमादायात्र पृथक् व्यवेचि ।

तृतीयः सम्प्रदायो ध्वनिरितिनामधेयोऽतितरां प्रथते साहित्याम्बुनिधिमन्थनोत्त्थप्राप्तसारभूतध्वनिनिरूपणाभिनवहैयङ्गवीनानाम् । ध्वनिप्रतिष्ठापकग्रन्थरत्नध्वन्यालोकप्रणयनादर्वागपि ध्वनिसिद्धान्त आसीत् किन्त्वङ्गभूतः वैयाकरणैश्च भूयो भूयः प्रतिपाद्यमानो वामनकृतविशिष्टवक्रोक्तिविवेचनेऽप्यतिपीवरेतरतनुः । ध्वनिप्रतिष्ठापकानन्दवर्धनाचार्यैश्च प्रण्यदर्शि ध्वनिसिद्धान्तः—

"काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।
केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयम्
तेन ब्रूमस्सहृदयमनःप्रीतये तत्स्वरूपम् ॥[3]

अत्र ध्वनिसिद्धान्तप्रतिष्ठापकेन त्रयः पक्षा उद्भाविताः । एके चाभाववादिनः, अपरे लक्षणायामन्तर्भाविनः, इतरे चानिर्वचनीयतावादिनः । ध्वन्यालोके त्रयोऽपि प्रतिपक्षिपक्षाः स्वीयातिगभीरालोचनाधिगतधिषणेन न्यक्कृताः । ध्वन्यालोकलोचनोन्मीलितविपश्चिल्लोचनोऽभिनवगुप्तः सुविशदम् प्रतिष्ठापयाम्बभूव ध्वनिसिद्धान्तम्, व्यञ्जनावृत्त्यैव रससिद्धिमप्यजूघुषत् । ध्वनिसिद्धान्तप्रतिष्ठापकपरमाचार्यवर्यो मम्मटः स्वीयगभीरविवेचनानैपुणीविधूनितत्रिजयवैजयन्तीसम्मुल्लासितविद्वन्मण्डलाखण्डलो व्यवस्थापयामास ध्वनिम् । अन्तर्भावयामास च ध्वनावेव रसम् । एकावल्यां विद्याधरः प्रतापरुद्रीये विद्यानाथश्चाजूघुषताम् ध्वनिराद्धान्तम् परं चरमः परमो मनीषी ध्वनिसिद्धान्तसमर्थकः पण्डितपुरन्दरः जगन्नाथो विस्तारयामास ध्वनिसिद्धान्तम् ।

तुरीयश्च सम्प्रदायो 'वक्रोक्ति' नाम्नाख्यातस्तस्य विचारणाऽवश्यकीत्यतस्तद्विषयोऽत्र प्रतिपिपादयिषितः । ध्वनिविरुद्धाभिधाननिपुणेषु कुन्तकाचार्योऽयम्महनीयमनीषासमन्वित इत्यत्र नाऽस्ति मतवैविध्यम् । एवमभिधातुं सुशकमत्र यद्येषामभिनवगुप्तानन्दवर्धनादिभिरतिगभीरसाहित्यात्मतत्त्वानामुल्लेखः समकारि तत्तत्वं भावपक्षीयम् । वक्रोक्तिप्रतिपादनचुञ्चुना यस्योल्लेखो व्यधायि तच्च कलापक्षीयमिति नीरक्षीर-

१. सा० द० ३।२ ।
२. अग्निपुराणे ३।३ ।
३. ध्वन्यालोके १।१ ।

विवेचनानैपुणीजुषां विदुषां मतम् । कुन्तकाचार्योऽयम्मनुते वक्रोक्तिविशिष्टस्यैव शब्दार्थ-साहित्यस्य काव्यत्वम् । शब्दार्थावलङ्कार्यौ वक्रोक्तिश्चालङ्करणम् । एतयोरलङ्कृतिश्च वक्रोक्त्यैव सम्भविनी नान्यथा ।

उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः ।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते[१] ॥

काव्यलक्षणप्रस्तावे कुन्तकेन प्रदर्शितं काव्यलक्षणं कस्य सचेतसश्चेतश्चमत्कारपदवीं न ढौकयते । काव्यमर्मविदाह्लादकारिणी वक्रतामयी भणितिरेव काव्यमिति तन्मतम् ।

शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि[२] ॥

कारिकामिमां व्याचक्षाणो व्याचष्ट कुन्तकः—"शब्दार्थौ काव्यम् । वाचको वाच्यश्चेति द्वौ सम्मिलितौ काव्यम् । द्वावेकमिति वैचित्र्योक्तिः । तेन केषाञ्चिन्मतं कविकौशलकल्पितकमनीयतातिशयः शब्द एव काव्यम् । केषाञ्चिद् वाच्यमेव रचना-वैचित्र्यचमत्कारकारिकाव्यमिति पक्षद्वयं निरस्तं भवति । तस्माद् द्वयोरपि प्रतितिल-मिव तैलं तद्विदाह्लादकारित्वं वर्तते । न पुनरेकस्मिन्"[३] ।

आचार्यकुन्तकोद्भावितवक्रोक्तिराद्धान्तप्रतिपक्षिस्वसिद्धान्तप्रतिपादनव्यग्रेण विश्वनाथेनालङ्काराणां कटककुण्डलमुकुटादिवदलङ्करणमात्रसम्पादिकत्वेनानामलङ्कृति-प्रयोजकत्वमुपपादयता वक्रोक्तेरपि अलङ्कारमात्रत्वात् तस्याः काव्यात्मकत्वं खपुष्पायित-मिति समाशङ्कितम् । किन्तु तत् कुन्तकगभीराशयानवबोधमूलकमिति नात्र शङ्का-लेशावकाशः । वक्रोक्तिर्नाम लोकोत्तरचमत्कारोत्पादिका शक्तिः—

लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये ।
काव्यस्यायमलङ्कारः कोऽप्यपूर्वो विधीयते[४] ॥

राजानककुन्तकेनाभिप्रेता वक्रोक्तिरियं न केवलभङ्गीभणितिमात्रमपि तु कविकर्मकौशलोत्पन्नचमत्कृत्याधायकतत्त्वमपि । वक्रतां व्याचक्षे कुन्तकः[५]—शास्त्रा-दिप्रसिद्धशब्दार्थोपनिबन्धनव्यतिरेकिप्रसिद्धप्रस्थानव्यतिरेकि, अतिक्रान्तव्यवहारसरणि-श्चेत्याद्यात्मिका सैषा वक्रोक्तिरतिचमत्कृतिसम्पादिका काव्यस्य । आचार्यकुन्तको व्यञ्जनां न स्वीकुरुते—अभिधयैव च सर्वोऽपि व्यवहारः निर्वाह्यते । किन्तु कुन्तकस्ये-यमभिधा न सामान्या—[६] विचित्रैवाभिधा वक्रोक्तिरिष्यते । सा च ध्वनिसायुज्यमश्नुते

१. वक्रोक्तिजीविते १।१० ।
२. तत्रैव १।७ ।
३. तत्रैव वृत्तौ ।
४. तत्रैव १।२ ।
५. वक्रोक्तिजीविते ।
६. तत्रैव ।

इति निश्चप्रचम्। इदमत्रानवद्यम्—सरसं सालङ्कारध्वनिगुणगणविशिष्टमपि तथ्यम् (वस्तु) भणितिभङ्गीमन्तरा न चमत्कारमापादयतीति कस्याक्ष्णोरगोचरः। सत्यं वैदग्ध्यभङ्गीभणितिरियं प्रवाहयति कामपि रसनिस्यन्दिनीममन्दभावधारामिति वेविद्यते सहृदयैः। यथा सामान्यतः—भवान् कुत आगच्छतीति प्रष्टव्ये वैदग्ध्यभङ्गीभणितिलसितसूक्तिर्हर्षः 'नैषधे' दौत्यकर्मार्थमुपस्थिता दमयन्ती नलं पृष्टवती—'मनो मे जिज्ञासते यत् शिरीषकोषमृदुतामपि मलिनयन्तौ श्रीचरणौ क्व गन्तुमुत्सहेते' इत्यादि भणति।

आलोच्यतां कविपुङ्गवकालिदासवचोभङ्गिमातरङ्गितरसपरिस्पन्दनिस्यन्दिनीं शोभाम्। 'भवान् कुत आगच्छतीत्येव प्रष्टव्ये दुष्यन्तं भणितिभङ्गीमयी भणति अनसूया"[1]—आर्यस्य मधुरालापजनितः विश्रम्भो माम् मन्त्रयते कतम आर्येण राजर्षेर्वंशोऽलंक्रियते। कतमो वा देशो विरहपर्युत्सुकजनः कृतः—' इति।

रमणीयाऽत्रत्या भणितिभङ्गिसमालसितप्रश्नपद्धतिः सदयहृदयसहृदयाह्लादकारिणी कस्य चेतसः अनावर्जिका। एवमत्र कालिदासमेवोद्धराणि—

> 'भर्तुर्मित्रं प्रियमविधवे ! विद्धि मामम्बुवाहं
> तत्सन्देशाद् हृदयनिहितादागतं त्वत्समीपम्।
> यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानाम्
> मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥[2]

निपुणं निरीक्षणीयाऽत्रत्या कालिदासीयभङ्गीभणितिलसिता वक्रोक्तिः। धनपतिरोषविश्लेषितस्य रामगिर्याश्रमवद्धाश्रमस्य प्रियतमा समाश्वासननियुक्तजलदस्य यक्षस्यादेशमनुपालयतः स्तनयित्नोर्मधुरमधुरा सेयं वाग्भङ्गिः। आलोच्यतामत्रत्यं तथ्यम्—मेघः यक्षिणीमभिप्राप्य वाचिकं व्याजहार—भर्तुर्मित्रमित्यादि—मां भर्तुर्मित्रं विद्धि—एतेन स्वस्योपादेयता प्रथिता—अहमस्मि तव भर्तुर्मित्रम्, भर्तुरेव नान्यस्य—न च सामान्यं मित्रमपितु प्रियम्। अतोऽहं नूनं त्वत्पतिविश्रम्भालापभाजनमिति भङ्गिः। सम्बोधनञ्च अविधवे इति अर्थात् जीवत्पतिके ! यक्षिणि ! सम्बोधनेनानेन यक्षिणीसौभाग्यं सूच्यते इति ध्वन्यते—एतेन पतिस्मरणपुरस्सरमभिमुखतां यक्षिण्याः काम्यत इति ध्वन्यते। न चाभिमुखीभवनमन्तरेण तत्पतेर् वाचिकव्याहरणं सम्पद्येत। अग्रे च—तामाश्वास्याभिमुखीकृत्य च—तत्सन्देशहरोहं समागत इति व्यनक्ति—कीदृशात् सन्देशात् समागत इत्यतस्तद्विशिनष्टि—हृदयनिहितात्। एतेन सावधानत्वं भण्यते। अर्थात् अवहितः सन्नहं हृदयनिवेशितसन्देशः समागतः। अत्र कश्चिच्छङ्केत–सन्देशार्थाः पटुकरणैर्नाम प्राणिभिः प्रापणीया इति किमु त्वमसि नियोजित इति दूरीकरोति शङ्काशङ्कुम्—मामम्बुवाहं विद्धि। अर्थात् अम्बु वहन्नहं सदैव हि वहनकर्मा। अतश्च वहनशीलत्वात् सन्देशवाहोऽपि संवृत्तः। अग्रे च स्वभावं स्वीयमभिव्यनक्ति यो हि

१. अभिज्ञानशाकुन्तले १ अङ्कः।
२. उत्तरमेघे ४१ श्लोकः।

अम्बुवाहः पथिविश्राममाचरतां पथिकानां त्वरासमर्थानामपि प्रवासिनां त्वरयिता। अर्थात् चिराद्विदेशमधिष्ठाय वर्षर्तौ गृहगमनम्प्रत्युद्यतान् पथिकान् श्रान्तानपि शीघ्रं गृहे गन्तुं व्यवसाययति। अत्र 'वृन्दानि' इति पदं बहुत्वद्योतकम्। एतेनाम्बुवाहस्याभीक्ष्णकारित्वात् प्रोषितनायकनायिकामेलनपाटवमस्य व्यनक्ति कविः। केन त्वरयतीति करणाकाङ्क्षायाम् तुरीयचरणेन कथयति—मन्द्रस्निग्धैः अर्थात मधुरमधुरैः स्तनितैः शब्दैश्चेति। एतेन विदग्धदौत्यक्षममधुरभाषितत्वमप्यस्य प्राकाशि कविना। 'क्व' इति स्थानाकाङ्क्षायाम् उत्तरम् 'पथि' इति। एतेन यदृच्छया नैसर्गिकं परोपकरणस्वभावत्वमस्य सूच्यते। किम्पुनरतिविशिष्टमित्रप्रेरणायाम्। वृन्दानीति विशिनष्टि—अबलावेणिमोक्षोत्सुकानि। अत्रावलापदेन कान्ताविरहवैधुर्यासहत्वमपि प्रत्यपादि। एतत् सर्वं वक्रोक्तिमहिमप्रसूतमिति को नाम नामापह्नुवीत। अपरमेतदपि समुद्धर्तुं युक्तम्—

सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
सीता जवात् त्रिचतुराणि पदानि गत्वा।
गन्तव्यमद्य कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम्[1]॥

अत्र हि वक्रोक्तिविरहितत्वम् 'असकृत्' इति पदे, तेन काव्यस्य कदर्थितत्वं सुस्पष्टं सहृदयानाम्। रामसङ्काशः सहृदयः 'कियदद्य गन्तव्यमिति' सकृद् ब्रुवाणायामेव सीतायाम् अश्रुमोचनक्षमः तदैव तस्याश्रुणः प्रथमावतारसम्भवः। अपरञ्च शिरीषमृद्वीयं सीता येन धैर्येण वनं गन्तुमियेष, तेन तस्या असकृद् कथनमपि सहृदयोद्वेगकरमिति कुन्तकस्याभिलषितम्। अतएव 'असकृत्' इत्यत्र 'अवश्यम्' इति कृते भविष्यति चमत्कारातिशयः परिपोषमेष्यति च वक्रोक्तिरिति तदीयं हृदयम्।[2]

वक्रोक्तिसम्प्रदायप्रतिष्ठापकाचार्यकुन्तको ध्वनिप्रतिष्ठापकमतं सवक्षस्ताडं चिखण्डयिषुरजूघुषत—"निर्मूलत्वादेव तयोर्भावाभावयोरिव न कथञ्चिदपि साम्योपपत्तिरिति अलमतिसमनुचितविषयचर्वणाचातुर्यचापलेने" त्यादिना। वक्रोक्तिरियन्न कुन्तकस्य काचिदपरामृष्टा पूर्वाचार्यैर्विचारधारा, ततः प्राग्भवा आचार्या वक्रोक्तिं स्वीचक्रिरे प्रतिपादयामासुश्च स्वीयान् राद्धान्तान्। संस्कृतगद्यकाननपञ्चाननो बाणभट्ट उक्तिवैचित्र्यार्थं प्रयुक्तवान् वक्रोक्तिशब्दम् "वक्रोक्तिनिपुणेन आख्यायिकाख्यानपरिचतुरेण"[3] त्यादिना। राघवपाण्डवीये तत्प्रशस्तिश्च व्यधायि कविराजेन—

सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा[4]॥

१. बालरामायणेऽङ्के ५, श्लोकः ३४।
२. कादम्बर्याम्।
३. राघवपाण्डवीये १।१४१।
४. काव्यालङ्कारे १।६।

भामहोऽपि शब्दार्थयोर्वक्रतामाचष्टे—

'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः[1] ।

भामहोऽतिशयोक्तिवक्रोक्ती पर्यायत्वेन स्वीकुरुते—लोकातिक्रान्तगोचरा उक्तिरेवैतल्लक्षणम् । काव्यस्य सर्वमप्यभिख्याजातं वक्रोक्तौ पर्यवस्यति । आह च भामहः—

कोऽलङ्कारोऽनया विना इत्यादि ।

संस्कृतवाङ्मयमानदण्डेन दण्डिना वक्रोक्तिश्चर्चिता—

द्विधा भिन्नं स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्[2] ।
श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम् ॥

वक्रोक्त्यतिशयोक्ती सर्वालङ्काराणामाधारभूमिरिति प्रत्यपादि दण्डिना । वामनो वक्रोक्तेरर्थालङ्कारत्वं स्वीचक्रे । लक्षितश्च—

सादृश्याल्लक्षणा वक्रोक्तिरिति[3] ।

रुद्रटोऽभिदधौ भेदद्वयं वक्रोक्तेः—

शब्दालङ्कारत्वमेवास्याः प्रतिष्ठापयता रुद्रटेन काकुवक्रोक्तिः, भङ्गश्लेषवक्रोक्तिश्चेति द्विधा न्यधायि पक्षः । सहृदयहृदयानन्दवर्धन आनन्दवर्धनोऽपि व्याहार्षीत्—

'तत्र वक्रोक्त्यादिवाच्यालङ्कारव्यवहार एव[4]'

एतेन सुस्पष्टमस्याङ्गीकृतिः सूच्यते ।

भामहकृतवक्रोक्तिलक्षणमाचक्षाणेनाभिनवगुप्तेनालोचि लोचने—"शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तरेण रूपेणावस्थानम् । लोकोत्तरेण चैवातिशयः"[5] । वाङ्मयस्य त्रिधा विश्लेषणं कुर्वता भोजेनागादि—

वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्चेति वाङ्मयम् ।[6]

अग्रे च शृङ्गारप्रकाशे—

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
सैषा विदग्धवक्रोक्तिजीवितं वृत्तिरिष्यते ॥

इत्याद्यनेकविधप्रमाणैः परिपोषजुषोऽस्य वक्रोक्तिसम्प्रदायस्य दृढैः प्रमाणैः स्थापनमकारि कुन्तकाचार्येण । एतदीयमतेन विना वक्रोक्तिं नीरसायते काव्यम् । वक्रोक्तिरहितं 'वार्ता' इत्युच्यते तद्विशिष्टश्च काव्यमिति । कुन्तकेन वक्रोक्तेर्ग्रहणं भूम्ना काव्यशोभाधायकतत्त्वेषु कृतम् । एतदीयं हार्दमिदं—शब्दार्थयोर्विलक्षणा सौन्दर्यसमष्टिरेव काव्यजीवितं वक्रोक्तिरिति । मूलतश्च षोढा सेयं वक्रोक्तिः ।

१. राघवपाण्डीये २।८५ ।
२. काव्यादर्शे २।३६२ ।
३. काव्यालङ्कारसूत्रे ४।३।८ ।
४. ध्वन्यालोक उद्योते २।२१ का० वृत्तौ ।
५. लोचने पृ० २०८ ।
६. सरस्वतीकण्ठाभरणे ५।८ ।




एवञ्चानेकविधवक्रोक्तिविश्लेषणविश्लेषितकाव्यजीवितः कुन्तकः वक्रोक्तिमेव तज्जीवन-मुक्तवान् 'वक्रोक्तिजीविते'। वयन्तु समाचक्ष्महे यन्न केवलमसौ वक्रोक्तिः काव्यजीवातुभूता न चालङ्कारा एव काव्यप्राणप्रदाः, न चानलङ्कृती रस एव काव्यात्मभूमिः, न जातुचित् ध्वनिरेव काव्यशरीरात्मा किन्तु एषां समष्टिरेव काव्यप्राणभूता। सरसा सगुणा सालङ्कारा औचित्यसंवलितध्वनिरीतिसमन्विता विलक्षणविचक्षणानन्दपरि-स्पन्दनिस्पन्दिकविप्रतिभाभाविता वैदग्ध्यभङ्गीभणितिरूपा वक्रोक्तिरेवात्मभूता काव्य-वपुष इत्यलमतिजल्पितेन ॥

# स्वभावोक्तिः, जानकीहरणे चास्या रामणीयकम्

दशरथद्विवेदी

भवनं भावः। सत्तार्थकभूधातोः भावार्थे घञि निष्पन्नः भावशब्दः क्रियां रूपञ्चार्थमाह।[1] स्वस्यार्थात् वस्तुनः स्वकीयभाव एव स्वभावशब्देनोच्यते। तच्च क्रियात्मकमपि स्यात्। वर्णनीयवस्तुनः स्वभावस्यार्थात् प्रकृतिसिद्धभावरूपधर्मस्य यथावद्वर्णनमेव स्वभावोक्तिरलङ्कारो भवति। अत एवालकारस्यास्यैतदभिधानमन्वर्थकम्। उक्तञ्च काव्यप्रकाशसंकेतकृता—'कविप्रतिभया निर्विकल्पप्रत्यक्षकल्पया विषयीकृता वस्तुस्वभावा यत्र वर्ण्यन्ते सा स्वभावोक्तिरिति सान्वयेयं संज्ञा'।[2] इदं चात्रावधेयं कविकल्पनामण्डितैवैषालङ्कारतां भजते न तु स्वभावकथनमात्रमेवालङ्कृतित्वं विच्छित्त्यभावात् वस्तुवर्णनप्रसङ्गात् ग्राम्यत्वदोषोपलब्धेश्च। वर्णनीयवस्तुस्वभावस्यात्रैवं वर्णनं भवति यस्यानुभूतिर्न सामान्यजनस्यापि तु सहृदयकवेरेव स्यात्। रुय्यकादयस्त्वेनं गूढार्थप्रतीत्यलङ्कारश्रेण्यां स्थापयन्ति। गूढत्वञ्चात्र वस्तुनः सूक्ष्मवर्णनत्वम् ऋते कवेः यं नान्यो द्रष्टुमलम्। प्रतीतिश्चात्रानुभूतिः।[3] नामान्तरैरपि व्यपदिष्टालङ्कारविद्भिरेषा। मम्मटोद्भट-रुय्यकविद्यानाथ-विद्याधरविश्वनाथ-कर्णपूरजयदेवदीक्षितादयश्च स्वभावोक्तिं व्यपदिशन्ति, दण्डिरुद्रटभोजराजहेमचन्द्रवाग्भटसर्वेश्वराचार्यश्च जातिमभिदधति। भामहकेशवौ स्वभावमभिवदतः। अग्निपुराणकृच्च स्वरूपमाहैनम्। महाकविर्बाणभट्टश्च कादम्बर्यां हर्षचरिते च जातिमत्यन्तं प्रशंसति।

वैदिकसाहित्ये तु स्वभाववर्णनं बाहुल्येन दृश्यते। भरतमुनिना च नैव संकीर्तितोऽसावलङ्कारो न च लक्षणेष्वप्युक्तः। तथापि च नाट्य शास्त्रेऽस्ति भावानां महद्वैशिष्ट्यम्। रुपकस्य मुनिना लोकधर्मि नाट्यधर्मीति रूपेण च द्विधा विभाग उक्तः। लोकधर्म्येव काव्येषु स्वभावोक्तेः स्थानं भजते। लोचनकृता च स्पष्टमेवोक्तं, 'काव्येऽपि च लोकनाट्यधर्मिस्थानीयेन स्वभावोक्तिवक्रोक्तिप्रकारद्वयेनालौकिक-प्रसन्नमधुरौ-

१. भवतीति वा भूयतेऽनेनेति वा भावो भावना उत्पादना क्रिया। पा० ३।१।६१ सूत्रवृत्तौ भट्टोजीदीक्षितस्य।

२. काव्यप्रकाशसंकेतो द्रष्टव्यः पृ० ३०२। स्वरूपस्य वर्णनीयतत्तद्वस्तुमात्रगतस्य प्रकृतिसिद्धस्य (भावरूप) धर्मस्य उक्तिः कथनं स्वभावोक्तिः। बालबोधिन्याम् पृ० ६६६)।

३. डॉ० रामचन्द्र द्विवेदकृतायाम्—अलंकार० मीमांसायाम्, पृ० १६४।

जस्विशब्दसमर्प्यमाणविभावादियोगादियमेव रसवार्ता।[१] एवञ्च स्वभावोक्त्यैव-काव्येषु रसत्वमायातीति सिद्धम्। अपि चेदमपि वक्तुं क्षमं यत्स्वभावोक्तेरुद्भावना नाट्यशास्त्रमधिकृत्यैव जातेति। यद्यप्यभिनवोक्तैषा स्वभावोक्तिः वाङ्मयविभागस्यैको विधिरस्ति। तथापि चैषैव काव्यशास्त्रेषु स्वभावोक्तिरलङ्कृतिर्जातेति वचने न कापि क्षतिः। काव्यशास्त्राचार्यैश्चास्यालङ्कारस्य महत्त्वं महतोद्घोषेण प्रतिपादितम्। वक्रोक्त्या स्वभावोक्त्या च सर्वमेव काव्यसौन्दर्यमाप्यत इति भामहभट्टः।[२] दण्डी त्वाह—पदार्थानां नानावस्थं रूपं प्रत्यक्षतया विवृण्वती स्वभावोक्तिरस्त्याद्यालङ्कृति-र्यस्याः अपरमप्यभिधानं जातिरित्यस्ति। काव्येषु शास्त्रेषु च सर्वत्रास्यैवालङ्का-रस्य साम्राज्यमस्ति। किञ्च स्वभावोक्तिरूपेण च द्विधैव काव्यविभागोऽपि भवितु-मर्हतीति तेषां पक्षः।[३] वक्रोक्तिकारस्तु स्वभावोक्तिमलङ्कार्यं मत्वा काव्यशरीर-कल्पामेतां स्वीकृतवानिति प्रतिपादयिष्यतेऽग्रे। भोजराजास्तु स्वभावोक्तिवक्रोक्ति-रसोक्तिरूपेण च वाङ्मयमेव त्रिधा विभक्तवन्तः।[४]

यद्यपि स्वभावोक्तेः प्रथम उल्लेखः भामहस्य काव्यालङ्कार एव दृश्यते तथापि न तन्मान्यैषा। उक्तञ्च तेन, अर्थस्य तदवस्थत्वमर्थात् यस्यार्थस्य यादृग्रूपं तस्य तादृगेवा-भिधानं स्वभाव इत्यमुमप्यलङ्कारत्वेनेच्छन्त्यपर इति।[५] यथा च प्रतिपादितं प्राक् पदार्थानां विभिन्नावस्थाः प्रकाशयन्ती जातिः स्वभावोक्तिर्वाद्यालङ्कृतिरिति दण्ड्या-चार्यः।[६] क्रियासु प्रवृत्तानां बालमृगादीनां हेवाकनिबन्धनं स्वभावोक्तिरित्युद्भट-भट्टः।[७] पदर्थानामसाधारणस्वरूपध्वननमेवास्यालङ्कारत्वमिति तट्टीका कृदिन्दु-राजः।[८] वामनस्त्वस्या विवेचनामेव न करोति। रुद्रटाचार्यस्त्वमूं वास्तववर्गे स्थाप-यति। जगति यस्य यद्रूपेण प्रसिद्धं संस्थानावस्थानक्रियादि तस्य तथैव वर्णनं जातिर-लङ्कारः। बालकाः, मुग्धयुवतयः, कातराः पक्षिणः, भीताः नीचाश्चेत्यादयो ये तेषां कालावस्थानुरूपचेष्टानां वर्णनेऽतितरां रमणीयतां वहत्येषेति तेषामभिमतम्।[९]

१. लोचने पृ० १९७।
२. युक्तं वक्रस्वभावोक्त्या सर्वमेवैतदिष्यते। काव्यालङ्कारे १।३०।
३. शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम्। काव्यादर्शे २।८-१३।
× × ×
भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्॥
काव्यादर्शे २।३६०।
४. वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम्॥ सर० कं० ५।८।
५. स्वभावोक्तिरलङ्कार इति केचित्प्रचक्षते।
अर्थस्य तदवस्थत्वं स्वभावोऽभिहितो यथा॥ भामहालंकारे २।८३।
६. नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती।
स्वभावोक्तिश्च जातिश्चेत्याद्यालंकृतिर्यथा॥ काव्यादर्शे, २।८१।
७. काव्यालंकारसारसंग्रहे २।८। द्र०
८. तस्याश्चालङ्कारत्वमसाधारणपदार्थस्वरूपध्वननम्। लघुवृत्तौ पृ० ४६।
९. काव्यालङ्कारे ७।३०-३१। द्र०

रुद्रटस्त्वमूं यद्यपि वास्तवमूलिकामभिवदति तथापि तट्टीकाकृन्नमिसाधुराहैवं यत् वास्तवे जातौ च तदेवान्तरं यद् वृक्षे धवे च। वस्तुनः स्वरूपकथनं वास्तवमुच्यते यच्चोपलभ्यते सहोक्त्यादौ। जातिस्त्वनुभवस्योत्पादिका, यत्र चान्यदीयस्वरूपं स्वानुभूतमिवाभाति।[1]

कुन्तकस्तु स्वभावोक्तेरलङ्कृतित्वमवधीर्यालङ्कार्यत्वमेवोरीकृतवान्। यतो हि स्वभावाद् व्यतिरिक्तं किञ्चिदपि वक्तुमशक्यं, काव्यस्य कृत्स्नमेव वस्तु स्वभावात्मकमेव भवति। स्वभावस्यालङ्करणमेवालङ्काराणामलङ्कर्तृत्वम्। यदि च स्वभाव एवालङ्कारः स्यात्तर्हि कमलङ्कुर्युरलङ्काराः? स्वस्य भावस्य कथनमेव स्वभाव उच्यते। स च काव्यस्य शरीरकल्पः। अलङ्कार्य एव नोच्यतेऽलङ्कारः क्वापि इति तेषांधीः।[2] कुन्तकस्यैतन्मतमनुपदं दूषितं प्रबुद्धव्यक्तिविवेककृता महिमभट्टेन वक्ष्यमाणविधया। वस्तुस्वभावो द्विधा सामान्यो विशिष्टश्च। वस्तुनो विशिष्टस्वरूपं प्रतिभान्वितानां कवीनां प्रत्यक्षस्य च विषयः। कवेः सा प्रज्ञैव प्रतिभेत्युच्यते रसानुकूलशब्दार्थाहितचेतसि स्वरूपस्पर्शमात्रेणैव योन्मेषमाप्नोति। सा हि भगवतो शङ्करस्य तृतीयं नेत्रम्। यया च लोकत्रयस्यापि पदार्थानां साक्षात्कारो जायते। यतो ह्यत्र प्रतिभया चित्रिताः पदार्थाः साक्षाद्दृष्टा इवाभान्त्यत एवार्थस्वभावस्योक्तिरलङ्कृतिरुच्यते। पदार्थानां सामान्यस्वभावश्चान्येषामलङ्काराणां स्वरूपमुच्यते।[3]

भोजराजास्तु जातिं शब्दार्थालङ्कारत्वेन द्विधामनन्ति। औचित्यवशादलङ्कारत्वेनेष्टाः संस्कृतादयः भाषास्तु जातिरूपा शब्दालङ्कारा इति तेषामभिमतम्। षड्धा चेयं कुत्र का च ग्राह्या हेया चेत्यादि सविस्तरं प्रतिपादितं विद्वद्वर्यैः। अर्थजातेः लक्षणन्तु दण्डिनः एवैतैरात्तं व्याख्यानञ्च रुद्रटानुसार्येव कृतम्।[4] उद्भटात् डिम्भादिशब्दं रुद्रटाच्च क्रियापदमादाय लक्षितं मम्मटाचार्येण 'डिम्भादीनां स्वक्रियारूपवर्णनं स्वभावोक्तिरि' ति। रूपञ्चात्र वर्णसंस्थानादि।[5] स्वभावोक्तिविवेचने रुय्यकेण नूतना सरणिः प्रदर्शिता। सा चास्ति लोकस्वभावात् काव्यस्वभावस्य पृथक्करणम्। प्रतिपादितं च तेन न केवलं वस्तुस्वभावकथनमेव स्वभावोक्तिः सर्वेषामेवालङ्काराणां स्वभावोक्तिरूपापत्तेः ऋते वस्तुस्वभाववर्णनात् कस्यापि काव्यस्याभावात्। अतः सूक्ष्मवस्तुस्वभाववर्णनमेवात्र ग्राह्यम्। सूक्ष्मत्वं च कविप्रतिभामात्रगोचर-

१. नमिसाधुकृता टीका, पृ० ८१।

२. अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः।
अलङ्कार्यतया तेषां किमन्यदवतिष्ठते॥ वक्रोक्तिजीविते १।११।

३. व्यक्तिविवेके २।११४-२२।

४. शृङ्गारप्रकाशे पृ० ३७१ सरस्वतीकंठाभरणे २।६-१७, शृं० प्र० ३६१-६१। स० कं० ३।४-८।

५. स्वभावोक्तिश्च डिम्भादेः स्वक्रियारूपवर्णनम्। काव्यप्रकाशे १०।१११।

त्वम् ।[१] गूढार्थप्रतीत्यलङ्कारवर्गेषु स्थापनस्येदमेव रहस्यं रुय्यकाचार्यस्य । शोभाकर-नरेन्द्रप्रभसूरिविद्याधरविद्यानाथविश्वनाथामृतानन्दनृसिंहविश्वेश्वरसर्वेश्वरादीनामाचार्याणां लक्षणं रुय्यकानुसारि वर्तते[२] । हेमचन्द्रभावदेवावपि स्वभावकथनं जातिमाहतुः ।[३] हेमचन्द्रोऽपि महिमदृशा कुन्तकस्य दूषकः ।[४] उभावपि वाग्भटो जयदेवश्च रुद्रटमनुसरतः ।[५] कविकर्णपूरः, अप्पयदीक्षितः, भट्टदेवशङ्करपुरोहितः, अच्युतरायः, ब्रह्मतन्त्रादयश्च मम्मटमेवानुसरन्ति ।[६] वस्तुतस्तु रुय्यकानन्तरं मम्मटरुय्यकान्यतरानुसरणमेव सुगमः पन्थाः आसीदालङ्कारिकाणाम् ।

वस्तुस्वभावो द्विधा, स्थूलः सूक्ष्मश्च । प्रथमस्तु कवयितृमात्रगोचरः । तस्य वर्णने च न किमपि चारुत्वम्, समस्तकाव्येषु स्वभावोक्तिप्रसङ्गापत्तेः । विधिवद्वर्णितस्य स्वभावस्य सूक्ष्मत्वं, स च कविमात्रगोचरः । कविप्रतिभोपारूढं सूक्ष्मवस्तुस्वभाववर्णनमेव स्यात्स्वभावोक्तिरलङ्कारः, न तु बालकादावत्रस्थितं तत्तत् क्रियाद्येव । यस्य यादृग्रूपं तस्य तथैवासाधारणं वर्णनमेवात्रालङ्कारत्वेनाभिमतम्, यत्र च जायते वस्तुसंवादिनी प्रतीतिः ।[७] वस्तुनः सूक्ष्मधर्मवर्णनं यद्यप्यस्ति भाविकालङ्कारेऽपि किन्तु भाविके वस्तूनां स्पष्टतया ताटस्थ्येन प्रतीतिर्जायते स्वभावोक्तौ तु सतो लौकिकवस्तुनि सूक्ष्मधर्मस्य सामान्यतया हृदयसंवादो भवति ।[८] हृदयसंवादित्वं तु रसवदादावपि समानम् । अत्र च वस्तुसंवादो भवति रसवदादौ तु चित्तवृत्तीनामित्यनयोर्भेदः ।[९] वस्तुतस्तु वास्तवसौन्दर्यावलम्बिनी स्वभावोक्तिः वर्णनीयविषयेषु वस्तुस्वभावसूक्ष्मतया साधारणीकरणद्वारा सचेतनसंवादित्वं विधाय रसत्वमावहति ।[१०]

महाकविकुमारदासकृतौ जानकीहरणे च स्वभावोक्तिः परां विच्छित्तिमावहतीति किञ्चित्प्रदर्शनमेवाभीष्टं नोत्रैतस्याः । दशरथशरविद्धस्य करुणं विलपतः श्रवणकुमारस्य सहजाः सरलाश्च वाचः परां शोकसन्ततिमातन्वानाः व्यथयन्ति

१. अलं० सर्वस्वे सूत्रं ७८ वृत्तिश्च ।

२. सम्यक्स्वभाववर्णनं स्वभावोक्तिः । अलं० रत्नाकरे, सूत्रम् १०६ तथा वृत्तिः, अलं० महोदधिः ८।८२; एकावली ८।७२; प्रतापरुद्रीयम् पृ० २४७; साहित्यदर्पणः १०।९२; अलंकारसंग्रहः ५।१९; नञ्जराजयशोभूषणम् पृ० १८८ तथा अलं० प्रदीपः ।

३. स्वभावाख्यानं जातिः । काव्यानुशासने ६।१३, तुल० काव्यालंकारसारसंग्रहे ६।१३।

४. द्रष्टव्यः—काव्यानुशासनविवेकः पृ० ३८० ।

५. द्र०, वाग्भटालङ्कारः ४।४७ । काव्यानुशासनम् पृ० ३२, चन्द्रलोकः ५।११२ ।

६. द्र०, अलं० कौस्तुभः ८।२८७; कुवलयानन्दकारिका, १६०; अलं० मञ्जूषाकारिका १२४; साहित्यसारः ८।२८९; अलं० मुक्तावली ३४; साहित्यबिन्दुः ५।२२; अलं० मणिहारस्य, भागः ३, पृ० ३१६ ।

७. द्र०, अलं० रत्नाकरः पृ० १८४; तु० अलं० सर्वस्वम् पृ० २०२; उद्योतः पृ० ५२१ ।

८. द्र० अलं० सर्वस्वम् पृ० २०६ तथा संजीवनी पृ० २०६-७ ।

९. द्र० सर्वस्वम् तथा संजीवनी पृ० २०६-७; विमर्शिनी पृ० १८१-२ ।

१०. द्र०, संजीवनी पृ० २१० ।

सचेतसां चेतांसि। मर्मसु विद्धः पश्चिमां दशामापन्नः परिदेवनाकर्शितो राजानमभिवदति सः, राजन्! सत्कुलावतंसेन भवता मां निहत्येह विजने विचक्षुषोः, जराजर्जरितयोर्मे पित्रोरेकालम्बनदण्डो भग्नः। एकेनैव भवत्पृषत्केनानागसो वयं त्रयोऽपि परेतभर्तुः सदनमापिताः। वध्यभावे चास्मासु न कोऽपि दोषोऽस्ति। मृगकुलमध्ये वनेषु वयं वसामः, वृद्धान्धपित्रोः परिपोष एवास्माकं क्रिया, वन्यं फलं चास्ति नो वृत्तिः। व्रती, विनाथोऽनपराधः कठिनास्तरुत्वचो वसानः वनेषु शीतोष्णसारमापिबन् स्वादविहीनवन्याशनजीर्णशक्तिरन्धपितुर्यष्टिरहं तव कृपायाः पात्रमपि वध्यभूतोऽस्मीति चित्रम्। न चास्ति मत्पार्श्वे वराटिकाऽपि, जतुन्यासपूर्णरन्ध्रः जीर्णश्चायं घटः, मुञ्जमयी मेखला वल्कलं चास्ति मे वनमित्येषु न किमपि ग्राह्यं यद् गृहीत्वा भवान् कृतार्थः स्यात्।[1] द्वितीयसर्गे च दशवदनतेजोधर्षितानाममराणां शोकक्षामं वदनं महद्दैन्यमुद्भावयति।[2] वसन्ते च दूरस्थपुष्पस्तवकभङ्गव्याजेन बाहुमूलं प्रदर्शयन्ती पत्यौ पङ्क्तिरथे तिर्यङ्नेत्रक्षेपं विदधती बाला चित्रार्पितेवाभाति।[3]

रामस्य बालभावश्चातीवहृद्यः। यदा च हेलया वनिताः पृच्छन्ति, 'राम इह नास्ति क्व गतः' तदा स बालः स्वकीयहस्ताभ्यां वदनमाच्छाद्यालीकनिलीनत्वं विधत्ते।[4] मुखं धूलिभरितमस्ति नेत्राञ्जनञ्च करेण घृष्टमिति बालस्य स्वाभाविकं चित्रमुपस्थापयति।[5] कश्च तव पितेति धात्रीभिरनुयुक्तः करेण जगत्पतिं निर्दिश्य तदीयाङ्गश्लेषमाप्तवान्।[6] शय्यामधिशयानस्य पितुरङ्के स्वप्तुं परस्परं कलहायमाना भ्रातरो मातॄणामतिशयितमामोदं वितन्वन्ति।[7]

पञ्चमे सर्गे च तपोवनस्य वर्णितं रूपं साक्षाद्दृष्टमिव प्रतीयते। तापसकन्यकाः वृक्षालवालानि पूरयन्ति जलैः मयूराश्च नृत्यन्ति। महीरुहाणां तलेषु विहङ्गानां पानायाम्भःपूरिता घटा निहिताः सन्ति। कपयश्च कन्दराभ्यः स्वीयं नीवरांशमाहरन्तो

१. त्वया त्वनाथस्य विचक्षुषः किं भग्नोऽयमालम्बनदण्ड एकः।
वने जरावेशजडीकृतस्य गुरुद्वयस्य व्रतजीर्णमूर्तेः॥ जानकीहरणे १।७६।
जीर्णो जतुन्यासनिरुद्धरन्ध्रः कुम्भश्च मौञ्जी तरुवल्कलश्च।
एतेषु यन्मां विनिहत्य गम्यं तद्गृह्यतामस्तु भवान्कृतार्थः॥
तत्रैव १।८१।

२. द्रष्टव्यं तत्रैव २।२०-३२।

३. चिक्षेप बाला मुहुरर्धदृष्टिं पत्यावनङ्गक्षतधैर्यवृत्तिः।
दूरस्थपुष्पस्तबकावभङ्गव्याजेन संदर्शितबाहुमूला॥३।१७॥

४. न स राम इह क्व यात इत्यनुयुक्तो वनिताभिरग्रतः।
निजहस्तपुटावृताननो विदधेऽलीकनिलीनमर्भकः॥ ३।८॥

५. मुखमाहृतधूलि गण्डयोः करघृष्टाञ्जनदानमस्य तत्।४।६।

६. कतरस्तव तात उच्यतामिति धात्रीवचनप्रचोदितः।
रुचिरेण करेण निर्दिशन् जगदीशं प्रमदेन सन्दधौ॥ तत्रैव ४।१०॥

७. द्र० तत्रैव ४।१३।

दृश्यन्ते। मुनीनामङ्के मृगपोताः सुप्ताः सन्ति। लतावेष्टितवृक्षमूलेऽतिथीनामासनानि न्यस्तानि निरन्तरं समिध्यमाना हुताग्नयश्चावलोक्यन्ते। मृग्यश्च प्रेम्णा शावकान् लिहन्ति[1]। हिंस्रा अपि पशवः क्रौर्यं विहाय मार्दवमापन्नाः। तापसकुमारकाः द्वीपिनः पुच्छबिन्दून् गणयन्ते। सूर्यातपतप्ताः जन्तवः शाश्वतिकमपि वैरं विहाय कथमिवान्योन्यमाश्रयन्त इति दर्शनीयमस्य रामणीयकमधस्तन श्लोके—

> इमौ हरी संहृतरोषशङ्कितौ नितान्ततप्तौ तपनस्य दीप्तिभिः।
> तलं गजस्य स्रुतगण्डसंपदः फणातपत्रं फणिनश्च वाञ्छतः॥
>
> जा० ह० ५।२४॥

मण्डूकः सर्पस्य फणातपत्रमाश्रयते सिंहश्च गजस्य तलमिति निदाघमाहात्म्यम्।

चित्रीयमाणमिदं दृश्यं यत्र रामाभिहतस्य गजस्य वायसगणः रक्ताहितं तुण्डं रदने मार्जयन् दृश्यते।[3] वायसानामयं स्वभावः मांसादिभक्षणानन्तरं तुण्डं कुत्रापि घर्षयन्ति। यद्यपि च जानकीहरणे स्वभावोक्तेरनुपदं सौन्दर्यमाहितं तथापि चात्र मुग्धजानक्याः कीतिचिद् हावादीन् प्रदर्श्य परिसमाप्यतेऽयं लेखः। कुचमर्दने प्रवृत्तस्य रामस्य कथमङ्गुल्यो विवलिता सीतयेति दृश्यतामधः—

> 'अङ्गुलीषु परिगृह्य राघवे वेधवत्युरसि रागिभिर्नखैः।
> सस्मितं विवलिताङ्गुलिर्बलादात्मनः करमुदास भामिनी॥[4]'

न च सा रामाभिषङ्गं सहते विरहे चात्यन्तमाकुला भवति—

> 'इच्छति स्म विरहं न कामिनी सङ्गमे हि भृशमाकुलीकृता।'[5]

वसनापनयनं मा भूदिति कथं सुप्ता रक्षणं कृतवतीति दृश्यतां मुग्धत्वम्—

> 'अंशुकस्य निशि रक्षणाकुला हस्तयुग्मधृतनीविबन्धना।
> अप्रमादकृति विघ्नमन्तरा स्वापमाप शयने पराङ्मुखी॥'[6]

रामेण तत्सर्वस्वापहरणे सा भृशं रुरोद—

> 'यद्ररक्ष दृढवस्त्रबन्धनैः स्वापकालमवगम्य भर्त्तरि।
> तत्प्रमृष्टवति संगतस्मृतिः सा रुरोद मुषितेव सस्वरम्॥'[7]

अष्टमश्च सर्गः कृत्स्न एव भावसौन्दर्योपेत इति तत्रैवास्वाद्यमित्यलमतिविस्तरेण। वन-

१. द्र० ५।१-६॥
२. प्रगृह्य पुच्छे शिशवस्तपस्विनां मसीपयःसेककृतानिवासितान्।
यदङ्गबिन्दून् गणयन्ति चापलाद्विलोक्य द्वीपिनमेनमग्रतः॥ ५।२३।
३. रक्षोवसापिशितपूरितकुक्षिरन्ध्रः काकुत्स्थबाणहतहस्तिमुखाधिरूढः।
पर्यन्तलग्नरुधिराणि मुहुप्रणादस्तुण्डानि वायसगणो रदने ममार्ज॥ ५।६०॥
४. तत्रैव, ८।४।
५. तत्रैव, ८।७।
६. तत्रैव, ८।१२।
७. तत्रैव, ८।१३।

मनुयान्ती रामाभिरामा रामा द्वित्राण्येव पदानि गत्वा ततः परं गन्तुमसहाऽतः कियद्दूरं येयमिति व्याहरन्ती परं खेदमातनोति चेतसि—

'द्वित्राण्येव रथं त्यक्त्वा पदान्याधाय निःस्पृहा ।
येयमन्यत् कियद्दूरमिति पप्रच्छ मैथिली ॥[1]'

शरदि सारसस्यायं प्रयासः कीदृक्सौन्दर्यसाक्षात्कारमुपस्थापयति—

'निपीड्य चञ्च्वा कमलस्य कुड्मलं विबोधयामास बलेन सारसः ।
सुगन्धिगर्भं मुकुलीकृतं ह्रिया पतिः प्रयत्नादिव कन्यकामुखम् ॥[2]'

अन्ते चायं दण्डः प्रणयिजने कामिन्याः—

'स्तनतटनिहितः करोऽवधूतः परिगदिते समधिश्रितं च मौनम् ।
विहसितमपि सान्त्वने सरोषं प्रणयिजने युवतेरयं हि दण्डः ॥[3]'

इति बहुशः रञ्जयन्ति स्वभावोक्तिच्छटाः जानकीहरणे रसास्वादाहितचेतसां चेतांसीति शम् ।

१. तत्रैव, १०।५०।
२. तत्रैव, १२।१०।
३. तत्रैव, १६।३६।

# कविपति-विद्यापतेर्भू-परिक्रमणम्

**मुनीश्वरझा**

गौतम-याज्ञवल्क्य-कुमारिल-मण्डन-वाचस्पति-प्रभृति-संस्कृत-विदुषां प्रसविनी भूमिर्मिथिलेति बहोः कालात्प्रथितैव। तत्र हि ख्रिष्टीयचतुर्दश-शताब्द्यां विद्यापतिः स्वजन्मना विद्यावगाहनविमलीकृतविख्यात-विश्सवारमूलकवंशमलञ्चकारेति सम्यग् विज्ञातमस्ति। कवि-कोकिल-विद्यापतिकृता 'पदावली' भारतीय-नव्यार्य्यभाषासु पीयूष-वर्षणं मन्यते। वर्ण्य-विषयस्य वक्रता, काव्यस्य रूपप्रधानता, सौन्दर्य्यस्य सरस-योजनं, छन्दसां सुखा श्रुति-झंकृतिः, कवेर्व्यापकानुभूतिश्चेति यत् पञ्चामृत-रूपायनं कविवरेण कृतं, तन्नव्य-भाषा-काव्ये दुर्लभमित्यत्र नास्ति केषामपि विप्रतिपत्तिः।

यथा नूतन-पदावलि-साहित्ये विद्यापतिः स्वकाव्य-वैशिष्ट्येन कविशेखरोऽभूत्, तथैव संस्कृत-साहित्ये स पण्डित-कविरासीत्। तेन कविवरेण संस्कृत-रचनाभिः देव-वाण्याः यन्महत्त्वं गौरवं वा प्रकटीकृतं तन्नूनं श्लाघ्यं हृदयावर्जकञ्चास्ति। महा-कविर्विद्यापतिः संस्कृते विविधविषयान् पाण्डित्यपरिचायकान् अनेकान् ग्रन्थान् व्यरचयत्। तेषु भू-परिक्रमणम्, पुरुष-परीक्षा, लिखनावली, विभागसारः, गङ्गावाक्यावली, दान-वाक्यावली, शैवसर्वस्वसारः, शैवसर्वस्व-प्रमाणभूत-संग्रहः, व्याडिभक्तितरङ्गिणी, वर्षकृत्यम्, गयापत्तलकम्, दुर्गाभक्ति-तरङ्गिणी चेति द्वादश ग्रन्थाः साम्प्रतं समुपलभ्यन्ते। विद्यापतेः अन्याः काश्चन रचनाः शोधार्थिभिः प्राप्त-प्रकाशाः भविष्यन्तीत्याशासे। एतस्यां विपुल-ग्रन्थ-तालिकायां वर्ण्य-विषय-वैविध्यं प्रतिपादन-चातुरीं चावलोक्य परमाश्चर्य्यमादधते विद्वज्जनाः। कथा-नीति-पुराण-सदाचार-पूजनप्रभृति-विवध-विषयेषु ग्रन्थेषु महाकवेर् विद्यापतेर्विशिष्टप्रतिभायाः बहुज्ञतायाश्च परिचयः सम्यग् भवति।

भू-परिक्रमणं विद्यापतेर्भौगोलिकं संस्मरणम्। रचनेयं प्रतिभाशालिनोऽस्य कवेः प्रथमे वयसि प्रथमा कृतिः। मालायां प्रथमपुष्पस्य, तमसि प्रथम-नक्षत्रस्य च यत्स्थानं तदेव कवेरस्य संस्कृत-ग्रन्थमालायां भू-परिक्रमणस्य प्रथमं स्थानं वरीवर्त्ति। ग्रन्थेऽस्मिन् यद्वाग्वैभवं दृश्यते तस्य क्रमिक-प्रतिफलनं तस्य परवर्त्ति-ग्रन्थेषु सङ्घटितमस्ति।

रचनेयममुद्रिता वर्त्तते। अस्याः एकैव लिपिः सम्प्रति कलिकाता-संस्कृत-महाविद्यालयस्य पुस्तकालये सुरक्षिता समुपलभ्यते। प्रस्तुते हस्तलेखे पञ्चाशत् पत्राणि वर्त्तन्ते यत्रान्तिमं पृष्ठं लेखशून्यमस्ति। एवमत्र ९९ पृष्ठानि सन्ति।

मुनि रामवाण-शशि-संख्याके वत्सरे गते एतासां परीक्षणवृत्तिं चक्रे भूपस्य चाज्ञया इति वाक्येनोल्लिखिता (१५३७) तिथिर्निर्दिष्टाऽस्य हस्तलेखस्य[1]। शकाब्द निर्देशाभ्युपगमे सति लेखस्य समयः खिष्टीया षोडशताब्दी संभवति। किन्तु लिपिकरणमेतावत् प्राचीनं न प्रतीयते। अत एव प्रस्तुत-हस्तलेखो मूललेखस्य प्रतिलिपिरेव। एवञ्च निर्दिष्टतिथिः प्रतिलिपिरूपहस्तलेखस्यैवेति मम भाति। अप्राचीनोऽप्ययं हस्तलेखो जीर्णतामुपागतः। क्वचिन्मसीलोपात् क्वचिन्मसीलेपाच्च अनेकेषु पत्रेषु वाक्यान्यपाठ्यतां गतानि। हस्तलेखभाषायाश्च लिपिकरप्रमादवशात् यत्र तत्र व्याकरणाशुद्धयः प्राप्यन्ते। वर्ग-नासिक्य-स्थानेऽनुस्वारः, ववयोः सशयोर्जययोश्चापार्थक्यं मात्राणां ह्रस्वदीर्घविपर्य्ययश्च नव्यप्राच्यार्य्यभाषाणामेव प्रभावः परिलक्ष्यते।

इदं तु प्रमाणप्रमितं यद् रचनाया नाम भू-परिक्रमणं न तु भू-परिक्रमा, यथा चेदं म० म० हरप्रसादशास्त्रि, डा० विमानविहारि मजुमदार, डा० उमेशमिश्र, डा० सुभद्रझा, डा० शिवप्रसादसिंहप्रभृतिभिर्विद्यापति-साहित्यानुरागिभिः विद्वद्भिरुल्लिखित-मस्ति। भू-परिक्रमेति प्रयोगो व्याकरणशास्त्रदृष्ट्याऽपशब्द एव भवति। तथा चाऽस्माकं ग्रन्थकारो विद्यापतिः स्वयमेव ग्रन्थस्य प्रस्तावनायां देश-कथाविवरणान्तेषु च बहुशः सुस्पष्टं तथाविध-नामोल्लेखं कृतवान्। एतद्विषये विद्यापतेरेव वाक्यानि—

> नत्वा गणपतिं साम्बं श्रीविष्णुं रविमम्बिकाम्।
> भूपरिक्रमणग्रन्थो (ॐ) लिख्यते भुवि नैमिषे॥[2]

... इति विद्यापतिकविविरचिते भू-परिक्रमणे ब्रह्मावर्त्ते दयावीरकथा समाप्ता।[3]

... इति विद्यापतिकविविरचिते भू-परिक्रमणे महाप्रयाग-विवरणे युद्धवीर-कथा समाप्ता।[4]

... इति विद्यापतिविरचिते भू-परिक्रमणे काशीतीर्थोभय-कथाविवृतिः समाप्ता।[5]

... इति भू-परिक्रमणग्रन्थे बलदेव-तीर्थयात्रायां सिद्धदेशबलिदेश-विवरणं सम्पूर्णम्।[6]

... इति भू-परिक्रमणग्रन्थे नृसिंहतीर्थ-विवरणे कृपण-कथा समाप्ता।[7]

१. हस्तलेखे पत्रे ५०।
२. हस्तलेखे प० १।
३. हस्तलेखे प० १६।
४. हस्तलेखे प० २५।
५. हस्तलेखे प० ३७।
६. हस्तलेखे प० ४३।
७. हस्तलेखे प० ४४।

# कविपति-विद्यापतेर्भू-परिक्रमणम्

मुनीश्वरझा

गौतम-याज्ञवल्क्य-कुमारिल-मण्डन-वाचस्पति-प्रभृति-संस्कृत-विदुषां प्रसविनी भूमिर्मिथिलेति बहोः कालात्प्रथितैव । तत्र हि ख्रिष्टीयचतुर्दश-शताब्द्यां विद्यापतिः स्वजन्मना विद्यावगाहनविमलीकृतविख्यात-बिश्सवारमूलकवंशमलञ्चकारेति सम्यग् विज्ञातमस्ति । कवि-कोकिल-विद्यापतिकृता 'पदावली' भारतीय-नव्याऽर्यभाषासु पीयूष-वर्षणं मन्यते । वर्ण्य-विषयस्य वक्रता, काव्यस्य रूपप्रधानता, सौन्दर्य्यस्य सरस-योजनं, छन्दसां सुखा श्रुति-झंकृतिः, कवेर्व्यापकानुभूतिश्चेति यत् पञ्चामृत-रूपायनं कविवरेण कृतं, तन्नव्य-भाषा-काव्ये दुर्लभमित्यत्र नास्ति केषामपि विप्रतिपत्तिः ।

यथा नूतन-पदावलि-साहित्ये विद्यापतिः स्वकाव्य-वैशिष्ट्येन कविशेखरोऽभूत्, तथैव संस्कृत-साहित्ये स पण्डित-कविरासीत् । तेन कविवरेण संस्कृत-रचनाभिः देव-वाण्याः यन्महत्त्वं गौरवं वा प्रकटीकृतं तन्नूनं श्लाघ्यं हृदयावर्जकञ्चास्ति । महाकविर्विद्यापतिः संस्कृते विविधविषयान् पाण्डित्यपरिचायकान् अनेकान् ग्रन्थान् व्यरचयत् । तेषु भू-परिक्रमणम्, पुरुष-परीक्षा, लिखनावली, विभागसारः, गङ्गावाक्यावली, दान-वाक्यावली, शैवसर्वस्वसारः, शैवसर्वस्व-प्रमाणभूत-संग्रहः, व्याडिभक्तितरङ्गिणी, वर्षकृत्यम्, गयापत्तलकम्, दुर्गाभक्ति-तरङ्गिणी चेति द्वादश ग्रन्थाः साम्प्रतं समुपलभ्यन्ते । विद्यापतेः अन्याः काश्चन रचनाः शोधार्थिभिः प्राप्त-प्रकाशाः भविष्यन्तीत्याशासे । एतस्यां विपुल-ग्रन्थ-तालिकायां वर्ण्य-विषय-वैविध्यं प्रतिपादन-चातुरीं चावलोक्य परमाश्चर्य्यमादधते विद्वज्जनाः । कथा-नीति-पुराण-सदाचार-पूजनप्रभृति-विवध-विषयेषु ग्रन्थेषु महाकवेर् विद्यापतेर्विशिष्टप्रतिभायाः बहुज्ञतायाश्च परिचयः सम्यग् भवति ।

भू-परिक्रमणं विद्यापतेर्भौगोलिकं संस्मरणम् । रचनेयं प्रतिभाशालिनोऽस्य कवेः प्रथमे वयसि प्रथमा कृतिः । मालायां प्रथमपुष्पस्य, तमसि प्रथम-नक्षत्रस्य च यत्स्थानं तदेव कवेरस्य संस्कृत-ग्रन्थमालायां भू-परिक्रमणस्य प्रथमं स्थानं वरीवर्त्ति । ग्रन्थेऽस्मिन् यद्वाग्वैभवं दृश्यते तस्य क्रमिक-प्रतिफलनं तस्य परवर्त्ति-ग्रन्थेषु सङ्घटितमस्ति ।

रचनेयममुद्रिता वर्त्तते । अस्याः एकैव लिपिः सम्प्रति कलिकाता-संस्कृत-महाविद्यालयस्य पुस्तकालये सुरक्षिता समुपलभ्यते । प्रस्तुते हस्तलेखे पञ्चाशत् पत्राणि वर्त्तन्ते यत्रान्तिमं पृष्ठं लेखशून्यमस्ति । एवमत्र ९९ पृष्ठानि सन्ति ।

मुनि रामवाण-शशि-संख्याके वत्सरे गते एतासां परीक्षणवृत्तिं चक्रे भूपस्य चाज्ञया इति वाक्येनोल्लिखिता (१५३७) तिथिर्निर्दिष्टाऽस्य हस्तलेखस्य[1]। शकाब्द निर्देशाभ्युपगमे सति लेखस्य समयः ख्रिष्टीया षोडशताब्दी संभवति। किन्तु लिपिकरणमेतावत् प्राचीनं न प्रतीयते। अत एव प्रस्तुत-हस्तलेखो मूललेखस्य प्रतिलिपिरेव। एवञ्च निर्दिष्टतिथिः प्रतिलिपिरूपहस्तलेखस्यैवेति मम भाति। अप्राचीनोऽप्ययं हस्तलेखो जीर्णतामुपागतः। क्वचिन्मसीलोपात् क्वचिन्मसीलेपाच्च अनेकेषु पत्रेषु वाक्यान्यपाठ्यतां गतानि। हस्तलेखभाषायाश्च लिपिकरप्रमादवशात् यत्र तत्र व्याकरणाशुद्धयः प्राप्यन्ते। वर्ग-नासिक्य-स्थानेऽनुस्वारः, ववयोः सशयोर्जययोश्चापार्थक्यं मात्राणां ह्रस्वदीर्घविपर्य्ययश्च नव्यप्राच्यार्य्यभाषाणामेव प्रभावः परिलक्ष्यते।

इदं तु प्रमाणप्रमितं यद् रचनाया नाम भू-परिक्रमणं न तु भू-परिक्रमा, यथा चेदं म० म० हरप्रसादशास्त्रि, डा० विमानविहारि मजुमदार, डा० उमेशमिश्र, डा० सुभद्रझा, डा० शिवप्रसादसिंहप्रभृतिभिर्विद्यापति-साहित्यानुरागिभिः विद्वद्भिरुल्लिखित-मस्ति। भू-परिक्रमेति प्रयोगो व्याकरणशास्त्रदृष्ट्याऽपशब्द एव भवति। तथा चाऽस्माकं ग्रन्थकारो विद्यापतिः स्वयमेव ग्रन्थस्य प्रस्तावनायां देश-कथाविवरणान्तेषु च बहुशः सुस्पष्टं तथाविध-नामोल्लेखं कृतवान्। एतद्विषये विद्यापतेरेव वाक्यानि—

नत्वा गणपतिं साम्बं श्रीविष्णुं रविमम्बिकाम्।
भूपरिक्रमणग्रन्थो (ॐ) लिख्यते भुवि नैमिषे ॥[2]

... इति विद्यापतिकविविरचिते भू-परिक्रमणे ब्रह्मावर्त्ते दयावीरकथा समाप्ता।[3]

... इति विद्यापतिकविविरचिते भू-परिक्रमणे महाप्रयाग-विवरणे युद्धवीर-कथा समाप्ता।[4]

... इति विद्यापतिविरचिते भू-परिक्रमणे काशीतीर्थोभय-कथाविवृतिः समाप्ता।[5]

... इति भू-परिक्रमणग्रन्थे बलदेव-तीर्थयात्रायां सिद्धदेशबलिदेश-विवरणं सम्पूर्णम्।[6]

... इति भू-परिक्रमणग्रन्थे नृसिंहतीर्थ-विवरणे कृपण-कथा समाप्ता।[7]

१. हस्तलेखे पत्रे ५०।
२. हस्तलेखे प० १।
३. हस्तलेखे प० १६।
४. हस्तलेखे प० २५।
५. हस्तलेखे प० ३७।
६. हस्तलेखे प० ४३।
७. हस्तलेखे प० ४४।

वरणासि-सरितोर्मध्ये क्रोशत्रयमिता मही ।
वाराणसीति विख्याता प्राणिनां सायुज्यकारिणी ॥[१]

त्रिकालज्ञेन सहितो बलदेवस्तत्र द्वादशरात्रमुवास । पञ्चक्रोशस्य परिक्रमं कृत्वा कामपालः प्रथमं कर्द्दमेश्वरं जगाम । अथान्तरे हल्लिपालदेशमध्ये जतुभूमिकं हली गतवान् । ततः रामेश्वरं कुसुमपुरं गत्वा बलदेवः करेठ-ग्रामं प्राप्तवान् । पुनः कपिलतीर्थे समागतः । तत्र दक्षदेशनः अष्टग्रामाद् गण्डाहग्रामाद् भद्रग्रामाच्चागता भूपतयो बलदेवं पूजयामासुः । सर्वान् भूपालान् विसृज्य नानाधनञ्च परिगृह्य बलदेवो वरणायास्तटे लिङ्गं स्थापयामास । तत्रैव आदिकेशवसन्निधाने निशाभागे महामुनिः सत्यवीरस्य कथां, पश्चादक्रूर-कथाप्रसङ्गे चौरादीनां कथाञ्चाश्रावयत् ।

अथान्तरे प्रभाते च काशीं त्यक्त्वा बलदेवः स्वर्गभूमिं गतवान् । जैनदेवस्य सन्निधौ सारनाथश्च तत्रैव वर्त्तते । स्वर्गभूमिं परित्यज्य गोमतीं नदीं सन्तीर्य्य त्रिदल-काननं संस्पृश्य गाधि-देशं विहाय च बलदेवो वामनाश्रमं च्यवनाश्रमञ्च क्रमशः प्राप्त-वान् । च्यवन-मुनिं प्रणम्य स निर्जरौषधिमापिवत् । ततः कारुषं दक्षिणे कृत्वा कर्म्म-नाशां विहाय च ताडका-विपिनान्ते रामरेखां ददर्श । ततः स पञ्चक्रोश-योगिनां सिद्धि-दायकं सिद्धाश्रमं प्राप्तवान् । भोजराजवंशजैः शासितः सप्तयोजन-परिमितो देशः सदा कर्कश इति विश्रूयते स्म । तत्रैव सोमलालीमहाग्रामः हट्टपुरग्रामश्च । सिद्धदेशेषु त्रीणि शतानि ग्राममुख्याश्च विश्रुताः । तत्रैव रामभक्ताः वसन्ति । कामपालो विश्वामित्र-स्थलं गतवान् । तत्र मुनिमुखाद् विश्वामित्रवृत्तान्तमवगम्य बलदेवो गङ्गायाः उत्तरे तीरे दर्दुरक्षेत्रं जगाम । सरयूसङ्गमान्तिके वलिग्रामञ्च स प्राप्तवान् । तत्रैव सर्वलोक-विमुक्तिदं भार्गवमुनेः सुस्थानमासीत् । वालियान्तरे लोहडिग्रामो विश्रुतः । ततः ताजपुराख्यमहाग्राम आसीत् । तस्मिन् क्षेत्रे त्रिविक्रममूर्त्तेस्त्रिविक्रमस्थलमासीत् । सरयू-गङ्गयोः संभेदे दानकग्रामः पुरा स्थित आसीत्, यत्र शुक्राचार्यमुनिः कुशैः काण-त्वमगात् । तत्र बलदेवो दिवसत्रयमुवास । मुनिश्च तत्रैव भीरुकथां कथयामास ।

ततः कामपालः पञ्चयोजन-व्यत्यये नृ-सिंहतीर्थदेशं प्राप्तवान् । भोजराजस्य पत्तनं पालितपत्तनं चेति द्वे पत्तने विहाय च मणिहारि-सन्निधाने नृसिंहतीर्थं जगाम । तत्रैव पुरा पाद्मकल्पे नृसिंहदेवः प्रादुर्भावमाप्तवान् । नृसिंहनखारभूमिश्च त्रयोदश-योजनान्विताऽऽसीत् । सा च भूमिः कारुष-पाटलिपुरयोर्मध्यवर्त्तिनी अत्युग्राऽतिनिर्दया चासीत् । तत्र रम्यं विश्वम्भरपुरं चाराणपत्तनञ्च । तत्रैव कुडमिजाति-सुखास्पदं जगदीशपुरं प्राप्यते । निकटे हि भालुकाघट्टो वर्त्तते यत्र सदा महद् दस्युभयं तिष्ठति । बलदेवः पञ्चरात्रं तत्रोवास । तत्रैव तं प्रति त्रिकालज्ञो मुनिः कृपण-कथां प्रोवाच ।

तदनन्तरं बलदेवो नरहरिदेशकं परित्यज्य पाटलिसंज्ञकं देशं गतवान् । तत्र (पाटलि) देवीं पूजयित्वा स नगर-शोभनं दृष्टवान् । ततः गङ्गामुत्तीर्य्य गङ्गा-गण्डकी-सङ्गमं गतवान् । सङ्गमे स्नात्वा पितृंश्च तर्पयित्वा तीरभुक्तिं विहाय च स जनकदेशं

१. हस्तलेखे; प० सं० २५ ।

प्राप्तवान्। जनकपुरे-दक्षिणांशे सप्तक्रोशव्यतिक्रमे डिजगलमहाग्रामे जनकस्य गृहा आसन्। तन्निकटे सरितां श्रेष्ठा यमुना प्रवहति। डिजगलस्य दक्षिणे भागे योजनार्द्ध-व्यतिक्रमे गिरिजसञ्ज्ञको ग्रामः, यत्र पुष्करिणीद्वयान्तरे प्राचीन-मन्दिरमासीत्। तत्रैव भैरवस्थानम्। भैरवं पूजयित्वा बलदेवः सीतामण्डपभूमिकां गतवान्। सीताकुण्डस्य दक्षिणांशे क्रोश-त्रयव्यतिक्रमे सूरस्थानम्। तन्निकटे धनुषग्रामः, यश्चाभीराणां निवास-भूः। गिरिजा-दक्षिणभागे पञ्चक्रोशव्यतिक्रमे आहीरीग्रामसंज्ञको महाग्राम आसीत्। नातिदूरे नदीपु ह्रस्वा कमला नदी वहति। आहीरीपत्तनस्य दक्षिणे पञ्चक्रोशव्यतिक्रमे विशोरो-नामकग्रामः स्थितः। ततः पञ्चक्रोशव्यत्यये अरगाजापुकुण्डं, दशरथकुण्ड गङ्गा-सा (ह)गरकुण्डञ्च आसन्। गङ्गासागर-कुण्डे जलेश्वरो महादेवो निवसति स्म। तत्रैव गौतमकुण्डे रात्रौ त्रिकालज्ञो धौम्यो मुनिरलसकथां बलदेवाय श्रावयामास। एवं प्रकारेण जनकदेश-विवरणेन ग्रन्थान्तो भवति।

उल्लिखितेन सन्दर्भेण स्पष्टमेतत् यदस्य ग्रन्थरत्नस्य शैली पञ्चतन्त्रचम्पू-ग्रन्थस्य सदृशी विद्यते। परन्तु पञ्चतन्त्रस्य पशुपक्षिकथाः ग्रन्थेऽस्मिन् न प्राप्यन्ते। पुरोणेतिहास-मानवीयकथा एवात्र सन्तिष्ठन्ते। भू-परिक्रमण-कथासु दानवीरादित्य-प्रतापो विक्रमादित्यः, विवेकशून्यो यवनराज अलसदीनः, कर्णाट-कुलसंभवः पराक्रम-रसिको मल्लदेवो नाम मिथिला-राजपुत्रः, कान्यकुब्जेश्वरो जयचन्द्रः, कर्णाटकुलोत्पन्नो नरसिंहो नाम चौहानकुलसंभवश्चाचिको नाम च राजकुमाराविति प्रभृतयः इतिहास-प्रसिद्धाः नायकाः सन्ति। एवञ्च भू-परिक्रमणे भूगोलेतिहासयोः सम्यग् मिश्रणमस्ति।

भू-परिक्रमणे कवेः कलावैशिष्ट्यं सर्वत्रैव दृष्टिपथमायाति। विषय-वर्णनं हि रुचिरं चित्तावर्जकं काव्यानुरूपं लोकरीत्यनुगं च पुर उपतिष्ठते। स्वयं कविनोक्तम्—

> तच्च रीत्या हि लोकस्य काव्यरीत्या च भूमिप।
> लक्षीकृत्य पद्यवाक्यं तेने विद्यापतिः कविः॥[1]

भाषाऽपि विषयानुकूला। गद्ये पद्ये च अद्भुतप्रवाहो विद्यते। भूपरिक्रमणस्य संस्कृत-भाषा पुराण-पञ्चतन्त्रभाषेव सहजाऽतिसरला च भवति। इयं हि जनसामान्य-बोधगम्येति।

देशविवरणमतिस्पष्टं सजीवञ्चाऽस्ति। वस्तुतः ग्रन्थस्य स्थलवर्णनम् वर्त्तमान-गजेटियराख्यविवरणेन साम्यं भजते। स्फुरच्चलच्चित्रमिव ग्रन्थेऽस्मिन् विवरणं वाचकानां श्रोतॄणाञ्च मनांसि आवर्जयति।

संक्षेपतो भूपरिक्रमणमेको विशिष्टो ग्रन्थः। अस्य मुद्रणं परमावश्यकमस्ति। ग्रन्थोऽयं कलिकताविश्वविद्यालयशोधप्रकाशनमालायामचरिमेवान्यतमं पुष्पम् अस्मद्-प्रयासेन प्रकाशनं प्राप्स्यतीति हर्षस्य विषयः॥

१. हस्तलेखे पत्रे ३९।

# काव्यस्वरूपविवेकः

राजमणिपाण्डेयः

अस्ति काव्यतत्त्वं यत्र वादिनामविवादः। जलमयो जलनिधिरिव काव्यमर्थशब्दमयमिति न न विदितं विदुषाम्। ननु शब्दार्थमयत्वमेव मूर्तिनिर्माणसङ्गीतादिभ्यः कलान्तरेभ्यः काव्यस्य भेदकम्। अत्र विशिष्टशब्दार्थाविति, विशिष्टार्थप्रतिपादकः शब्द इति, विशिष्टं वाक्यमिति, उपाख्यानमिति, भाषेति, संवाद इति, अभिव्यक्तिरिति अन्ये चैवंविधा वादाः। भणितिष्वेतासु न हि पारमार्थिकी भिदा काचित्। अभिव्यक्तिविशेषस्य काव्यस्य वाणी स्वरूपानतिरिक्तसाधनमित्यत्र सर्वेषामैकमत्यम्। महाकविना कालिदासेन शरीरस्याद्यधर्मसाधनत्वं गीतम्[1]। शब्दार्थोभयशरीरसाधनात्मकं काव्यमिति[2] भारतीया आचार्याः। पाश्चात्यैरपि विद्वद्भिर्वाक्शरीरसाधनं काव्यमिति स्वीक्रियते[3]। काव्यलक्षणे अतिक्रान्तविशिष्टशब्दार्थरचनातिरिक्तं किञ्चिन्नूतनं वस्तु न केनचित् प्राकाशि नापि प्रकाश्येत। तथाहि—श्रवणेन्द्रियग्राह्यो गृहीतसङ्केतः शब्दः। बुद्धिगम्यः सहृदयहृदयभावनीयश्चार्थः। अनयोः शब्दार्थयोः विशिष्टविरचनमेव काव्यम्। अत्रायं विमर्शः—

## साहित्यदर्पणकारविश्वनाथकृतकाव्यलक्षणविमर्शः

शब्दार्थशरीरं काव्यमिति स्वीकुर्वन्नपि साहित्यदर्पणकारः काव्यस्वरूपप्रतिपादनवचने वाक्यमिति समावेशयत्। कवीनां निरङ्कुशत्वं काव्यवचनस्य च वक्रत्वमित्यादि पर्यालोच्य न हि सरलकाव्यात्मकवचनमिव काव्यवचोऽपि वाक्यमिति तथा रोचते यथा पदावलीति वा शब्द इति वा शब्दार्थाविति वा। अत्र विश्वनाथेन "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तःपदोच्चयः" इति परम्पराप्राप्तशास्त्रीयवाक्यलक्षणं प्रोक्तम्।

सत्यमाकाङ्क्षायोग्यतासत्तियुक्तपदोच्चयात्मकं वा कारकान्वितक्रियात्मकं वा काव्यवचनं भूयिष्ठं भवति तथापि शास्त्रेभ्यो विलक्षणमुक्तिवैशिष्ट्यमस्ति काव्यस्य। तद्यथा—

१. शरीरमाद्यं खलु धर्मसाधनम्। कुमारसम्भवे ५-३३।
२. शब्दार्थशरीरं काव्यम् इति लोचनकाराः। शब्दार्थौ (काव्यपुरुषस्य) शरीरम् इति काव्यमीमांसायां राजशेखरः। काव्यस्य शब्दार्थौ शरीरम् इति विश्वनाथः।
३. ...from the first conception of a poem, content and form are, like soul and body indivisible. Def. 102. A. W. Schlegel.

भुक्ता हि मया गिरयः स्नातोऽहं वह्निना पिबामि वियत् ।
हरिहरहिरण्यगर्भा मत्पुत्रास्तेन नृत्यामि ॥[1]

इत्यादीनामुन्मत्तप्रलपितानां पदोच्चयानाम् अवाक्यत्वेऽपि काव्यत्वमस्त्येव । प्रकरणौचित्यनिर्वाहकत्वात् । नाट्यशास्त्रानुसारेण असत्प्रलापस्य वीथ्यङ्गविशेषस्योदाहरणमिदम् । नात्र दोषः कश्चित् । "उत्स्वप्नमदोन्मादशैशवाद्यवस्थासु उन्मत्तप्रलापितैव विभाव इति दशरूपककाराः । अपि च—

सुताः कमाहूय चिराय चुङ्कृतैर्विधाय कम्प्राणि मुखानि कं प्रति ।
कथासु शिष्यध्वमिति प्रमील्य स स्नुतस्य सेकाद् बुबुधे नृपाश्रुणः ॥[2]

इह हि "सुताः कमाहूय चिराय चुङ्कृतैः" इत्यत्र "भक्ष्यं याचिष्यथ" इति नोदितम् । "विधाय कम्प्राणि मुखानि कं प्रति" इत्यत्र च गोष्ठीः कथयिष्यथ" इति । वचनद्वयमेतन्नो सामान्यवाक्यम् । तथा च—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण ॥[3]

अत्र शान्तमथवेत्येतत् अत्याक्षीरित्यस्याक्षेपकं सल्लोकोत्तरेण प्रकारेण वाक्यं पूरयति । वाक्यसर्वस्वायमानक्रियावाचकपदाप्रयोगनिबन्धनमेतद्वचनस्य लोकोत्तरत्वम् । न खलु महाकविना वाचकपदैर्वाक्यं पर्यन्ततां प्रापितम् । अत्राक्षेपालङ्कारः । अनङ्गीकृताक्षेपालङ्कारेषु काव्येतरेषु न्यायशास्त्रादिषु न हीदृशानामप्रयुक्तक्रियापदानां ल्यबन्तपदसहितानां वचनानां वाक्यत्वेन समादरो दृश्यते । अत्र भोजदेवेन अर्थाकाङ्क्षानिवर्तको वाक्यशेषो मन्यते । अध्याहारस्तु शब्दाकाङ्क्षानिवर्तक इत्युच्यते । तन्मते सर्ववाक्यानां विधिनिषेधपर्यवसायित्वात् साक्षात् तदश्रुतावपि तदुपकल्पनं वाक्यशेषः । तद्यथा—आर्यनिवासोऽयं देश इत्युक्ते इहैव स्थातव्यम् इति, मध्याह्नो वर्तत इत्युक्त इहैव भोक्तव्यम् इति, सचोरः पन्था इत्युक्ते न गन्तव्यम् इति, ग्राहास्सरित्यस्यामित्युक्ते न स्नातव्यमिति वाक्यशेषो विज्ञायते[4] । अत्र इहैव स्थातव्यमित्यादिर्ध्वनिवादिभिर्ध्वनिरित्युच्यते । अन्यत्र यत्तु त्वं जीवितमित्यादावुदाहरणे अत्याक्षीरिति वाक्यशेष उच्यते तद्विचार्यते न हि आर्यनिवासोऽयं देश इत्यादिकमिव वचनमिदं सम्पूर्णं वाक्यम् । मूलक्रियापदस्यैवाप्रयुक्तत्वात् । अनध्याहार्यत्वाच्च । पीनो देवदत्तो दिवा न भुङ्क्त

१. दशरूपके पृ० १५६ चौखम्बा ।
२. नैषधीयचरिते १-१४२ ।
३. उत्तररामचरिते ३।२६ ।
४. भोजदेवकृतशृङ्गारप्रकाशस्य विमर्शे राघवन्कृते । मद्रास ।

इत्यत्र रात्रिभोजनमर्थापत्त्या कल्प्यते। त्वं जीवितमित्यादि वचनं नो सम्पूर्णं वाक्यम्। अतोऽयमर्थापत्तेरविषयः। अत्र प्रकरणादत्याक्षीरित्यवगम्यते। वस्तुतस्तु अनन्यपरतन्त्र-कविवचनवैशिष्ट्यस्योदाहरणमिदम्। प्रकरणवशात् तामेव शान्तमथवेत्येतत् तामेव तथाविधाम् अग्नौ विशुद्धाम् आहितगर्भामनागसं विस्रब्धां धर्मपत्नीं तथा निष्करुण-मत्याक्षीर्यथा कथयितुमपि न पार्यत इत्याद्यर्थं व्यनक्ति। अत्र निष्करुणत्वाद्यतिशय-प्रतिपादनप्रयोजनमुद्दिश्य क्रियापदं नोक्तम्।

नैषधीयचरितोत्तररामचरितयोरनयोरुदाहरणयोर्गौरश्वः पुरुषो हस्तीत्यादि-वचनानामिव नावाक्यत्वम्। न हि काव्यवचनं साधारणं वाक्यम् अपि तु वाक्यविशेषः। क्वचित्तु अवाक्यत्वेऽपि काव्यत्वं भवतीत्यस्य भुक्त्वा हि मया गिरय इत्यादि प्रमाणम् उक्त-पूर्वम् मुख्यार्थामुख्यत्वाद् ध्वननप्रधानत्वाच्चोत्तमकाव्यस्य "अपि त्वं ब्रूतस्[1] !" इति वचनमसम्पूर्णवाक्यं सदपि सम्पूर्णार्थबोधनायालम्। एवं यद्यपि काव्यवचनस्य सामान्य-तया नावाक्यत्वम्, तथापि कवीनां निरङ्कुशत्वं काव्यवचनस्य च वक्रत्वमनुस्मृत्य न हि काव्यवचोऽपि वाक्यमिति तथा युज्यते यथा शब्द इति वा शब्दार्थाविति वा। तदित्थं न हि काव्यलक्षणे वाक्यमित्यस्य सन्निवेशस्तथा सङ्गच्छते यथा शब्दस्य शब्दार्थयोर्वा।

रमणीयार्थप्रतिपादकः शब्दः काव्यमिति जगन्नाथकृतकाव्यलक्षणं खण्डयद्भिर् नागेशभट्टादिभिः "काव्यं पठितम्", "काव्यं श्रुतम्", "काव्यं बुद्धम्" इत्यादिवचनैः शब्दार्थयोरुभयोरपि काव्यपदार्थत्वं प्रादर्शि। "शब्दार्थौ यत्र गुणीभूतात्मानौ कमप्य-र्थमभिव्यङ्क्तस्तदाद्यम्"[2] इत्यत्र अर्थव्यञ्जनेऽर्थान्तरप्रतिपादकस्य अर्थस्यापि शब्देन समशीर्षिकया प्रतिपादकत्वाविशेषाद् गणनम्, अथ च 'स तावद् द्विविधः—शब्दशक्ति-मूलोऽर्थशक्तिमूलश्चेति[3] वचनम्, काव्यस्य व्यासज्यवृत्तितया शब्दार्थोभयरूपत्वं द्रढयतः। एवं न केवलं शब्दस्यैव यावदर्थस्यापि प्रतिपादकत्वमस्ति।

यत्तु "शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली"[4] इति वचनं तत्र व्यवच्छेदः समुच्चय एव न त्ववच्छिन्नत्वं विनिगमनाविरहात् इत्येवं महामहोपाध्यायैः गोकुल-नाथैः "शब्दार्थशरीरं काव्यम्" इति दण्डिनोऽभिमतमिति व्याख्यातम्। यथा तथास्तु। परम्प्राक्तनेऽपि कालेऽर्थाभिभाविनी शाब्दी पक्षपातितासीदित्यत्र भामहवचनं प्रमाणम्। तथाहि—

रूपकादिमलङ्कारं बाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्॥

१. Et tu Brutes, then fall Caesar. Julius Caesar.
२. रसगङ्गाधरे। पृ० ३३। चौखम्बा काशी।
३. तत्रैव। पृ० २।
४. काव्यादर्शे।

तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥[1]

प्रायेणाचार्यैः शब्दार्थौ सहितौ काव्यमित्युच्यते । साहित्यापरपर्यायः काव्यशब्दः । कस्तावच्छब्दः ? कश्चार्थः ? ययोस्साहित्यं काव्यनामभाग्भवति । ॐ इत्येकाक्षरं ब्रह्मेत्यादिना शब्दात्मा प्रणवो गीयते । शब्दस्वरूपस्य वेदस्य पारमेश्वरपदं मन्यते । स्फोटवादिभिः कूटस्थं शब्दब्रह्म प्रतिपाद्यते । "आदौ शब्द एवासीत् । शब्दश्च ईश्वरेण सहासीत् । शब्द एव च ईश्वर आसीद्" इति बाइबिलात्[2] । अन्यत्रापि एवमेव पारमार्थिकी शब्दसमीक्षा उपलभ्यते । अत्र काव्ये पुनर्नैषोऽर्थोऽभिप्रेतः शब्दस्य । इह गृहीतसङ्केतो वर्णो वा वर्णसमुदायो वा शब्द[3] इत्युच्यते । अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारः समयापरपर्यायः सङ्केतः परम्पराप्राप्तः । यस्य शब्दस्य यस्मिन्नर्थे नियमेन समयो गृह्यते स शब्दस्तस्यार्थस्य वाचको भवति । सोऽर्थश्च वाच्यः । अस्मिन्नेव साक्षात्सङ्केतिते वाच्येऽर्थे वाचकस्य शब्दस्य वृत्तिः शक्त्यपरपर्यायाऽभिधेत्युच्यते । आकाङ्क्षायोग्यतासन्निधिमद्वाक्यघटकपदसमूहस्य वाक्यस्य अभिहितार्थान्वयात्मके वाक्यार्थेऽपदार्थे व्यापारः तात्पर्यवृत्तिरिति अभिहितान्वयवादिनः । आकाङ्क्षायोग्यतासन्निधियुक्तवाक्यांशस्वरूपपदसमूहस्य वाक्यस्य सामान्यविशेषाच्छादितरूपेतरपदार्थान्वितपदार्थात्मके वाक्यार्थेऽपि अभिधाव्यापार इत्यन्विताभिधानवादिनः । किन्तु वाक्याद् अन्यत्रापि पदप्रयोगो दृश्यते । तद्यथा—गौरश्वः पुरुषो हस्तीति । ननु नास्त्ययं पदसमूहो वाक्यम्, नाप्यस्त्यन्वयार्थः कश्चित्, तथापि प्रतिपदं पदार्थोऽस्त्येव यत्राभिधावृत्तिर्वर्तते । इतरथा हि सार्थकानर्थकयोः शब्दयोर्भेदो न स्यात् । न हि वाक्य एव पदानां सपदार्थकत्वम्, अन्यत्र च पदार्थाभाव इति । या अभिधावृत्तिः गौरश्वः पुरुषो हस्तीत्यत्र वर्तते, न हि सैवावगुण्ठा देवदत्त गामानयेत्यत्रापि । तस्मादस्ति अन्वयार्थबोधिका तात्पर्यवृत्तिरित्यन्विताभिधानवादिभिरभ्युपगन्तव्यम् भवति ।

"अग्निर्माणवकः", "गङ्गायां घोषः" इत्यादिषु अग्निगङ्गादिशब्दैः तैक्ष्ण्यतटादयोऽमुख्यार्था लक्ष्यन्ते । अत्र हि दहनप्रवाहादिवाच्यार्थेषु बाधेन विधुरीकृता अग्निगङ्गादिशब्दा मुख्यार्थसम्बद्धार्थान् तैक्ष्ण्यतटादिकान् लक्षयन्ति । गृहीतसङ्केतकल्पस्य लाक्षणिकशब्दस्य लक्ष्यज्ञापिका वृत्तिर् अभिधापुच्छभूता लक्षणेत्यभिधीयते । इमौ विशिष्टार्थकौ लक्ष्यलक्षकौ शब्दौ । योऽर्थः तैक्ष्ण्याविक्रयपावनत्वादिरूपो ऽनभिधीयमानोऽपि अलक्ष्यमाणोऽपि स्फुटमवभासते स व्यङ्ग्य इत्यभिधीयते । तद्विशेषार्थप्रतिपादकः शब्दो व्यञ्जकः, व्यापारश्च व्यञ्जना । सङ्केतितादभिधेयात् सङ्केतितकल्पाल्लक्ष्याच्च अन्य एव व्यङ्ग्योऽर्थः । न हि अनुमानात्मकमेव ध्वननमिति सुष्ठु प्रतिष्ठापितं

१. काव्यालङ्कारे १-१४, १५ । पृ० २ ।
२. There was word in the beginning, word was with God and word was God.—Bible. First sentence of St. John's Gospel.
३. स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा । काव्यप्रकाशे पृ० २५ । पुण्यपत्तनम् ।

सूरिभिः। वस्त्वलङ्कारसात्मकत्वेन ध्वनेस्त्रैविध्यम्। एवं वाच्यलक्ष्यव्यङ्ग्यात्मकस्यार्थस्य वाचकलाक्षणिकव्यञ्जकात्मकस्य शब्दस्य च साहित्यं साहित्यम्।

तिरस्कृतदर्शनान्तरप्रतिपादितभेदास्स्वीकृतस्वाराज्या अद्वैतवादिनो ब्रह्मवादिनो यथा सर्वमेवेदमात्मेति दर्शयन्ति, तथैव अनङ्गीकृताङ्गभूतालङ्कारादिमुख्यभावा विचक्षणा ध्वननात्मनि काव्ये नास्ति ध्वनिव्यतिरिक्तं किञ्चिदिति प्रतिष्ठापयन्ति। तथा हि— वाच्योऽपि ध्वनिः, वाचकोऽपि शब्दो ध्वनिः। द्वयोरपि व्यञ्जकत्वं ध्वनतीति कृत्वा। सम्मिश्र्यते विभावानुभावसंवलनयेति व्यङ्ग्योऽपि ध्वनिः, ध्वन्यत इति कृत्वा। शब्दनं शब्दः शब्दव्यापारः। न चासावभिधादिरूपः, अपि त्वात्मभूतः। सोऽपि ध्वननं ध्वनिः। काव्यमिति व्यपदेश्यश्च योऽर्थः सोऽपि ध्वनिः, उक्तप्रकारध्वनिचतुष्टयत्वात्[1] इति लोचनकाराः। वाच्यवाचकव्यङ्ग्यव्यञ्जनात्मकध्वनिप्रतिष्ठानस्य सम्पूर्णस्य काव्यस्य ध्वनित्वे स्वीकृते नास्ति गुणादीनामपि ध्वनिवहिर्भूतत्वं नाम। तदेवं वाच्यलक्ष्यव्यङ्ग्यात्मकस्यार्थस्य वाचकलाक्षणिकव्यञ्जकात्मकस्य शब्दस्य च तुल्यप्राधान्यात्मकं साहित्यमेव काव्यापरपर्यायं साहित्यम्।

न हि "शब्दार्थौ सहितौ काव्यम्" इति वचनं काव्याकाव्यात्मकवाङ्मयनित्यवर्तमानाभिधातात्पर्यलक्षणात्मकशब्दार्थसम्पर्कप्रतिपादकं सामान्यवाक्यं, अपि तु विशिष्टसाहित्यपरमसाधारणं विलक्षणचमत्कारकारककाव्यलक्षणवचनम्। तत्र शब्दार्थयोरभिधातात्पर्यलक्षणात्मकसर्वसाधारणसाहित्यव्यतिरिक्तो ध्वनिरूपापन्नसम्पूर्णकाव्यो ध्वननात्मा सम्बन्ध उत्तमकाव्ये विशेष इति अनुमानभावकत्वादिशब्दार्थसम्बन्धखण्डनपुरस्सरं ध्वनिवादिभिस्स्थाप्यते। अनुत्तमकाव्ये पुनः शब्दार्थस्वरूपविन्यासमयो गुणालङ्कारादोषात्मा विशेषः।

वाच्यवाचकसम्बन्धोऽभिधा, वाक्यवाक्यार्थसम्बन्धस्तात्पर्यम्, लक्ष्यलक्षकसम्बन्धो लक्षणा, व्यङ्ग्यव्यञ्जकसम्बन्धश्च व्यञ्जना। एवमभिधातात्पर्यलक्षणाव्यञ्जनात्मकः शब्दार्थसम्बन्धः साहित्यमिति स्फुटति। उत्तमकाव्ये च ध्वननात्मकं विशिष्टशब्दार्थसाहित्यम्। काव्यस्य गुणालङ्कारादोषात्मा विशेषः शब्दार्थसाहित्यनिबन्धनः। तथा हि—

"किन्तु विशिष्टमेवेह साहित्यमभिप्रेतम्। कीदृशम्? वक्रताविचित्रगुणालङ्कारसम्पदां परस्पराधिरोहः।"[2]

अपि च—

"सहितावित्यत्रापि यथायुक्ति स्वजातीयापेक्षया शब्दस्य शब्दान्तरेण, वाच्यस्य वाच्यान्तरेण च साहित्यं परस्परस्पर्धित्वलक्षणमेव विवक्षितम्। अन्यथा तद्विदाह्लादकारित्वहानिः प्रसज्येत।"[3]

गुणालङ्काराणां शब्दार्थस्वरूपविन्यासशोभात्मत्वात् शब्दार्थोभयनिष्ठत्वम्। रसश्च अर्थविशेषः। अत्र भोजदेवोऽभिधाविवक्षातात्पर्यप्रविभागसव्यपेक्षासामर्थ्यान्व-

१. पृ० २४५-६।
२. वक्रोक्तिजीविते पृ० २५।
३. तत्रैव पृ० २६।

यैकार्थीभावदोपहानगुणोपादानालङ्कारयोगरसावियोगरूपाः शब्दार्थयोर्दश सम्बन्धाः साहित्यमुच्यते[1] इत्याह। द्वादशस्वेतेषु दोषहानं गुणादानमलङ्कारयोगो रसावियोगश्चेति चत्वारः काव्यविषयकसम्बन्धाः, अन्ये च व्याकरणनिबन्धना इति प्रतिपादितम्।

परमार्थतो हि सम्पृक्तशब्दार्थस्य काव्यस्याद्वैततत्त्वमनुस्मृत्य न किञ्चिन्न प्रधानमिति प्रतीयते। शब्दार्थगुणालङ्कारापेक्षया रसादीनामुत्कर्षः सम्यक् प्रतिपाद्यते। अनभिधेयोऽलक्षणीयो रसो हि ध्वन्यर्थविशेषः। वक्रोक्तेर्ध्वनेश्च एकत्र ऐकात्म्यं दृश्यते। रामोऽस्मि सर्वं सहे इत्यत्र वक्रत्वमेव ध्वनिः, यद्वा ध्वनिरेव वक्रत्वम्। शब्दार्थगुणालङ्कारादिभेदसव्यपेक्षेयं मीमांसा। अभेददृष्ट्या तु सम्पूर्णः काव्यविशेषो ध्वनिरित्युच्यते। तदेवं नास्ति विशिष्टशब्दार्थविन्यासव्यतिरिक्तं काव्यं किञ्चित्। तत्रभवान् वक्रोक्तिजीवितकारो विशिष्टशब्दार्थविन्यासस्वरूपानतिरिक्तां वक्रोक्तिं प्रत्यपद्यत। तथा हि—वर्णविन्यासपदपूर्वार्द्धप्रत्ययप्रबन्धानाम्, अन्तर्भावितसकलालङ्कारवर्गस्य च, एवं सामस्त्येन षट्प्रकारं वक्रत्वं न विशिष्टशब्दार्थरचनातिरिक्तम्। तत्र हि "रामोऽस्मि सर्वं सहे" इति पदपूर्वार्द्धवक्रतायाः प्रथमप्रकारत्वेनोदाहृतम्। अत्रैव तत्रभवानानन्दवर्धनाचार्योऽर्थान्तरसङ्क्रमितवाच्यध्वनिं मन्यते। एवमत्र वक्रोक्तिश्च ध्वनिश्चेति पर्यायशब्दौ। एवम् उदाहरणान्तराणि प्रतिपादनप्रकारपार्थक्यप्रख्यापकानि।

तदित्थं स्वरूपानतिरिक्तशब्दार्थसत्ता काव्ये न विमतिपदपतिता। ये तु भाषासंवादाभिव्यक्त्युपाख्यानेत्यादिवादिनस्तेऽपि प्रतिपादनप्रकारान्तरेण अभिव्यक्तिविशेषस्य काव्यस्य वाणी स्वरूपानतिरिक्तं साधनमिति शंसन्ति। श्रवणेन्द्रियग्राह्यो गृहीतसङ्केतोऽर्थप्रतिपादकः शब्दः, बुद्धिगम्यः सहृदयहृदयभावनीयश्चार्थः। वाच्याद् भिन्नस्य अर्थस्य सर्वथा सद्भावः तैरपि स्वीक्रियते। भावोऽपि अर्थः, व्यङ्ग्यश्चार्थः[2]। अभ्यूहेनानुमानेन च अर्थः प्रकाश्यते[3]। अनुकृतजगज्जनकाभेदसम्बन्धौ शब्दार्थौ[4]। पाश्चात्यैरपि विद्वद्भिः शब्दार्थयोरविभाज्यः सम्बन्धो मन्यते[5]। न हि वागर्थतद्विन्यास-

१. भोजदेवकृतशृङ्गारप्रकाशस्यविमर्शे राघवन्कृते। मद्रास।

२. Meaning is ... ... ... ... ...

XI. Emotion aroused by anything.

... ... ... ... ...

XIII. D What anything suggests.—Meaning of Meaning. Richards. C. K. Ogden. New York, 1923.

३. Inference and guesswork! What else is interpretation?

I. A. Richards, Philosophy of Rhetoric, p. 53.

४. वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये। जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥

रघुवंशे १-१।

५. ......content and form are like soul and body indivisible.

A. W. Schlegel

Definition of poetry no. 102.

रूपवैशिष्ट्यात्मकगुणालङ्कारभावरसादीनामन्यतमस्य केनचिदभावः प्रोच्यते । केवलं किमीयं प्राधान्यमिति मतभेदः। यत् स्थानमाश्रीयते तत् केन्द्रीभूतं सत् सर्वाणि अन्यानि मण्डलीकरोतीति दृष्टिविशेषः। काव्यस्य भावरसाद्युद्‌बोधकत्वं प्रायेणामनन्ति सूरयः। तथा हि—

समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा ।
सोऽनुव्याहरणाद् भूयः शोकः श्लोकत्वमागतः ॥[1]

इति रामायणवचनात् करुणरसस्थायिभावशोकात्मा स श्लोक इति भावस्यैव विशिष्ट-पदार्थात्मकम् अभिव्यक्तमवस्थान्तरं काव्यमिति परिस्फुटति । अस्यैव ध्वनेः प्रतिध्वनी रघुवंशध्वन्यालोकवक्रोक्तिजीवितादिषु श्रूयते ।

तद्यथा—

(१) तामभ्यगच्छद् रुदितानुसारी कविः कुशेध्माहरणाय यातः ।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥[2]

(२) काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥[3]

(३) [वक्रोक्तिजीवितस्य षट्चत्वारिंशे पृष्ठे उदाहृतः पूर्वो रघुवंश-श्लोकः ।]

अन्यत्रापि रामायणे—

रसैः शृङ्गारकरुणहास्यरौद्रभयानकैः ।
वीरादिभी रसैर्युक्तं काव्यमेतदगायताम् ॥[4] इति गीयते ।
न हि रसादृते कश्चिदर्थो नाम प्रवर्तते ।[5]
विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः ।
... ... ... ... ...
यथा बीजाद्‌भवेद् वृक्षो वृक्षात्पुष्पं फलं तथा ।
तथा मूलं रसाः सर्वे तेषु भावा व्यवस्थिताः ॥

इत्यादिनाट्यशास्त्रवचनानि नाट्यशास्त्रे
रसप्राधान्यप्रख्यापनायालम् । "हास्यकारितत्त्वभृन्मानुष्यकम् । विचारो हासं निरुन्धे । काव्यं तं पोषयति । सर्वकृत्यसमवेतेषु इच्छासुखदुःखेषु भावेष्वप्ययमेव न्यायः। सर्वेष्वेतेषु काव्यं निग्राह्यान् मनोविकारान् परिपोषयतीत्येवं गर्हमाणः प्लेटोमहोदयो हासरतिक्रोधादीन् भावान् स्फुटास्फुटं कीर्तयति[6] । अरस्तूमहोदयेनापि भावानामनु-कृतिः स्वीकृता । यत्तु दशरूपककारैः

१. रामायणे २।४० ।
२. रघुवंशे १४-७० ।
३. ध्वन्यालोके १-५ ।
४. रामायणे १-४-९ ।
५. नाट्यशास्त्रे ६-३८ ।
६. There is a principle in human nature, which is disposed to raise a laugh, ...and the same may be said of lust and anger

"आनन्दनिस्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः।
योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय ॥ इत्युक्तम्,

वृत्तिकृता च तत्र केचित्—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥

इत्यादिना त्रिवर्गादिव्युत्पत्तिमात्रं काव्यफलत्वेनेच्छन्ति तन्निरासेन स्वयं वेद्यः परमानन्दरूपो रसास्वादो दशरूपाणां फलं न पुनरितिहासादिवत् त्रिवर्गादिव्युत्पत्तिमात्रमिति दर्शितम्। नम इति सोल्लुण्ठम् ॥" इत्येवं विवृतम्।

तेन भामहमतं दूषितमिति भाति। तच्चिन्त्यम्। भामहेन न केवलं त्रिवर्गादिव्युत्पत्तिर्यावत् कीर्तिश्च आनन्दापरपर्याया प्रीतिश्च काव्यफलत्वेनेप्सिता। तस्माद् "व्युत्पत्तिमात्रं काव्यफलमिति" भामहमतमिति यदुक्तं तदयुक्तम्। तेनैव दर्शितस्पष्टशृङ्गारादिरसं रसवदलङ्कारतया मन्यते। प्रेयोरसवदूर्जस्विसमाहिताद्यलङ्कारप्रतिपादकैरुद्भटादिभिरन्यैरालङ्कारिकैरलङ्कारत्वेन रसादीनां काव्ये सद्भावः स्वीक्रियते। ध्वनिमपहस्तयता महिमभट्टेन काव्यस्य रसात्मकत्वं मन्यते (अष्टादशमेकोनविंशञ्च काव्यलक्षणम्)। ध्वनिवादिभिस्तु रसादिरूपे व्यङ्ग्ये प्रधाने सति रसादेः काव्यात्मत्वम्, अन्यत्र अप्रधाने सति अलङ्कारत्वम् अङ्गीक्रियते। "वाग्वैदग्ध्यप्रधानेऽपि रसः एवात्र जीवितम्" इत्यग्निपुराणात्। "दीप्तरसत्वं कान्तिः। दीप्ता रसाः शृङ्गारादयो यस्य स दीप्तरसः। तस्य भावो दीप्तरसत्वं कान्तिरिति[1] वामनेन कान्त्याख्यार्थगुणात्मनि काव्यात्मत्वेन स्वीकृतायाः पदरचनाया विशेषे रसः स्वीक्रियते। "वाक्यं रसात्मकं काव्य"मिति साहित्यदर्पणकारोक्ता रसस्य काव्यात्मत्वप्रतिष्ठा प्रसिद्धैव। अन्यैरपि काव्यतत्त्वविद्भिर्भावरसादीनां प्राधान्यमुद्घोष्यते। आह्लादकत्वप्रीतिरसभावादीनि काव्यकृतमनोविकारानुबन्धीनि। अनुकरणं काव्यमिति प्लेटोभरतादिभिरुच्यते[2]। क्रियावान् मानव एवानुकरणस्य विषयः। मानवव्यापारसूचिका च क्रिया। भावप्रकाशिका च क्रिया। तत एव "विकारो मानसो भावोऽनुभावो भावबोधकः"[3] इत्युच्यते। यच्च "जीवनालोचनं काव्यम्"[4] इति निगद्यते तदपि जीवनानुकरणं काव्यमिति वचस्येव पक्षपाति। जीवनस्य

and all the other affections of desire and pain and pleasure, which are held to be inseparable from every action. In all of them poetry feeds and waters the passions instead of drying them up.—Republic.

१. काव्यालङ्कारसूत्रवृत्तौ पृ० १५७।

२. परिभाषासङ्ख्या ४, ४५, ४६।

३. अमरकोषः।

४. मैथ्यू-आर्नल्डमहोदयः परिभाषासङ्ख्या ७९।

आलोचनं वानुकरणं वा तत्तद्भावोद्बोधकम्। एवम् सहृदयहृदयाह्लादकत्वं तत्तद्भावोद्वोधकत्वपूर्वकम्। तच्च सर्वसम्मतम्। अत्राथ उद्दिष्टानां विदुषां काव्यलक्षणानि अववेयानि। काव्यपरिभाषासङ्ख्या कोष्ठगता लिख्यते। वाल्मीकिः (१) कालिदासः (२) आनन्दवर्धनः (३) भरतः (४) अग्निपुराणकारः (५) विष्णुधर्मोत्तरपुराणकारः (६) भट्टेन्दुराजः (१०) अज्ञातः (१२) राजशेखरः (१५) महिमभट्टः (१८, १९) भोजः (२०) वाग्भटः (२३) जयदेवः (२५) विश्वनाथः (२७) शौद्धोदनिः (२८) जगन्नाथः (२९) क्षेमेन्द्रः (३४) बाणः (३५) रामचन्द्रगुणचन्द्रौ (३८) अभिनवकालिदासः (४१) गोवर्धनः (४२) शाङ्गंधरः (४३) परम्परा (४४) होरेस (४७), ला हार्प (४९), सैमुअल जान्सन (५०), केस्सारोट्टी (५१), लेसिङ्ग (५२), हर्डर (५३), शैले (५८), वर्ड्सवर्थ (५९), कोलरिज (६०), हैज़लिट् (६२), विक्टर ह्यूगो (६२) जौन केब्ल (६७) फिलिप सिडनी (७१) जौन मिल्टन (७२), जौन ड्राइडन (७३) डेनिस (७४) हड्सन (७५), जौन स्टुअर्टमिल (७७), लियोटाल्स्टाय (७८), एडगर-एलेन-पो (९१), कैसियर् (९२), जार्ज साण्टायन (९५), एमिली डिकिन्सिन (९७), वाट्स डन्टन (९८), जौन कीट्स (१०३) इति।

यथा रसस्तथा कल्पनापि काव्यस्य स्वरूपजननी। प्रायेण कविवर्णनं यथातथं न भवति। कविकल्पितमुत्पाद्यमितिवृत्तं प्रसिद्धमेव। वस्तुना यथा भवितव्यं तथानुकुर्याद्[1] इति प्रतिपादयन् अरस्तूमहोदयः काव्ये कल्पनां प्रतिष्ठापयति। एवमतिक्रान्तयाथार्थ्यं कविकर्म कल्पनामूलं खलु। यथार्थवर्णनस्य क्वाचित्कतया स्वभावोक्तेरलङ्कारता विहिता।

"तत्र लोकाश्रयं काव्यमागमास्तत्त्वशंसिनः"[2] इत्यादिवचनानुसारेण न हि केवलं याथातथ्यविचारणया कविः काव्ये प्रवर्तते, अपितु कल्पनयापि। कल्पनैव नियतिनियतात् संसारात् काव्यमपूर्वं विशिनष्टि[3]। उपमारूपकातिशयोक्त्याद्यलङ्काराः कल्पनामूलकाः। नवनवोन्मेषशालिनी प्रतिभा नूतनकल्पनाशक्तिः कवित्वस्य मूलम्।

'यत्तत्रानुचितं किञ्चिन्नायकस्येतरस्य वा।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्॥[4]

१. The poet being an imitator, must of necessity imitate one of the three objects—things as they were or are, things as they are said or thought to be, or *things as they ought to be.*—Poetics XXV. 2.

२. भामहालङ्कारः ५-३३ पृ० ३५।

३. नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥ काव्यप्रकाशस्य मङ्गलश्लोकः।

४. दशरूपके ३।२४ पृ० १५९।

इत्थमनुचितपरिहाराय कल्पनाश्रीयते। यशोहंसादाववदातत्वं प्रतापभृङ्गारादावरुणत्व-मित्यादिः कविसमयः कल्पनात्मैव। कल्पनात्मकत्वादेव काव्यमसत्यमिति प्लेटोमहोदया-दिभिः निन्द्यते[1]। अशब्दात्मकत्वाद् भावकल्पनयोरर्थात्मकता सुष्ठु प्रतीयते।

कल्पनां लक्षीकृत्य एभिर्विद्वद्भिः काव्यलक्षणान्यभिहितानि—अभिनवकालिदासः (४१) अरस्तू (४६) ला हार्प (४९) सैमुअल जौन्सन (५०) आडगष्ट विल्हेल्म श्लैगल (५७) शैले (५८) हैज़लिट् (६१) सर स्कौट वाल्टर (६९) शेक्सपीयर (७०) हड्सन (७५) लार्डमैकाले (७६) मैज्ज़ोनी (८१) अलेग्ज़ान्डर पोप (८२) पेट्रोनियस आर्बिटर (८३) प्लूटार्क (८४) वेन जौन्सन (८६) जार्ज ग्रैन्विल (८७) दिदेरो (८८) कँसियर (९२) इति।

काव्यस्य पदविन्यासात्मकत्वं विषयीकृत्य वामनहोरेसकोलरिजप्रभृतिभिः सुधीभिः काव्यलक्षणवचनान्यभिहितानि। विशिष्टपदरचनासु रीतिषु रेखास्विव चित्रं काव्यं प्रतिष्ठितमिति वामनः[2]। रेखाविन्यसनं चित्रमिव पदविन्यसनं काव्यम्[3]। मूकीभूतं काव्यं चित्रं, सशब्दनं चित्रं च काव्यम्[4] इत्युच्यते। माधुर्यादिगुणविशिष्टा पदरचना रीतिः काव्यस्यात्मेति वामनः। आङ्ग्लभाषायां "स्टाइल" (style) इत्यस्य शब्दस्य शैली इत्यर्थः। रचनाचारुतात्मा गुणः। पाश्चात्यैर्ध्वनिसाम्यार्थवाचकत्वेन राइम (rhyme or rime) इति शब्दः प्रयुज्यते। यथा greet-deceit (ग्रीट्-डीसीट्) is it-visit (इज़् इट्-विज़िट्) इत्यादि। सन्तुलितशब्दादिप्रयोगप्रकाशकत्वेन च रिद्म (rhythm) इति शब्दो व्यवह्रियते। "राइम" इत्ययमन्त्यानुप्रासालङ्कारेण संवदति, "रिद्म" इति च पदरचनाया वैशिष्ट्येन गुणेन सार्धं संवदति। गुणा माधुर्यादयो न केवलं निर्दिष्टवर्णविन्यासनिबन्धना अपि तु अर्थविषयका अपीति वामनादिभिः शब्दार्थगुणाः प्रतिपाद्यन्ते। मम्मटेन प्रत्युत आत्मनः शौर्यादय इव अङ्गिनो रसस्य अर्थविशेषस्य धर्मा गुणा इति निगद्यते। गुण इव लयः (=रिद्म इति) अपि अर्थ-शब्दग्रथननिबन्धनः। एवं गुणलययोः परस्परं साम्यं सुप्रतीतम्। तथा हि—वामने-नौजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः स्वी-क्रियन्ते। तत्र बन्धस्य गाढत्वमोजः, शैथिल्यं प्रसादः, मसृणत्वं श्लेषः, मार्गाभेदः समता, आरोहावरोहक्रमः समाधिः, पृथक्पदत्वं माधुर्यम्, अजरठत्वं सौकुमार्यं, विकटत्वम् उदारता, अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः, औज्ज्वल्यं कान्तिः इत्येवं दश शब्दगुणा मन्यन्ते।

१. Poetry is thrice removed from truth.
—Republic.

२. काव्यालङ्कारसूत्रम्।

३. As is picture so is a poem—Horace.

४. Simonide calls painting silent poetry and poetry speaking painting.
Plutarch—
Whether the Athenians were more warlike or learned.

एवमेव दश अर्थगुणाः स्वीक्रियन्ते । पाश्चात्यैश्च लयस्य विषये एवं विमृश्यते —

(i) "गद्ये पद्ये वा परिमिता वाक्सरणिर्लयः ।

(ii) सूक्ष्माऽनुभूतिर् विवक्षितमनोभावसङ्गत नियतकालिकं शाब्दमारोहं नियमयेत् ।

(iii) यदा श्रोत्रं सन्तुष्यति तदा लयोऽनुरूप इति वेदयामहे । श्रोत्रं हि मनोभावविशेषस्य प्रकाशनाय लयविशेषमपेक्षत इति सङ्क्षिप्तपरिशीलनेन परिज्ञायते ।... ... ... ... ... ...
हर्षोन्मादो द्रुतामुत्कटां सोत्कर्षां च (शब्द) गतिं गृह्णाति । शोकः परिव्याप्तो विलम्बितः सुदृढश्च भवति । ध्यानं हि विचारपूर्वकम् । रहस्यं द्वैधीभावश्चेति द्वयमस्पष्टं शिथिलं सस्पन्दं च भवति । बहुधा लयो मानवभावनया तथा सुदृढः संश्लिष्टश्च भवति यथा केनापि त्रिवेचनेन न विश्लिष्येत । तदित्थं सम्पूर्णपदार्थदृष्ट्या लयः कनिष्ठपक्षे क्रमानुरूपविन्यस्तं चिन्तनं सन्तुलितं पदसमूहं च समानमवलम्वते ।"
शब्दार्थोभयसम्वद्धयोरनयोर्गुणलययोरेकात्मता सुस्पष्टं प्रतीयते ।

तदित्थं काव्ये भावकल्पनागुणादेरस्तित्वं समुद्यते वादिभिः । एतत्तावद्द्रष्टव्यं गड्डरिकाप्रवाहेण छन्दोवद्धमेव नियतं काव्यमिति यन्मतं तत्क्षोदक्षममस्ति न वेति । गुणालङ्कारसंस्कृतस्य रसभावकल्पनादिप्रतिष्ठानस्य शब्दार्थमयस्य काव्यस्य गद्यात्मकताप्यस्ति न वेति कालान्तरे निरूपयिष्यते ।।

(i) [Rhythm is] measured flow of words and phrases in verse or prose.
—Concise Oxford Dictionary

(ii) A subtle feeling must govern the periodic progress of sounds in harmony with the emotions it is desired to express.

(iii) When the ear is satisfied, we feel that the rhythm is adequate, and a very brief study will show us that the ear demands different rhythms for an expression of different emotions.
... ... ... ... ... ... ...
Ecstasy, e.g. takes a quick, eager, rising movement; sadness is full slow and emphatic; meditation deliberate; often, indeed, the rhythm is so intimately linked with human feelings that no analysis can disentangle them... ...
... ... ... ... ... ... ... ... ... ...
Thus in the full meaning of the term rhythm depends at least as much on the orderly arrangement of the thought as on the balance of the words.

—Encyclopaedia Britannica

# भुक्तिवादे स्थायिभावाश्रयः

रेवाप्रसाद द्विवेदी

लोक इव काव्येऽपि रसमेव जीवातुभूतं मन्यन्ते भारतीयाः। तत्र लोकरसः प्रसिद्ध एव। काव्यरसः पुनर् 'विभावानुभावव्यभिचारिणां स्थायिभावेन सह संयोगान्निष्पद्यमान' उच्यते। अत्र केयं निष्पत्तिरिति प्रश्ने क्रमेण जातानामाचार्याणां चत्वारि दर्शनानि प्रतिष्ठन्ते—

१. उत्पत्तिरिति
२. अनुमितिरिति
३. अभिव्यक्तिरिति
४. भुक्तिरिति

चेति। एषु प्रथमं लोल्लटः, द्वितीयं शङ्कुकः, तृतीयम् आनन्दवर्धनः, तुरीयं च भट्टनायक उपजज्ञौ। लोल्लटः, शङ्कुकः, भट्टनायकश्चेति त्रयाणां मूलग्रन्था इदानीं यावदनुपलब्धाः। अभिनवगुप्तस्य ध्वन्यालोक-लोचनेऽभिनवभारत्यां चैतन्मतोल्लेखा एव तत्र प्रमाणम्। आनन्दवर्धनस्य तु ध्वन्यालोको दिष्ट्या लभ्यते। ततश्चाभिनवगुप्तानुसारेण लोल्लटः शङ्कुकश्चेति प्रथमौ द्वावप्याचार्यौ रामाद्यनुकार्यगतस्यैव स्थायिनो रसत्वं प्रतिपद्येते। आनन्दवर्धनः पुनः सामाजिकगत एव स्थायिनि रसत्व[1] मीक्षते। तदित्थम् आद्यानां त्रयाणामाचार्याणां मतेषु वर्गद्वयं स्थितम्। भट्टनायकः पुनः किंनिष्ठस्य स्थायिनो भुक्ति मनुत इति नास्ति स्फुटं लोचनात्, तदनुजाया अभिनवभारत्याश्च। काव्यप्रकाशकारोऽप्यभिनवपञ्जरशुकः, ततः सोऽपि तथैव संदिग्धवाक्[2]। रसगङ्गाधरकारस्य जगन्नाथस्यापि भट्टनायक-स्थायि-विषयेऽभट्टतैव[3] स्फुटा। ततश्च केचिदिमं लोल्लटशङ्कुकमतानुयायिनं मन्यन्ते, केचिच्चानन्दवर्धनमतानुयायिनम्। एवं च यस्य भुक्तिर्भवति तं स्थायिनं भट्टनायकमते केचिदनुकार्यगतमेव मन्यन्ते, केचिच्च सामाजिकगतमेव। काव्यप्रकाशे बालबोधिनीमारचितवान् वामनः प्रथममेव पक्षमाद्रियते, ब्रूते च—

> 'भट्टनायकस्यैष सारः— ...'काव्यार्थबोधोत्तरं भावकत्वव्यापारेण विभावादिरूपसीतादयो रामसम्बन्धिनी रतिश्च सीतात्व-रामत्व-

१. द्रष्टव्योऽस्माकं हिन्दीग्रन्थ 'आनन्दवर्धन' पृ० १६०।
२. काव्यप्रकाशस्य चतुर्थोल्लासारम्भे।
३. रसगङ्गाधरस्य प्रथमाननीये रसप्रकरणे।

संबन्धांशमपहाय सामान्यतः कामिनीत्व-रतित्वादिनैवोपस्थाप्यते। अन्त्येन भोजकत्वव्यापारेण तु उक्तरीत्या साधारणीकृतविभावादि-सहकृतेन सा रतिः सहृदयैरास्वाद्यते। अत एवासत्या अपि रतेरा-स्वादोऽलौकिकत्वादुपपन्न' इति।[1]

अत्र 'सा रतिः' इति यो वाक्यांशस्तस्य 'सा' इति तत्पदं रते रामादिनिष्ठत्वमेव पिशुनयतीति समनन्तरीयेण 'असत्या एव रतेर्' इति वाक्यांशागतेन 'असत्या' इति रतिविशेषणेन सुस्फुटम्। अभिनवगुप्तमताद् भट्टनायकमतस्य भेदं स्पष्टयतापि टीका-कृताऽनेनैतदेवोदीर्यते—

'पूर्वमते असत्या अपि रतेरास्वादः। अत्र तु वासनया स्थि-ताया एवेत्यनयोर्मतयोर्भेद इति।[2]

साम्प्रतिकेष्वपि भूयांस एतेनैव प्रतिष्ठन्ते पथा[3]।

काव्यप्रकाशटीकाकृत्सु मूर्धन्यतामभिपेदिवान् प्रदीपकारस्तत्रभवान् गोविन्द-ठक्कुरः पुनश्चरममेव पक्षमाद्रियमाणो भट्टनायकमतेप्यानन्दवर्धनमतवदेव भुज्यमानस्य स्थायिनः सामाजिकगतत्वमेव सूचयति। यथा चैतत् तदघोदत्तेन तस्यैव टीकाग्रन्थेन स्फुटम्—

'अन्यनिष्ठः स्थायी अन्यनिष्ठैरेव विभावादिभिः कथमन्येन भोक्तव्यः, अतिप्रसङ्गादिति चेदुच्यते—'शब्दात्मनः काव्यस्य त्रयो व्यापाराः 'अभिधा, भावकत्वं, भोजकत्वं च। तत्राभिधा निरन्तरार्थसान्तरार्थनिष्ठत्वेन द्विधा। भावकत्वं साधारणीकर-णम्। तेन हि व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते। साधारणीकरणं चैतदेव यत् सीतादिविशेषाणां कामिनीत्वा-दिसामान्येनोपस्थितिः, स्थाय्यनुभावादीनां च सम्बन्धिविशेषानवच्छि-न्नत्वेन। एवं द्वितीयव्यापारेण साधारणीकृतैर्विभावादिभिस्तृतीय-व्यापारसाहित्येन तथाकृत एव स्थायी भुज्यते।'[4] इति,

अत्र स्थायिनोऽन्यनिष्ठत्वं सामाजिकेतरनिष्ठत्वमेव। अत एवाभिनवगुप्तमतनिरूपणा-वसरेऽपि साधारणीकरणभूमिकामावध्नता विदुषानेन भूयोऽप्यन्यनिष्ठत्वमेवं स्मर्यते—

१. भण्डारकरप्राच्यशोधसंस्थानतः प्रकाशितस्य काव्यप्रकाशस्य षष्ठे संस्करणे पृ० ९१। वामनो वाक्यमिदं विवरणकारनाम्ना उद्धरति। ततस्तस्याप्ययमेव पक्षः।

२. तस्यैव संस्करणस्य पृ० ९४, पं० २.

३. Principles of Literary criticism in Sanskrit, page 249, last line of para II. प्रदीपकारो भट्टनायकं सांख्यदर्शनानुयायिनं ब्रूते। एतदेव मतस्यास्य मूलमाभाति।

४. काव्यमालातृतीयसंस्करणीये काव्यप्रदीपे पृ० ६६-६७.

'सामाजिकानां सूक्ष्मतयाऽन्तः स्थितो रत्यादिः स्थायी व्यज्यते । तथाप्यन्यनिष्ठैर्विभावादिभिः कथमन्यनिष्ठस्य स्थायिनोऽभिव्यक्तिः । उच्यते—तेषां साधारण्येन प्रतीतेः ।[1] इति

एवं च प्रदीपकारो भट्टनायकमतेऽपि स्थायिनः सामाजिकनिष्ठत्वमेव प्रतिपद्यते । सोऽयमुपस्थितो मतिभेदः । को न्वत्र सिद्धान्तपक्ष इति जिज्ञासिते पश्यामः—'सामाजिकगतत्वपक्ष एव सिद्धान्तपक्ष' इति । अत्र हेतवः [भुक्तिवादे स्थायिनोऽनुकार्यगतत्वरूपे] प्रतिपक्षे—

१. प्रमाणाभावः,
२. स्थितिविरोधः
३. क्रमभेदः
४. स्वपक्षहानिः
५. सम्प्रदायविरोधश्च

तत्र—

१. प्रमाणाभावः—

अभिनवगुप्तस्य लोचनम् अभिनवभारती चेति द्वयमेव हि भट्टनायकमतस्वरूपपरिज्ञाने प्रमाणम् । तत्र लोचनेऽभिनवो भट्टनायकमतमेवं प्रस्तवीति—

'न प्रतीयते, नोत्पद्यते, नाभिव्यज्यते काव्येन रसः, किन्त्वन्यशब्दवैलक्षण्यं काव्यात्मनः शब्दस्य, त्र्यंशता-प्रसादात् । तत्राभिधायकत्वं वाच्यविषयम्, भावकत्वं रसादिविषयम्, भोगकृत्त्वं सहृदयविषयमिति त्रयोंऽशभूता व्यापाराः । ...... तच्चैतद् भावकत्वं नाम रसान् प्रति, यत् काव्यस्य तद्विभावादीनां साधारणत्वापादनं नाम । भाविते च रसे तस्य भोगः[2] ।'

अत्र स्थायिनो नामापि नास्ति, का वार्त्ता तस्य स्व-परगततायाः । अभिनवभारत्या अप्येषैव स्थितिः । तत्रापि—

'काव्ये दोषाभावगुणालङ्कारमयत्वलक्षणेन, नाट्ये च चतुर्विधाभिनयरूपेण निबिडनिजमोहसङ्कटकारिणा विभावादिसाधारणीकरणात्मनाऽभिधातो द्वितीयेनांशेन भावकत्वव्यापारेण भाव्यमानो रसो...... भुज्यत[3]' इति ।

निष्कृष्टतमे भट्टनायकमते नास्त्येव स्थायिनश्चर्चा । अभिनवभारतीमिमां यथातथमनु-

१. तत्रैव ।
२. ध्वन्यालोकलोचनस्य चौखम्बाप्रथमसंस्करणे पृ० १८२-१८३. निर्णयसागरस्य चतुर्थे संस्करणे ८३-पृष्ठे ।
३. अभिनवभारती पृ० २७६-७ बडोदासंस्करणीयनाट्यशास्त्रप्रथमभागे ।

वदता[1] काव्यानुशासनविवेके हेमचन्द्राचार्येणापि न ह्येव स्मर्यते स्थायी। काव्यप्रकाशे—

> 'न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते, नोत्पद्यते, नाभिव्यज्यते, अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी.........भुज्यत[2]' इति।

स्मर्यमाणस्यापि स्थायिनः सामाजिकगतत्वमनुकार्यगतत्वं वा न स्मर्यते। सैव च स्थितिः पण्डितराजकृते रसगङ्गाधरे। तत्रापि—

> 'अभिधया निवेदिताः पदार्था भावकत्वव्यापारेणागम्यात्वादिरसविरोधिज्ञानप्रतिबन्धद्वारा कान्तात्वादिरसानुकूलधर्मपुरस्कारेणावस्थाप्यन्ते। एवं साधारणीकृतेषु दुष्यन्त-शकुन्तला-देश-काल-वयोऽवस्थादिषु, पङ्क्तौ पूर्वव्यापारमहिमनि तृतीयस्य भोगकृत्त्वव्यापारस्य महिम्ना निगीर्णयो रजस्तमसोरुद्रिक्तसत्त्वजनितेन निजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणेन साक्षात्कारेण विषयीकृतो भावनोपनीतः साधारणात्मा रत्यादिः स्थायी रसः[3]।'

इत्येवं स्मर्यमाणस्यापि स्थायिनः स्व-पर-गततया अस्फुटत्वस्यैव जागरूकत्वात्। न च 'भावनोपनीत' इति पदं 'भावना भावकत्वव्यापारः, तयोपनीतः परगतोऽपि सामाजिकानामनुभवविषयतामापादित' इति व्याख्यानेनानुकार्यगतत्वं स्थायिनः सुखं साध्यम्' इति वाच्यम्, 'भावना वासना तयोपनीतः सामाजिकान्तःकरणे विहितस्थितिः ततश्चानुकूलसामग्रीलाभेन स्मृतिन्यायेन जागरित' इत्येवं वैपरीत्येनाप्यस्य व्याख्यानसंभवात्। एवं भट्टनायकमते स्थायिनोऽनुकार्यगततायाः कल्पना नास्तितरामभिनवगुप्त-मम्मट-हेमचन्द्र-जगन्नाथ-वचनप्रमाणिता।

ननु 'तत्रभवानभिनवगुप्तो नाट्यशास्त्रस्य 'नाट्यरस'[4] इति शब्दं बहुधा विगृह्णन्—

> 'नाट्यं नाम नटगताभिनयप्रभावसाक्षात्कारायमाणैकघनमानसनिश्चलाध्यवसेयः समस्तनाटकाद्यन्यतमकाव्यविशेषाच्च द्योतनीयोऽर्थः। स च यद्यप्यनन्तविभावाद्यात्मा तथापि सर्वेषां जडानां संविदि, तस्याश्च भोक्तरि, भोक्तृवर्गस्य च प्रधाने भोक्तरि पर्यवसानान्नायका-

१. निर्णयसागरतः प्रकाशितस्य काव्यानुशासनस्य द्वितीयावृत्तेः ७३ पृष्ठे।
२. काव्यप्रकाशचतुर्थोल्लासारम्भे रसप्रकरणे।
३. रसगङ्गाधरस्य रसप्रकरणे।
४. नाट्यशास्त्रस्य षष्ठाध्यायगतायाः 'शृङ्गारहास्यकरुणा' इत्यस्याः कारिकाया व्याख्यायाम्। कारिकायामस्यां 'नाट्यरसा' इति पदं 'नाट्ये रसा' इत्यमपि मुद्रितम्। तदभिनवभारतीविरुद्धम्। लोचनतोऽपि तद् विरुद्धम्, तत्रापि ६।४ कारिकाव्याख्यायां बुद्ध्युपारूढस्याभिनवभारतीपदस्यास्य 'नाट्ये रसः', नाट्यमेव रसः 'नाट्याद् रस' इत्येवं विविधं व्याख्यातत्वात्।

भिधानप्रधानभोक्तृविशेष-स्थायि-चित्तवृत्तिस्वभावः । सा चैकचित्त-वृत्तिः स्व-परकीयमिति प्रतीयमानानन्तचित्तवृत्त्यन्तरशतविशेषिता लौकिक-गीत-गेय-पदादि-लास्याङ्ग-दशकोपजीवन-स्वीकृत-लक्षण-गुणा अलङ्कार-गीतातोद्यादिसम्यक्सुन्दरीभूत-काव्य-महिम-प्रयोग-मालाऽस्या-स्वविशेषाश्रयत्वात् प्रच्याविता अतएव साधारणीभूततया सामाजिका-नपि स्वात्म-सद्भावेन समावेशयन्ती तादात्म्यादेव चानुमानागम-योगि-प्रत्यक्षादिकरणक - तटस्थप्रमातृ प्रमेय—परकीय—लौकिकचित्तवृत्ति-विलक्षणतया निर्भासमाना परिमित-स्वात्मा-न्याश्रयता-निर्भासना-विरहाच्च लौकिकप्रमदादि-जनित-निजरति-शोकादिवत् तज्जहानादि-चित्तवृत्त्यन्तरजननाक्षमा तत एव निर्विघ्न-स्वसंवेदनात्मक-विश्रान्तिलक्षणेन रसनापरपर्यायेण व्यापारेण गृह्यमाणत्वाद् रस-शब्देनाभिधीयते । तेन रस एव नाट्यम् ।'[1]

इत्येवं स्पष्टमेव स्थायिनः परगतत्वमभ्युपगच्छतीति कथमुच्यते नास्ति प्रमाणमिति चेत्, साधु, त्रयमत्र गवेषयस्व [१] कस्येदं मतमित्येकम्, [२] एकचित्तवृत्तिरित्यत्र चित्तवृत्तिगतमेकत्वं तावत् किमिति द्वितीयम्, [३] 'विशेषाश्रयत्वात् प्रच्याविता, अतएव साधारणीभूततया सामाजिकानपि स्वात्मसद्भावेन समावेशयन्ती'—त्यत्र च कस्तावदयं समावेशः, किं च तदनन्तरोक्तं तादात्म्यमिति च तृतीयम् । तत्र स्पष्टमेवेदमभिनवभारतीसन्दर्भविदां 'नायं भट्टनायकस्य पक्ष' इति, ततश्चेदमपि न न स्पष्टं 'विद्यत एष स्वयमभिनवगुप्तस्यैव निजोऽभिप्राय' इति । एवं चाभिव्यक्तिवादिनोऽभिनवगुप्तस्यापि शिरसि पातनीय एषोऽनुकार्यगतस्थाय्यभिव्यक्तिसिद्धान्तदण्डः, ततश्च न नाऽपरित्याज्यस्तत्रभवान् ध्वनिप्रस्थानपरमाचार्य आनन्दवर्धनोऽपि परगतस्थायिरसत्त्वसहजग्घौ । सोऽयमुपप्लवः समयस्य । नास्ति चायं प्रतिपक्षस्याप्यभिमतः । एवं च व्यक्तिवादे समयभङ्गभियाऽवशमभ्युपेये स्थायिनः सामाजिकगतत्वे स्वात्मसद्भावसमावेशोऽपि नान्यः स्व-सजातीय-रत्यादिजागरणावेशौ विहाय । नाट्याद्धि रामादिगतानां येषां रत्यादीनां स्थायिनामनुभावा अभिनीयन्ते तेषां सद्भावः सामाजिकात्मन्यपि भवत्येव, लोकानुभवात् काव्यादिभावनाजनितसंस्काराद् वा । यश्च तत्र भेदः स विषयभेदौपयिकः । रामगता रतिः सीतां विषिणोति, सामाजिकगता रतिश्च सामाजिकप्रेयसीम् । एवं विषयरूपोपाधिमात्रकृत एवानुकार्य-सामाजिक-चित्तवृत्तिभेदः, निरुपाधिभावे पुनः स्थितमेवैतयोरभिन्नत्वम् । एवं च नाट्ये या रतिः साऽनुकार्यगतैव, या च रसे सा सामाजिकगतैव । अस्ति च तयोरभेदः । यश्चाभेदस्तदेव तादात्म्यम् । सेयं भेदाभेदलीला यत्सत्यं निगूढाशया ।

येयमत्रैक्यसंप्रतिपत्तिः स्व-पर-गतयोः स्थायिनोः सापि कलामात्रमेव महारस-गताया अभेदलीलायाः । महारसे हि रतिः, शोकः, क्रोधः हासः अन्येऽपि च

१. नाट्यशास्त्रबडोदासंस्करणप्रथमखण्डे पृ० २६६-६७.

स्थायिनोऽवगिव स्फुरन्ति। तत्रास्वादसमाधिरेव केवलो जागर्त्ति। अत एवानुपदोदाहृतसन्दर्भसमनन्तरतयैव स एव श्रीमानभिनवगुप्ताचार्य उदैरयत्—

> 'तेन रस एव नाट्यम्।......। ततश्च मुख्यभूतान्महारसात् स्फोटदृशीवासत्यानि वा, अभिताभिधानदृशीवोपायात्मकानि सत्यानि वा, अभिहितान्वयदृशीव तत्समुदायरूपाणि वा रसान्तराणि।'[1]

इति।

इत्थमकिञ्चित्कर एष शब्दप्रमाणोपन्यासप्रयासाध्यवसायः।

ननु 'नास्ति चेद् वचनम्, अनुमानमत्र प्रमाणतया स्वीक्रियेत। अस्ति हि भट्टनायकः सांख्यसिद्धान्तोपजीवितया ख्यातः। अत एव गोविन्दठक्कुरः काव्यप्रकाशप्रदीपे स्पष्टं ब्रूते—

> 'सत्त्वरजस्तमसां गुणानामुद्रेकेण क्रमात् सुखदुःखमोहाः प्रकाश्यन्ते। उद्रेकश्च स्वेतरावभिभूयावस्थानमिति सांख्यसिद्धान्तानुसारेण विवृणुत'[2] इति।

अस्ति च सांख्ये प्रकृतिनिष्ठानां गुणानां पुरुषकर्तृको भोगः प्रसिद्धः। ततश्चान्यनिष्ठानां गुणानामन्येनोपभुज्यमानतायामुपजीव्ये स्थितायामनुजीविन्यपि तत्स्थितौ का नु विप्रतिपत्तिः। तस्माद् 'भट्टनायकोऽनुकार्यनिष्ठस्थायिभोगवादी सांख्यानुयायित्वादि'— त्यनेनानुमानेन सुकरसंसिद्धिको भट्टनायकमते परगतवृत्तिभोगवादः। ततो नास्ति प्रमाणाभाव' इति चेद् भारतस्य राष्ट्रध्वजे हरितपट्टिकाप्यस्तीति भारतेऽपि पाकिस्तानमतानुयायिता कल्प्येत। न ह्येकदेशमात्रोल्लेखः सर्वांशानुहरणैककल्पनासाधकः। अस्ति च शास्त्रान्तरेष्वपि सत्त्वरजस्तमसामभ्युपगमः। तर्हि तेषामपि सांख्यतादात्म्यमभ्युपगम्येत, न्यायसाम्यात्। न चाभ्युपगम्यते तत्। न च मन्यते तत्र दोषः। किं च यदि भट्टनायकः सांख्यैकप्रतिनियतः किमित्यसौ भावकत्वमूरीकुरुते, सांख्ये तादृशव्यापारस्य कुत्राप्यदृष्टत्वात्। इदमप्यार्या विचारयन्तु लोचनेऽभिनवगुप्तो भट्टनायकं मीमांसकनाम्नापि कदर्थयति। का तत्र संगतिः। सांख्यस्य च मीमांसकत्वं मीमांसकस्य च सांख्यत्वं तादृशमेव यादृशं पटस्य घटत्वं घटस्य च पटत्वम्। प्रदीपकारस्यापि 'उद्रेक'-पदव्याख्यान एव संरम्भः। एवं चानुमानमप्यत्र पङ्गु।

ननु 'अर्थापत्ति' रस्त्यत्र प्रमाणम्। तथा हि लोचनाभिनवभारत्योर्भट्टनायकपक्षो लोल्लटपक्षानभ्युपगमेनैवानभ्युपगतत्वेन भूम्ना प्रतिक्षिप्तः। यथा चैतत् तदधोदत्ताभ्यां वचनाभ्यां स्पष्टम्—

१. नाट्यशास्त्रस्य बडोदासंस्करणीये प्रथमभागे २६७ पृष्ठे।
२. काव्यमाला-तृतीयसंस्करणीये काव्यप्रदीपे पृ० ६६।

१. काव्यं च रसान् प्रति भावकमिति यदुच्यते तत्र भवतैव भावनाद् उत्पत्तिपक्ष एव प्रत्युज्जीवितः ।[1] इति ।

२. 'काव्ये दोषाभाव......[2] भोगेन भुज्यते' इति, तत्र पूर्वपक्षोऽयं भट्टलोल्लटपक्षानभ्युपगमादेव नाभ्युपगत इति तद्दूषणमनुत्थानोपहतमेव[3] ।' इति ।

एवं चैतद्वचनान्यथानुपपत्त्या कल्प्यमेव भट्टनायकस्य लोल्लटपक्षानुगामित्वं परगतस्थाय्यनुभववादित्वं च । एवं चार्थापत्त्या प्रमाणयितुं शक्यत एवानुकार्यनिष्ठस्थायिभोगवादित्वं भट्टनायकस्येति प्रामाणान्तराण्यपि तत्रानुगुण्यभाञ्ज्येवाभ्युपगम्येरन् । ततो नास्ति प्रमाणाभावभीतिरि'ति चेत्, यत्किञ्चिदेतत् । 'उत्पत्तिपक्षे ये दोषास्त एव भुक्तिपक्षेऽपी' त्येवाचार्यस्यात्र विवक्षितम्, नाधिकं किञ्चित् । अतश्च 'भवतैवोत्पत्तिपक्षः प्रत्युज्जीवित' इत्यत्रैवकारः सङ्गच्छते । भवतैव येनोत्पत्तिपक्षः 'नोत्पद्यत' इति प्रत्याख्यातस्तेनैवेति वचोभङ्गी प्रत्युत वैपरीत्यसुभगैव स्थिता । नूनमेतैरेव वचनैर्विप्रलब्धानामेष पक्षो 'भुक्तिः परगतस्यैव स्थायिनोऽभिमते'ति । तदित्थं स्थित एवात्र प्रमाणाभावः ।

२. स्थितिविरोधः—

किञ्च भोग इति पदेन यदुच्यते कोऽसौ पदार्थः, का च तत्र स्थितिः । तत्र भोगः सत्त्वोद्रेकाज्जायमाना प्रकाशमय्या आनन्दमय्याश्च संविदो विश्रान्तिः । सा चैषा आत्माधिष्ठितमनोऽधिष्ठितेनेन्द्रियेण सह विषयस्यासन्निकर्षे न भवतीति स्थितिः । न च सम्भवति स परगतत्वेनाभिमतै रत्यादिकैर्भावैः, स्वविष्ठस्य धातुनिकायस्य व्यवधेः । अस्ति चायं सर्वजनीनः पक्षः, व्यतिरेकेऽनुभवोपप्लवप्रसङ्गात् । एवं च भोगश्च विषयस्य परगतत्वं चेति विप्रतिषिद्धम् । नो चेद् दिल्लीगतस्य राष्ट्रपतिभवनस्य भोगो मद्रनगरगतैरपि सुलभः स्यात्, सुलभश्च पाकिस्तानीयैर्बङ्गभूप्रयोगः । किमर्थं चानुष्ठीयेरन् यागाः, इन्द्रादिपदानामतद्गतानामपि भोगोपलम्भसंभवात् । किमर्थं च सर्वैरप्यहमहमिकया समुपार्ज्येरन्विषयाः, एकेनैव केनचिद्भाग्यभाजा समुपभुक्ते विषये तदतिरिक्तसकल-भाग्य-भाक्समुदयेन तत्सम्भोगस्योपलब्धुं शक्यत्वात् । हन्त, ईषत्कर एष पन्थाः कृतयुगोपपत्तेः । विघ्नितश्च भवता भगवतः स्वयम्भुवो युगान्तरनिर्मितिरभसः । तदित्थं सिद्ध एष चतुराननोऽचतुरश्चतुराणां भवतां पुरस्तात् ।

ननु 'साधाकरणीकरणेन परकीयत्वमपहन्यते, ततः कीदृशोऽत्रोपप्लव' इति चेत्, सत्यम्, किन्तु परकीयत्वापहननेनानेन परकायप्रवेशोऽपि सम्पाद्यते योगेनेवेति केनोच्येत । सामाजिकानां प्रवृत्तिं प्रति हि साधारणीकरणमुपायः, न तु परकायप्रवेशं प्रति । सामाजिका हि शिष्टरुचयः । अगम्यात्वकलुषिते विषये न ह्येव प्रसजेत तच्चेतः । सन्ति च शकुन्तलादयस्तादृशा विषयाः, तेषां परस्त्रीत्वेन प्रतीतेः । को नु शिष्टः सचेताः पर-

१. चौखम्बाध्वन्यालोक प्रथमसंस्करणीयस्य लोचनस्य १८८-८९ पृ०

२. त्यक्त एषोंऽश उद्धृत एवात्रैव पूर्वम् इति ।

३. बडौदानाट्यशास्त्रप्रथमभागे पृ० २७७ ।

स्त्रियं प्रति प्रवर्त्तेत नाट्यप्रयोगेऽपि। अप्रवृत्तौ चानारम्भपात्रतैवागता कलाशिल्पानाम्। एवं च निस्सपत्नोऽद्य विहितो विश्वविधाता, कविसचेतसौ निरतिशयनिर्माणास्वादाभ्यां विमुखीविधाय श्रीमता। सोऽयं रसिकानां भवतां देवं विक्रीय तद्यात्रोत्सवे प्रयासः, काव्यमुच्छिद्य तद्रसनिष्पत्ति विचारयताम्। सम्भवति हि साधारणीकरणेन परकाय-प्रवेशे का नामार्थवत्ता दुष्यन्तपत्नीत्वादीनामसाधारण्यसाधकानां प्रत्यूहभूतानां भावानां प्रच्यावनायाः, का चावश्यकता भगवतोऽष्टाङ्गयोगस्य। सोऽयं स्थितिविरोधो भुक्तिवादे स्थायिनः परगततायां स्वीकृतायाम्।

३. क्रमभेदः—

अस्ति चात्र भट्टनायकस्य मन्दबुद्धित्वप्रसङ्गः समुपार्जितप्रजागरः, क्रमभेदात्। भट्टनायक आनन्दवर्धनं प्रत्याचक्षाणोऽसकृदावेदितो लोचनकृता। यथैतत् तद् ध्वनि-लक्षणकारिकादिलोचनांशैः सुस्फुटम्। अस्ति चानन्दवर्धनः सामाजिकगत-स्थायि-व्यक्तिवादी। तदिदं रसनिष्पत्तिप्रक्रियासोपानपरम्परायास्तृतीयं सोपानम्। तदिद-मारूढवती संविद् भुक्तिवादिना भूयोऽपि द्वितीयं प्रथमं वा सोपानं प्रत्युन्मुखीक्रियत इति नास्ति किं क्रमभेदः।

अस्ति चायमारोहक्रमोऽभिनवगुप्तस्याप्यभिमतः। अतः एवासौ स्वमतोपक्रमे—

'ऊर्ध्वोर्ध्वमारुह्य यदर्थतत्त्वं
धीः पश्यति श्रान्तिमवेदयन्ती।
फलं तदाद्यैः परिकल्पितानां
विवेकसोपानपरम्पराणाम् ॥'[1]

इति आरोहणक्रममेव स्मरति, न त्ववरोहक्रमम्।
अस्ति च भाव्यभावकभावे भट्टनायकस्येव शिष्यतामुपगतो दशरूपकृद् धनञ्जयो '[2]रसः स एव स्वाद्यत्वाद् रसिकस्यैव वर्त्तनादि'ति ध्वनिकारवदेव रसस्य सामाजिकस्थायि-रूपतां स्वीकुर्वाणः। भट्टनायको हि व्यक्तिवादागतानेव दोषानपाचिकीर्षन् साधारणी-करणं, व्यञ्जनान्तरव्यतिरेकस्य च रसव्यञ्जनायां साधकं भोगमुपस्थापयति। नास्ति ह्यानन्दवर्धने साधारणीकरणप्रक्रिया, नास्ति च रसानुभूतिप्रक्रिया—

'काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥'

इत्येवं वाल्मीकेः स्वहृदयगतः संस्कारात्मना स्थितः शोक एव 'मा[3] निषादे'ति काव्य-वाक्यस्यात्मा, नास्ति च तत्कृते वाक्येऽत्र 'शोक' इति 'करुण' इति वा वाचक-प्रयोगः। अस्ति च करुणो रसोऽत्रानुभूतिसाक्षिकतयाऽप्रत्याख्येयत्वेन स्थितः। ततश्च

१. विश्वेश्वरः अलमिति पाठमादत्ते। स तुच्छः प्रसङ्गाननुगुणत्वात्।
२. दशरूपकस्य चतुर्थे प्रकाशे।
३. द्रष्टव्योऽस्माकमानन्दवर्धनः।

व्यञ्जनैकसाध्यतामेषोऽश्नुत इति ध्वन्यालोके रसस्य व्यङ्ग्यतायाः, तदुपजीव्यस्थायिभावस्य च प्रेक्षकैकनिष्ठताया एव संकेतितत्वात् । इत्थं ध्वनिकारैकसंशोधनपरायणस्य भट्टनायकस्य शङ्कुक-लोल्लटौ प्रति प्रतिप्रधावनं प्रेक्षावदीक्षाया अदाक्षिण्यमेव वस्तुतत्त्वानुवीक्षायाम् । सोऽयमुपस्थित एव प्रक्रियाक्रमभेदः ।

४. स्वपक्षहानिः—

अस्ति चात्र स्वपक्षहानिः । भट्टनायको हि व्यापारत्रयवादप्रवर्त्तकत्वेन प्रसिद्धः । अमी च ते त्रयो व्यापाराः—

१. अभिधा
२. भावना
३. भोजकत्वं चेति ।

यथोक्तमभिनवेनानुपदोद्धृते सन्दर्भे, कारिकाभ्यां चैताभ्याम्—

'अभिधा, भावना चान्या, तद्भोगीकृतमेव च ।
अभिधाधामता याते शब्दार्थालङ्कृती, ततः ॥
भावनाभाव्य एषोऽपि शृङ्गारादिगणो हि यत् ।
तद्भोगीकृतरूपेण व्याप्यते सिद्धिमान्नरः ॥[1]"

अत्र भावकत्वं नामासाधारण्यनिवर्त्तनेन सामाजिकान् प्रति विभावत्वादिसम्पादनं शकुन्तलादीनाम् । तस्य च फलं भोगः । भोगश्च स्वभोगायतनैकप्रतिनियतः । परगतभावानां ज्ञायमानतैकविभवत्वात् । ततश्च भोगस्य परगतभावविषयत्वेऽभ्युपगते नाधिकत्वं परिपद्यते ज्ञानात् । तच्च ताटस्थ्यताकलुषम् । तादृशं चैतत् प्रमाणान्तरादपि सुलभमनुमानरूपात् । तदर्थं भोजकत्वरूपस्य भावकत्वरूपस्य च व्यापारान्तरस्य कल्पना नातिप्रयोजनिका, शब्दार्थस्यानन्यलभ्यतायाः सर्ववादिसम्प्रतिपन्नत्वात् । एवं चानुमानेनैव सकलार्थसम्प्रत्यये को नु भेदो भट्टनायकस्य शङ्कुकात् । सेयमुपस्थिता भुक्तिवादे स्वपक्षहानिः ।

५. सम्प्रदायविरोधः—

सम्प्रदायविरोधश्चात्र । आचार्यपदाभिषिक्तस्य तत्रभवतोऽभिनवगुप्तस्य नास्त्येव भट्टनायकमतेऽपि स्थायिनो विषये परगतत्वधीः । अत एव भुक्तिवादे भूमिकाबन्धमाबध्नन्नसौ प्रागेव ब्रूते—

'ननूक्तं भट्टनायकेन—'रसो यदा परगततया प्रतीयते तर्हि ताटस्थ्यमेव स्यात्, न च स्वगतत्वेन रामादिचरितमयात् काव्यादसौ प्रतीयते'[2] इति ।

१. [क] अभिनवभारतीप्रथमभागे पृ० २७७ ।
[ख] हेमचन्द्रस्य काव्यानुशासने च पृ० ७३ विवेके ।
२. लोचनस्य पृ० १८०-८१ ध्व० २.४ कारिकालोचने ।

अत्र 'ताटस्थ्यमेव स्यादि'ति वचनोपन्यासः किंप्रयोजनः, यदि परगतत्वमेव भुज्यमानस्याभिमन्येत पर्यवसितौ। यतः पराङ्मुखः, यस्माच्च भीतः, प्रेक्षावान् सन्नप्यसौ किमिति तमेव पक्षं सिद्धान्ततया प्रचिख्यापयिषेत्। उपक्रममनुरुध्यैव ह्युपसंह्रियन्ते ऽधिकरणानि शास्त्रकृद्भिः। उपक्रमेऽत्र स्वगतत्वौन्मुख्यम्, उपसंहारे च परगतत्वपरायणतेति कोऽयं नयः। किं चोद्धृतपूर्वेषु वचनेषु महामाहेश्वरोऽभिनवगुप्तोऽपि 'भावकत्वव्यापारेण भाव्यमानो रसः' इति यस्य भावनां मनुते तं रसपदेनाभिधत्ते, न तु स्थायिपदेन। रसश्च सामाजिकैकवृत्तिः। नायं सिद्धावस्थामनापन्नो भावकत्वोत्तरं भावनाविषयतामासादयेत्। नास्ति च रसस्तादृशः, तस्य विभावादिजीवितावधित्वस्यैव प्रसिद्धत्वात्। ततश्चात्र रसपदवाच्यः स्थाय्येव। एवं च स्थायित्वं त्यक्त्वा रसपदोपादाने किं न्वनन्यथासिद्धं मूलम्, ऋते तस्य सामाजिकगतत्वाभ्युपगतेः।

किं च का नाम स्थायिता स्थायिनः। आ प्रबन्ध-समाप्तेः, आ महावाक्यार्थस्फोटाद् वा विरुद्धाविरुद्धभावान्तरानुपहन्यमानत्वे सति कुसुमकल्पेषु तेषु सूत्रात्मना विद्यमानत्वं हि भावविशेषस्य स्थायित्वम्[1]। अत्र पृच्छा। एतावन्तमवधिं यावत् किं नु तद् यदत्राधिकरणतामञ्चत्येतेषां समेषामेव भावानाम्। नानुकार्यः, तस्य वृत्तत्वात्, नानुकर्त्ता, तस्य रसभोगेऽनधिकृतत्वात्। यश्चात्र विद्यमानः, यश्चाधिकृतः स केवलः सामाजिक एव। एवं च सामाजिकान्तःकरणाधिकरणकतयैव हि कस्यचन भावस्य सञ्चारित्वं, कस्यचन च स्थायित्वम्। न च 'मिथ्याभूता एव सर्वेऽपि पदार्थाः काव्यनाट्ययोः, तयोः कविप्रतिभैकप्रसूतत्वात्। ततश्च का नु सत्यतागवेषणा तेष्विति वाच्यम्, अनुकार्यस्य पदार्थसार्थस्यासत्यत्वेऽपि तज्ज्ञानस्य, तादृशज्ञानजनितस्य द्रुतिविस्तरादेरनुभवस्य च सत्यतायाः सर्वजनीनत्वात्। अत एव युक्तवादी तत्रभवान् धर्मकीर्तिः—

> 'मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः।
> मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति[2]॥

इत्येवमभिनवादिनिखिलाचार्याभिमतं मणिप्रदीपन्यायमुदाहरन्। तदित्थं स्थायिन इदमेव स्थायित्वं यत् सामाजिकान्तःकरणे सुचिरं प्राधान्येनानुभूयमानत्वम्। तत्र का नु परगततार्थः।

नन्वेवं विभावा अनुभावा अपि ज्ञायमानतैकसाराः सन्तो रसौपयिका इति तेषामपि सामाजिकान्तःकरणैकवृत्तित्वमूरीक्रियेत? ओमिति ब्रूमः। शकुन्तलादिज्ञानान्येव हि विभावादीनि। अत एव तत्रभवान् धनञ्जयः—

> 'शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्।
> प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते॥[3]'

१. 'विरुद्धैरविरुद्धैर्वा०' इति कारिका, पण्डितराजस्य आप्रबन्धमभिव्यज्यमानपक्षश्च।
२. अभिनवभारतीप्रथमभागे पृ० २७३, व्यक्तिविवेके वक्रोक्तिजीविते, वेदान्तभाष्यादिषु च निपुणमिदं प्रमाणीक्रियते प्रमाणवार्त्तिककारिका।
३. वाक्यपदीये ३।७।५१।

इत्येतां वाक्यपदीयकारिकां प्रमाणीकृत्य—

'ज्ञायमानतया तत्र विभावो भावपोषकृत् ।'[1]

इति विभावस्य ज्ञायमानतैकसारतामभ्यधात्, अभ्यधाच्च—

'अनुभावो विकारस्तु भावसंसूचनात्मकः ।'[2]

इति, यत्र 'ज्ञायमानतये'त्यनुवर्त्तते । अत एवावलोककारस्तत्रभवान् धनिकोऽपि—

'अमीषां चानपेक्षितबाह्यसत्त्वानां शब्दोपधानादेवासादित-तत्तत्स्वरूपाणां सामान्यात्मनां स्वस्वसम्बन्धित्वेन विभावितानां साक्षाद्भावकचेतसि विपरिवर्त्तमानानामालम्बनादिभाव इति न वस्तुशून्यता'—[3]

इति विभावानामपि सामाजिकान्तःकरणविपरिवर्त्तमानतामनुवदति । किं च विद्यामहे काव्यस्य ज्ञानैकरूपतां साधितवन्तः[4] । ज्ञानं चात्र सामाजिकस्य पाठकत्वेन प्रेक्षकत्वेन वोपस्थितस्य । तदित्थं स्थितैव विभावादीनामपि सामाजिकान्तःकरणवृत्तिरूपता । अत एव च पण्डितराजोऽपि स्वप्नतुरगादीनामिव विभावादीनां साक्षिभास्यतामुदीरयति ।[5] प्रातिभासिका भावा इव चित्तवृत्तयोऽपि साक्षिचैतन्यभास्या उच्यन्ते । विभावादीनां साक्षिभास्यतायां तदुभयमप्यस्य सिषाधयिषितम् ।

एतेन स्थितमेतद् यद् भट्टनायकोऽपि ध्वनिकार इवैव सामाजिकान्तःकरणगतस्यैव स्थायिनो भोगं मनुते । सर्वोऽपि च दशरूप-तदवलोकयो रसविचारोऽमुमेव पक्षमेवं संक्षिपति—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः ॥
सुखदुःखादिकैर्भावैर्भावस्तद्भावभावनम् ।
वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया ।
वाक्यार्थः कारकैर्युक्तः स्थायी भावस्तथेतरैः ॥
रसः स एव स्वाद्यत्वाद् रसिकस्यैव वर्त्तनात् ।
नानुकार्यस्य वृत्तत्वात् काव्यस्यातत्परत्वतः ॥
द्रष्टुः प्रतीतिर्व्रीडेर्ष्यारागद्वेषप्रसङ्गतः ।
लौकिकस्य स्वरमणीसंयुक्तस्येव दर्शनात् ॥
धीरोदात्ताद्यवस्थानां रामादिः प्रतिपादकः ।
विभावयति रत्यादीन् स्वदन्ते रसिकस्य ते ॥

१. दशरूपकस्य ४।२-३, तदवलोकश्च ।
२. तत्रैव ।
३. तत्रैव ।
४. अलङ्कारसर्वस्वभाष्यप्राक्कथने ।
५. रसगङ्गाधरे रसप्रकरणे ।

ता एव च परित्यक्तविशेषा रसहेतवः ।
क्रीडतां मृन्मयैर्यद्वद् बालानां द्विरदादिभिः ॥
स्वोत्साहः स्वदते तद्वच्छ्रोतॄणामर्जुनादिभिः ॥
स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः ।
विकासविस्तरक्षोभविक्षेपैस्स चतुर्विधः ॥
पदार्थैरिन्दुनिर्वेदरोमाञ्चादिस्वरूपकैः ।
काव्याद् विभावसंचार्यनुभावप्रख्यतां गतैः ॥
भावितः स्वदते स्थायी रसः स परिकीर्त्तितः ।
लक्षणैक्यं विभावैक्यादभेदाद् रस-भावयोः ॥'[1]

एवं च सम्प्रदाय एवैष महात्मनां 'विभावादयः सर्वेऽपि भावाः सामाजिकान्तःकरण-वृत्तिस्वरूपा भवन्ती'ति । भुक्तिपक्षे परगततायामेषामुपारूढ एव संप्रदायविरोधः प्रति-पक्षस्य । अत एव च—

धाराधीशस्तभवान् श्रीभोजराजोऽपि स्वकीये शृङ्गारप्रकाशप्रबन्धे—

'आभावनोदयमनन्यधिया जनेन
यो भाव्यते मनसि भावनया स भावः ।
यो भावनापथमतीत्य विवर्त्तमानः
साहङ्कृते हृदि परं स्वदते रसोऽसौ ॥[2]

इत्येवं भावरसयोः सामाजिकैकवृत्तितामेव प्रतिपद्यते । एवं भावनापक्षो नास्ति भट्टनाय-कैकनियतः । दशरूपककृतः प्रभृति भोजराजं यावदप्यसौ भगवतेतिहासविष्णुना श्री-वत्सायितः । ततश्चास्य परम्परामुदीक्ष्य केवलमिदमेव निगमयितुं क्षमं 'भाव्यमानानां भुज्यमानानां च भावानां सामाजिकैकगतत्वमेव[3] भुक्तिवादिनां भावनावादिनां च भट्ट-नायकादीनामभिमतमि'ति ॥

१. दशरूपकस्य चतुर्थे प्रकाश ।
२. अस्माकं 'साहित्यसन्दर्भ' इति ग्रन्थस्य १६ पृष्ठे ।
३. अत एव रससिद्धान्तादिषु ग्रन्थेषु डा० नगेन्द्रप्रभृतय आधुनिका अप्यमुमेव पक्षं सिद्धान्तयन्ति ।

# भक्तिरसविषये काव्यशास्त्रीयचर्चा

सुरेन्द्रनारायणत्रिपाठी

यद्यपि संस्कृतवाङ्मये भक्तिपरकरचनाबाहुल्यं यत्र तत्र सर्वत्रोपलभ्यते परं संस्कृतसाहित्याचार्यैं र्भक्ती रसत्वेन नोररीकृता भरतेनाचार्येण तु भक्ति र्न रसरूपेण न च भावत्वेनाङ्गीकृता। कदाचित् तत्कारणं तत्कालं भक्तिपरकाभिनेयग्रन्थाभावो न्यूनता वा भवेत्। तस्य विवेच्यविषयस्तु प्राधान्येनाभिनेयसाहित्यमेवासीत्। दाम्पत्ये-तररतेश्चर्चामिव स नाकरोत्। सर्वप्रथमं भक्तेः काव्यशास्त्रीयां चर्चामाचार्यदण्डी कृतवान् परन्तस्याप्याचार्यंभरतो मान्योऽभूत्, अतस्तेन भक्ते रसत्वन्नाङ्गीकृतम्। आचार्येण दण्डिना भावात्मकपरिस्थितयोऽलंकारेषु परिगणिताः। रसोऽपि रसवद-लङ्कार एव प्रीतिश्च प्रेयोलङ्कारः। प्रेयोलङ्कारस्योदाहरणञ्च कृष्णपरकमेव प्रदत्तमतः प्रतीयते यत्प्रीतिः भगवद्विषयिणी प्रीतिरेव तथा च "प्रेयः प्रियतराख्यानम्"[1], भगवद्विषयिणी प्रीतिः लौकिक्याः प्रीतेरपेक्षया प्रियतरा।[2]

डॉ० वे० राघवन्नपि स्वकीये ग्रन्थेऽमुमेवार्थं मनुते।[3] आचार्यदण्डी श्रृंगाररतेः पृथक् प्रीतिं कथितवान् "प्राक्प्रीतिः दर्शिता सेयं रतिः श्रृंगारतां गता", रतिः श्रृंगार-विषयिणी प्रीतिश्च भगवद्विषयिणीति। दण्डिनो मते[4] भक्तिः प्रेयोलंकारे समाविशति। भरतमनुसरन् दण्डी अपि भक्तिं पृथग्रसत्वेन नोररीचकार। "इह त्वष्टरसायत्ता रस-वत्ता स्मृता गिराम्"[5]

रुद्रटः—

आचार्यो रुद्रटः दण्डिनः प्रेयोलंकारं प्रेयानिति अतिरिक्तरसरूपेणाह। शान्त-स्तु रुद्रटेनैव स्वीकृतः। तथा च—

> "स्नेहः प्रकृतिः प्रेयान् संगतशीलार्यनायको भवति।
> स्नेहस्तु साहचर्यात् प्रकृतेरुपचारसम्बन्धात्॥

१. काव्यादर्शे श्लो० २७५।
२. काव्यदार्शे २७६-२७९।
३. नम्बर आफ रसाज पृ० १०६-१०।
४. काव्यादर्शे पृ० २८१।
५. तत्रैव।

'निर्व्याजमनोवृत्तिः सनर्मसद्भावपेशलालापाः ।
अन्योऽन्यं प्रति सुहृदो व्यवहारोऽयं मतो यत्र'[1] ॥

परमत्र सुहृदां स्नेह एव रसः ।

अभिनवगुप्तः—

आचार्याभिनवगुप्तात्पूर्वं भक्ते रसत्वेन निरूपणस्य प्रयासोऽभवदित्यभिनवगुप्तकथनादेवानुमातुं शक्यते । परं स्वयमभिनवगुप्तो भक्तेः रसतां न स्वीचकार । तथा च—

अत एवेश्वर-प्रणिधान-विषये भक्तिश्रद्धे स्मृति-मति-धृत्युत्साहाद्यनुप्रविष्टेभ्योऽन्यथैवाङ्गमिति न तयोः पृथक् रसत्वेन गणनम्" ।[2]

उद्धृतोदाहरणं शान्तरस-निरूपणे समायातम् । भक्तेः पृथग् रसरूपेण गणनामकृत्वा शान्तरसस्य व्यभिचारिभावः सेति स्वीकृता । तच्च तस्य दार्शनिकपद्धत्यनुकूलमासीत् । अभिनवगुप्तः शैवदर्शनमनुमनुते स्म तत्र च प्रकृतिभूतः मुख्यो रसः शान्तोऽन्ये चाष्टौ विकृतिभूता रसाः[3] । यद्यप्यभिनवगुप्तो रहस्यवादेभक्तिमान् आसीत् परम् अद्वैतदर्शने भक्तिमत्तर आसीत् । भक्तिस्तु साध्यरूपेण द्वैते एव घटते । अतोऽभिनवगुप्तो भक्तेरन्तर्भावं शान्तरसस्य व्यभिचारिषु कृतवानिति । तथा च—

"स्वं स्वं निमित्तमादाय शान्ताद्भावः प्रवर्तते ।
पुनर्निमित्तापाये तु शान्त एव प्रलीयते[4] ॥

संचारिणस्त्रयस्त्रिंशतं भावानानन्दवर्धनाचार्यानुसारेणाऽभिनवगुप्तोऽप्याह भावध्वनिशब्देन । मम्मटेन न केवलं भक्तिविषयिणी रतिरपि तु दाम्पत्येतरसर्वा रतिः भावध्वनिशब्देन स्वीकृता ।

"रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भावः प्रोक्तः । आदिशब्दान्मुनिगुरुपुत्रादिविषया, कान्ताविषया तु व्यक्ता शृङ्गारः ।[5]

एवंच मम्मटेन भक्तिर्भावध्वनिविषयाऽभ्यधायि । हेमचन्द्रोऽपि मम्मटमनुमेने ।

"स्नेहो भक्तिर्वात्सल्यमिति हि रतेरेव विशेषाः ।
एवमादौ च विषये भावस्यैवास्वाद्यत्वम्[6] ॥

आचार्यविश्वनाथपण्डितराजजगन्नाथाभ्यामपि मम्मटमनुसृत्य भावध्वनावेव अन्तर्भावो भक्तेः कृतः, न पृथग् रसरूपेण । तथा च रसगङ्गाधरे—

"अथ कथमेत एव रसाः भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य

१. काव्या० रुद्रट० १५।१७६ ।
२. अभि० भा० १। पृ० ३४० ।
३. अभि० भा० १। पृ० ३४० ।
४. तत्रैव ।
५. का० प्र० उ० ४।३५ ।
६. काव्यानुशासने पृ० १०६ ।

